पर्यायपीठाधीशश्री विबुधेशतीर्थस्वामिपादानां कृपापोषिता

# मधुरवाणी

उडुपी श्रीकृष्णमठद्वारा संचालिता ।




नित्योद्यत्कलहोत्सुके ननु रमासत्यादिसत्यष्टके ।
त्रस्तः शैशवमेव मे वरमिति त्यक्त्वा गृहस्थाश्रमम ॥
स्त्री-तत्सङ्गि-नृणामपीह न करस्पर्शोऽपि मे स्यादिति ।
यत्यैकार्च्यमनोज्ञशैशववपुर्धारी स शौरिर्मुदे ॥

सम्पादकः प्रकाशकश्च
पं. पण्ढरीनाथाचार्यः गलगली
वार्षिकमूल्यम् (५) रूप्यपञ्चकम्
१९५७ जानेवरी (पुष्य) मासस्य सञ्चिका गदग

## मधुरवाण्याः संपालकाः

श्री श्री विबुधेशतीर्थाः अदमारुमठ, उडुपी — प्रतिवर्षं ५०५ रू. प्रदाः
श्रीमन्तः पद्मनाभराव वैद्य महोदयाः — ,, ५०५ ,,

प्रतिवर्षं १०१ रू. प्रदाः मधुरवाण्याः महासंरक्षकाः

श्री श्री पेजावरमठाधीश-स्वामिपादाः
श्री श्री द्वारकामठाधीश-श्री शङ्कराचार्यस्वामिपादाः
श्री श्री स्वादीमठाधीश-स्वामिपादाः
श्री श्री शृंगेरीपीठाधीशश्रीमद्-अभिनवभारतीतीर्थस्वामिपादाः
श्री श्री भंडारगिरिमठाधीश-स्वामिपादाः
श्री श्री कूडलीशृंगेरीमठाधीश-स्वामिपादाः
श्री सी. डी. देशमुख, विश्वविद्यालयायोगाध्यक्षाः

## विषयानुक्रमः

1957

# मधुरवाणी

२१ वर्षे ], श्री दुर्मुखि सं. पुष्यसञ्चिका [ दशमोऽङ्कः

## दशावतारस्तोत्रम्

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥१॥

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै–
रन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्खणमिथःप्रत्यूढपाथश्छटा–
डोलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥२॥

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोलपर्यङ्किका–
नित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥३॥

गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत–
ब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः
ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वम्भरा ॥४॥

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः
अव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचित्सहसा महासुरगृह(हे)स्थूणा पितामह्यभूत् ॥५॥

व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभट–
स्त्रैयक्षं मुकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥६॥

क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन् क्रमात्
अक्षत्रामपि सन्ततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम् ।
दत्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्
अब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥७॥

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥८॥

फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादयः
तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः
आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥९॥

नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमैः
भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्संगविशङ्कचंक्रमधुरापर्यायचर्याय ते ॥१०॥

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलङ्कषः ।
निश्शेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥११॥

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
(माया)रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥१२॥

## मासावतरणिका

येपन्तेऽत्र हि मास्यहो द्विजगणा दोषाकरो जृम्भते ।
म्लानोऽसौ सुमनोव्रजो रविरयं मन्दस्त्रयीविग्रहः ॥
दूष्यः शुक्रकुशिष्यवद् हिमजडः पुष्यो विशिष्येदृशः ।
दुष्कृत्यैः परिवर्जितः शुभविधौ दूर्मास इत्युत्तमैः ॥१॥

# रसोत्पत्तिः

ले. औदुम्बरीय नागेशशास्त्रिसूनुर्वासुदेवशर्मा,
श्रीशङ्कराचार्यसंस्कृतपाठशाला, धारवाड

अमरवाणीमयमधुरवाणीरसास्वादलोलुपाः पाठकाः! जा-नन्त्येव भवन्तः सुभाषितमिदम्– "भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती। तत्रापि काव्यं मधुरं तत्रापि च सुभाषितम्" इति। प्राचीना आधुनिकाश्च विद्वांसः 'संस्कृतं काव्यमयी भाषा' इति समुल्लिखन्ति। यस्मिन् विषये काव्यस्य प्रवेशो नास्ति, न किल तादृशो विषयः क्वचिदपि संस्कृतवाण्याम्। भगवान् वेदोऽपि काव्यमयवाण्या एव जनानुपदिशति धर्मतत्वम्। इतिहासपुराणेष्वपि अलङ्कारभासुरा शैली प्रोद्भासते। वेदान्तग्रन्था अपि सालङ्कारकाव्यमयवाण्यैव तत्वानि बोधयन्ति जिज्ञासून्। इतरभाषासु कदाऽपि गद्यवाङ्मयं काव्यमिति नोच्यते। परन्तु संस्कृतवाण्यां 'काव्यं द्विविधं पद्यं गद्यं च।' अतः गद्यमपि काव्यं भवितुमर्हति। परन्तु केवलकाव्यविषयविभागे ये ग्रन्थाः विद्यंते तेषाम्, इतरविषयकग्रन्थानां च अयं भेदः यत्, इतरशास्त्रीयग्रन्थाः तानि तानि तत्वानि समुपन्यस्यंति; काव्यं केवलं रसाविर्भावेण जनमनोरञ्जनमेव मञ्जुलसरलसरण्या विदधाति। तत्र काव्यस्य लक्षणं 'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथकविराजसंज्ञकेन साहित्यिकप्रवरेण प्रणीतम्। एतदेव सामान्यतया सर्वेषामपि साहित्यविदुषां सम्मतम्। साहित्यग्रंथेषु च अस्य रसस्य मीमांसा बहुप्रकारेण कृता अस्ति।

अन्यच्च, जानंत्येव सर्वेऽपि 'रसग्रहणम्' इति शब्दम्। रसग्रहणविषये च पाश्चात्यविदुषां काव्यविवेचनशैली पुरोगामिनीति मन्यंते केचित्। सर्वासु भाषासु, भारतीयास्वपि देशभाषा-

पाश्चात्यपद्धत्या एव रसग्रहणं क्रियते। संस्कृते तु काव्यविवेचनपद्धतिः साहित्यग्रन्थेषु, मल्लिनाथादिकृतव्याख्यासु च दृश्यते। परन्तु साकल्येन रसग्रहणपद्धतिः क्वापि न दृष्टिगोचरीभवति। तत्तत्पद्यानां गुणालङ्कारविवेचनं तु मल्लिनाथादिटीकासु सुष्ठु उपलभ्यते। परन्तु काव्यस्य प्राणभूतो यो, रसः तस्य विवेचनं क्वापि काव्यव्याख्यायां न दृश्यते। साहित्यग्रंथेषु उदाहरणादिद्वारा सुष्ठु समन्वयो दृश्यते। परन्तु यानि प्रसिद्धान्युत्तमानि च काव्यानि तान्यधिकृत्य साकल्येन क्वापि विवेचनं न दृष्टम्। तत्तु रसिकानामावश्यकम्। रसग्रहणशब्देन न केवलं रसस्यैव विमर्शः कर्तव्यः इति फलति, अपितु गुणालङ्कारनीतीनां, महाकाव्यनाटकेत्यादिकाव्यप्रभेदानामपि लक्षणद्वारा विवेचनम्, धीरोदात्तादिनायकादीनामपि काव्याधारं गृहीत्वा तथात्वविवेचनमित्यादि अपि रसग्रहणशब्देन गृह्यते। परन्तु 'अल्पारम्भः क्षेमकरः' इति न्यायेन मया रघुवंशद्वितीयसर्गस्यैव यथामति रसोपत्तिविचारः क्रियते। अयं च सर्गः संस्कृतसरस्वतीमंदिरं प्रवेष्टुमिच्छूनां देहली इव वर्तते। यतः संस्कृताध्ययनस्यारम्भे एतत्सर्गस्यैव पठनं बहुधा क्रियते।

सूर्यवंशीयो दिलीपनामकः राजा पुत्रप्राप्तेरुपायं ज्ञातुं पत्न्या सुदक्षिणया सह स्व-कुलगुरूणां वशिष्ठमुनीनामाश्रमं गतः। तत्र मुनिभिः गोसेवनं कर्तुमादिष्टम्। तदाज्ञानुसारं दिलीपः गोः सेवनं कृतवान्। गोसेवैव अत्र द्वितीयसर्गे वर्णिता। अन्ते च गौः प्रसन्ना। एवं, गोभक्तिरेव अत्र वर्तते। अयं गोविषयः दिलीपमनसि वर्तमानः रतिरूपभावः इत्युच्यते। रतिः अपि आस्वादयोग्या भवति। तस्मादयं रतिरूपभावः रस एव भवति। तत्र लक्षणं मया प्रदर्शिता साहित्यशास्त्रे। यथा—

'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोऽद्भुत इत्यष्टौ रसाः शांतस्तथा मतः । ' इति । रसस्य लक्षणम्– विभावैः, अनुभावैः, सात्विकभावैः, संचारिभावैश्च उज्ज्वलीकृतः स्थायी-भावो रसः । इति । तत्र प्रत्येकरसस्य स्थायिभावाः, विभावाः, अनुभावाः, सात्विकभावाः, संचारिभावाश्च भिन्नभिन्ना भवंति । विभावस्तु आलम्बनविभावः, उद्दीपनविभावः, इति द्विविधो वर्तते । तत्रोदाहरणार्थं शृङ्गाररसः गृह्यते । अत्र नायकनायिक-योः यः प्रेमा, स एव रतिः इत्युच्यते । अयमेव च शृङ्गाररसस्य स्थायिभावः । स्थायिभावो नाम तस्मिन् रसे आरम्भतः अन्त-पर्यन्तं यः अविचलः तिष्ठति सः भावः । भावो नाम भाव्यते-प्रकटीक्रियते, रसः येन सः । एते हि स्थायिसात्विकानुभावव्य-भिचारिभावाः रसाविर्भावं प्रति हेतवः सन्ति । अत एव ते भावाः इत्युच्यन्ते । तथा चोक्तम्–

'सञ्चारिणः प्रधानानि देवादिविषया रतिः ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥'

इति । अत्र शृङ्गारे नायिकनायिका विषये वर्तमाना या रतिः सः स्थायिभावः । नायकः अथवा नायिका आलम्बनविभावः यतः रसाविर्भावस्य आलम्बनं–आधारः, नायकः नायिका च भवति । रतिरूपस्थायिभावस्य चन्द्रकमलादिरम्यवस्तुदर्शनेन उद्दीपनं भवति अतः चन्द्रोदयः उद्दीपनविभावः । लज्जा, आल-स्यम् इत्यादयो व्यभिचारिभावाः । अक्षिनिमीलनं, मुखावनम-नम् इत्यादयः अनुभवस्वरूपाः अनुभावाः । रोमाञ्चाः, देहप्रक-म्पः इत्यादयः सात्त्विकभावाः । एतेषां विभावादीनां साहाय्येन उज्ज्वलीकृता रतिरेव शृङ्गाररसः भवति । अत्र च सर्गे गो-विषये दिलीपस्य मनसि यत्प्रेम, या रतिः, वर्तते; सः भाव

रस एव । केचित्तु 'अयं भक्तिरसः' इति वदन्ति । तस्य स्थायिभावश्च 'देवादिविषया रतिः' इति कथयन्ति । तन्मतेनास्मिन्सर्गे भक्तिरसः । ये तु रसमेनं न मन्यन्ते तेषां मते रतिरूपभाव एव रसः । तदुक्तम्—

**'रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**
**सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः ।'**

अतः भावः अपि रसः । अनेन यथा—

**'आस्वादवद्भिः कवलैस्तृणानाम्० सम्राट् समाराधनतत्परोऽभूत् ।'**

इति पञ्चमे पद्ये, पुनः—

**'स्थितः स्थितामुच्चलितः प्रयातां० छायेव भूपतिरन्वगच्छत् ।'**

इति षष्ठे पद्ये अनुभावः वर्तते । गोः अनुसरणमेव सः अनुभावः । अनुभावो नाम कार्यमेव । 'प्रदक्षिणीकृत्य पयस्विनीं तां' इत्येकविंशेऽपि पद्ये अनुभावः स्फुटीभवति । त्रयोविंशे श्लोके 'दोहावसाने पुनरेव दोग्ध्रीं भेजे,' चतुर्विंशे च 'सुप्तामनुसंविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत्' अत्रापि अनुभाव एव । अत्र च नन्दिनीनाम कामधेनुकन्या धेनुः, आलम्बनविभावः । द्वाविंशे वत्सोत्सुकयाऽपि तया पूजा स्वीकृता । तस्मादनयोः गोविषयरतिभावस्योद्दीपनं— तद्विषये दृढश्रद्धा— सञ्जाता । सप्तविंशे श्लोके च 'सा दुष्प्रधर्षा मनसाऽपि हिंस्रैः' इत्यनेन धेनोः सामर्थ्यविषये राज्ञः मतिः स्फुटीभवति । मतिश्च व्यभिचारीभावः व्यभिचारी भाव सञ्चारीभावः इत्युच्यते । 'इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम्' इति चतुःपञ्चाशे श्लोकेऽपि मतिः व्यभिचारी भावः, सिंहाय कथनं तु अनुभावः । एकोनषष्ठतमे श्लोके— 'सन्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य' इत्यत्र रतिप्रकर्ष एव । तथैव पुत्रकामेन आतुरोऽपि सः मुनौ प्रसन्नायामपि यदेवं वदति—

'वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥'

तदेतत्कस्य वा रसिकस्य हृदयारविन्दं न विकासयति ? अष्टषष्टितमे पद्ये 'प्रहर्षचिन्हानुमितं प्रसादं प्रियायै शशंस' इत्यत्र तु सात्विकभावो व्यंग्यः। राज्ञः शरीरे प्रहर्षस्य नाम आनन्दस्य चिन्हानि आसन् । तत्र च रोमाञ्चाः इत्यादयः सात्विकभावाः भवन्ति । एषामपि अनुभावेषु एवान्तर्भावो भवेत् । परन्तु चमत्कारविशेषेण पृथग् गृहीतम् । सात्विकभावाश्च—

'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभंगोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलया इत्यष्टौ सात्विकाः स्मृताः ॥'

इत्युक्ताः । 'रस्यते इति रसः' इत्यनेन अयं धेनुविषयकरतिभावोऽपि रसो भवति । अतः द्वितीयसर्गस्थवाक्यानां रसात्मकत्वात्काव्यत्वमपि लक्षणरीत्या सुष्ठु समन्वितं भवतीति रसविद्धौरेयैः परीक्ष्यमिति प्रार्थ्य विरम्यते । इति शिवम् ।



# सुन्दरी सन्ध्या

ले. कु. विनोदिनी नागर, बी. ए. एल. टी., मथुरा

सत्ययुगस्य सुखसौंदर्यमयी संध्या आसीत् । भगवान् भास्करः स्वकरान् संक्षिप्य देव्यै संध्यायै आत्मनः रक्तिमानं दत्वा अस्तगिरिश्यामशिखरं जगाम । क्षितिजस्थिता सुन्दरी सन्ध्या सहसा एव जहास । तत्परः अभवत् महामुनिः वशिष्ठः कुटीरात् निस्सृत्य अस्ताचलगामिनं सूर्यं प्रणम्य सन्ध्यावन्दनार्थम् । हासध्वन्याकृष्टेन सहसा एव परावर्तितमुखेन मुनिना दृष्टा कुटीरद्वारे स्मयमाना रक्तनयना अरुन्धती ।

"देवि, संध्यावन्दनावसरे अस्मिन् अस्य अनुचितहासस्य किं कारणम् ?" इति पृष्टं तेन ।

रक्तकपोला अरुन्धती इत्यवदत्— "महर्षे, क्षमस्व । काचित्

पूर्वजन्मस्मृतिः एव मे हासकारणम् ।" आशंकया अज्ञातक्रोधस्य तत्रैव आतिष्ठत् सा मूर्तिः इव । महामुनिः अपि समाधिस्थः अभवत् ।

समाधिविरामे पुनः अरुन्धत्याः पूर्ववार्ताविषये जातकुतूहलः मुनिः ध्यानेन तत् ददर्श—

* * * *

पुञ्जीकृत्य सर्वान् देवगुणान् ब्रह्मणा एका अनुपमसौंदर्यशालिनी कन्या निर्मिता । संध्या इति नाम्ना विभूषिता च । सा पितुः आज्ञया वनं गत्वा दुष्करं तपः आचरितवती । क्षुत्पिपासादिभिः शिथिलांगी, तपोऽग्निभिः दीपितानना सा एकदा वने ददर्श ब्रह्मर्षि वशिष्ठम् । तस्मात् दिनात् प्रभृति तमेव पतिं प्राप्स्यामि इति इच्छया अत्यंतघोरे तपसि स्थिता अभवत् ।

गतेषु च सहस्रेषु वर्षेषु तया एकदा आकाशमार्गाद् आयान् दृष्टः भगवान् विष्णुः । मुकुलीकृत्य करौ निश्चला सा ताम् एव दिशम् अवलोकयंती सुचिरम् अतिष्ठत् ।

"प्रसन्नः अस्मि ते भक्त्या वत्से वरं याचस्व ।"

"भगवन् ! संसारे अस्मिन् मां नित्यां कुरु ।" संध्या अयाचत ।

"तथास्तु ।" प्रसन्नेन विष्णुना कथितम् "अहर्निशं निर्लिप्ता त्वं संध्याविलासरूपेण इह जगति नित्यं स्थास्यसि । अन्यं अपि वरं याचस्व ।"

भगवच्चरणयोः पतित्वा संध्या वदति स्म— "कस्य अपि कलुषितदृष्ट्या दूषितम् इमं कलेवरं त्यक्तुं इच्छामि । नूतनशरीरेण च महर्षिवशिष्ठस्य च चरणसेवां च कामये ।"

"तथास्तु" इति उक्त्वा भगवान् अंतर्हितः । संध्या च अरुन्धतीरूपेण अवततार ।

* * * *

मुनिः नयने उन्मील्य पृष्ठेस्थिताम् अरुंधतीं दृष्टवान् स्मयमानः ।

विदितभावया अरुंधत्या तस्य चरणयुगं गृहीत्वा कथितम्— "देव, तव वन्दनार्था अहम् न सन्ध्यावन्दनार्थं त्वम् ।"

दूरक्षितिजस्थिता संध्या अपि सस्मिता आसीत् ।



# अनुशासन-पालनम्

ले. श्री मधुसूदन झा, महामहोपदेशकः, समीक्षाचक्रवर्ती, विद्यावाचस्पतिः

पुरा शङ्खश्च लिखितश्चेति द्वौ भ्रातरौ तपस्विनावास्ताम्। अलर्कपुत्रो महर्षिजैगीषव्यस्तयोः पिताऽऽसीत्। हिमालयराजकन्यानां अपर्णैकपर्णैकपाटलानां पार्वतीत्याख्यया प्रसिद्धानां सर्वकनिष्ठैकपाटला पार्वती तयोर्माताऽऽसीत्।

तयोश्च पृथग् पृथगावसथौ सैतवाहिन्या नद्या उपकूलेऽनतिदूरे सन्निविष्टौ पुष्पफलवृक्षैरमणीयावास्ताम्। तत्र कदाचिल्लिखितो यदृच्छया शङ्खाश्रममाजगाम। शङ्खस्तु क्वचिन्निष्कांतस्तदानीमाश्रमे नासीत्। भ्रात्रा हीनमाश्रमं दृष्ट्वा तदागमनप्रतीक्षया तत्र स्थातुमीहमानः स कालयापनेच्छया तदाश्रमवृक्षेभ्यः फलान्याहृत्य तत्रैव स्थित्वा विश्रब्धं भक्षयामास। भक्षयत्येव च तस्मिन् शङ्खोऽप्याश्रममाययौ। फलानि भक्षयन्तं लिखितं दृष्ट्वा शङ्ख उवाच। कुत एतानि फलान्याहृतानि? अत्र वा केन हेतुना भक्षयसीति। ततोऽयं लिखितो ज्येष्ठ भ्रातरमुपसृत्याभिवाद्य च प्रहसन्निव विनयेनोवाच– इत एवैतानि मया गृहीतानीति। ततस्तीव्ररोषाक्रान्तः शङ्खोऽब्रवीत्– अदत्तान्येतानि फलानि स्वयमाददानेन त्वया स्तेयमिदमाचरितम्। तेनादत्तादानपापेनाक्रांतोऽसि, स त्वं गच्छ राजानमासाद्य स्वं पापमुक्त्वा पापनिष्कृत्यै तेन कृतं चौरदण्डं धारय। ततस्ते स्वधर्मोऽनुपालितः स्यादिति। इत्थमुक्तः स लिखितः सत्वरं तद्वचनाद् राजानं सुद्युम्नमाजगाम। आगतं च लिखितमन्तपालेभ्यः श्रुत्वा सहामात्यः पद्भ्यां बहिरभ्यागत्याभिवाद्य च तेन सहान्तः प्रविवेश। आसनादिभिरभ्यर्च्य सत्कृत्य च तं पप्रच्छ। किमर्थमागमनं तन्मे शंसेति। लिखित उवाच–

नैव स्पृष्टानि गुरुणा फलान्याहृत्य चाश्रमे ।
भक्षितानि मया राजन्! तत्र मां शाधि मा चिरम् ॥

सुद्युम्न उवाच–

पुष्पमूलफलादीनि वन्याऽपरिवृतानि चेत् ।
निषेधलक्षणाऽभावे गृण्हानो नापराध्यति ॥

लिखित उवाच–

एवमेतद् यथात्थ त्वं किन्तु पापानुषङ्गि यत् ।
तदपापमपि त्याज्यं धर्मशुद्धिमभीप्सता ॥
एवमाह मम भ्राता ज्येष्ठः शङ्खो गुरुर्मम ।
तथैव श्रूयते धर्मगाथाऽप्यत्र पुरातनी ॥
"ईशावास्यमिदं स(र्वं) यत् किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद्ध(न)म ॥"

सुद्युम्न उवाच–

प्रमाणं चेन्मतो राज्ञा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्यादेव भूपतिः ॥
स भवानभ्यनुज्ञातो मया दोषाद् विमोचितः ।
कामानन्यानतो ब्रूहि करिष्यामि हि ते वचः ॥

इत्थं राज्ञा छन्द्यमानोऽपि स लिखितो भृशं पातका(द्) भीतो दण्डमेव वरयामास । ततः सुद्युम्नस्तस्य करौ प्रच्छेदया(मा)मास । धृतदण्डस्तु लिखितो भ्रातरं शङ्खं गत्वा क्लेशादा(द) उवाच– धृतदण्डोऽस्मि भगवन्! इदानीं मेऽपराधं क्षन्तुमर्हसि

शङ्ख उवाच–

न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥
त्वं सैतवाहिनीं गत्वा तर्पयस्व यथाविधि ।
देवान् ऋषीन् पितृंश्चाऽथ मैवाधर्मे मनः कृथाः ॥

इत्थं शङ्खाज्ञया लिखितो नदीं सैतवाहिनीमवगाह्य तर्प(ण)णार्थं प्रचक्रमे । नद्यामवगाहमानस्य तस्य पुनः प्राग्वद् बाहू प्रादु(र्भू)रास्ताम् । विस्मितः स तौ बाहू भ्रातुर्दर्शयामास । शङ्खोऽब्रवीत् तपसा मया कृतम् । मा ते तत्र विशङ्काऽभूत् । दैवं हीदम(त्र) विहितं द्रष्टव्यम् ।

कवितार्किकसिंह–सर्वतन्त्रस्वतन्त्र–वेदान्तदेशिक-

## श्री वेङ्कटनाथाचार्यः

श्रीवैष्णवमतस्य प्रसारकाः श्री रामानुजाचार्याः स
मतस्य प्रसाराय ७४ शिष्यान् नियोजयामासुः । ते सर्वे सि
नाधिपतय इति कथ्यन्ते । अस्यामेव प्रमुखशिष्यपरम्पराय
वेङ्कटनाथाचार्यः अनन्तसूरि-तोतारम्बानाम्नोः दम्पत्योः पुत्र
समजनि । अस्य जन्म १३२५ विक्रमसंवत्सरे काञ्चीपुरस
थूपिलनाम्नि ग्रामे समभवत् । तिरुपति वेङ्कटेशस्य घण्ट
वेङ्कटनाम्ना अवातरत् इति ख्यातिः वर्तते । तस्य सर्वोऽपि
द्याभ्यासः काञ्चीपट्टणे मातुलस्य वादिहंसाम्बुवाह इति ख
स्य आत्रेय रामानुजस्य समीपे एव समभवत् । विंशतिवर्षदे
एव असौ वेङ्कटनाथः सर्वशास्त्रपण्डितः सरस-सुन्दरकाव्य-न
कलाकुशलश्च अभवत् । अनेन कन्याकुमारीतः काशीपर्यंतं स
दिग्विजयः कृतः । असंख्या एव प्रतिवादिनः पराजिताः । '
तार्किकसिंहः' 'सर्वतन्त्रस्वतन्त्रः' 'वेदान्तदेशिकः' इत्य

---

लिखित उवाच–

यदीदृशं ते तपसो वीर्य्यमस्ति, तर्हि कस्मान्नाहं पूर्वमेव पूतः कृतः, किमर्थमहं राजसदनं प्रेषित इति ।
उवाच–

**एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।**
**इत्थं पूतः स नृपतिस्त्वं चापि पितृभिः सह ॥**
**गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।**
**उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥**
**उत्पथं प्रतिपन्ने तु ब्राह्मणेऽपि त्वयी दृशे ।**
**दण्डेन शासनं कर्तुमधिकारोऽस्ति भूपतेः ॥**

इत्थमाश्वस्तो लिखितः पूतः प्रसन्नः स्वाश्रमं जगाम ।

नेका एव पदव्यः प्रशस्तिपत्राणि बिरुदभूषणानि च अयाचता-
तेन स्वयं लब्धानि ।

अयं वेङ्कटनाथः कतिपयकालं तिरुपाहिन्द्रपुरे स्थित्वा हस्राधिकान् छात्रान् उद्ग्रन्थान् अध्यापयामास । तत्रैव 'गरुड-ञ्चशती' 'अच्युतशतक' 'रघुवीरगद्य' प्रभृतिकृतीः निर्ममे। त्र एकदा कश्चन राजदूतः वेङ्कटनाथं कूपं खनितुमादिदेश । ल्पीयस्येव अवधौ वेङ्कटनाथः कूपं निखन्य तत्र मरुप्राये नि-तोयेऽपि प्रदेशे अमृतरुचि जलं उदतरङ्गयत् । सा वेङ्कटवापी स्मिन् ग्रामे अद्यापि वर्तते । ततः सः तिरुकोयलूर ग्रामे कंचि-कालं उषित्वा पुनः काञ्चीपुरम् आगतः । तस्य उत्तरदेश-दिग्विजयानन्तरं श्रीरङ्गपट्टणनिवासिनः पण्डिताः सस्नेहम् ागन्तुम् उपनियन्त्रयामासुः । तदिच्छानुसारं श्रीरङ्गपट्टण एव दांतदेशिकः चिरम् उवास ।

१३६७ वि. संवत्सरे अल्लाउद्दीनः मलिककाफरं दक्षिण-शदण्डयात्रार्थं प्रेषयामास । तदा सः मधुरापट्टणाभियानसमये ध्ये मार्गे श्रीरङ्गपट्टणमपि लुलोठ, तत्रत्यान् बहूनेव पंडितान् मार, मूर्तीः बभञ्ज, ऐश्वर्यं जहार, अबला बलाञ्चकर्ष, वित्रग्रन्थाश्च ददाह, हिन्दूवेदं जिहिंस, देवालयदर्शं दनीध्वं-ीति स्म च । अस्मिंश्च हिंसासत्रे श्रीवैष्णवमतस्य आधारस्तं-ायमानः श्री सुदर्शनाचार्योऽपि बलिः बभूव । सः यवनानां अभि-ोगसमये एव कथञ्चित् सन्धि संसाध्य वेङ्कटदेशिकम् उपगम्य स्य हस्ते स्वस्य श्री भाष्यटीकां श्रुतप्रकाशिकां आत्मनः द्वौ ुत्रौ च निक्षिप्य 'ममेदं अपत्यत्रयं भवता रक्षणीयम्' इति वदत् । किमिदमिति सास्रं पृच्छत्येव वेङ्कटदेशिके आगता एव ामदूताः यवनभताः । निगृहीतः सुदर्शनाचार्यः, निर्दयं निषदितश्च

कृपाकृपणैः कृपाणधारया । परं वेङ्कटदेशिकस्तु वेङ्कटेशकृपया चापल्येन तदपत्यत्रयं कथञ्चित् गृहीत्वा हतपातितशवराशौ शववद् निलिल्ये । तेषां नरपशूनां ततो निर्गमनानन्तरं सः मैसूरराज्यस्य सत्यकालग्रामम् उपागच्छत् । तत्रैव तयोः बालकयोः उपनयनं विधाय तौ शास्त्राणि अध्यापयामास । श्रीरङ्गपट्टणात् यवनानां निर्गमनाय सः श्रीरङ्गनाथं संप्रार्थयामास । स एव अभीतिस्तव इति सुप्रसिद्धिं प्राप्तः । तत्र च द्वित्रपद्यानां रस आस्वाद्यतां रसिकैः–

"कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैः
तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् ।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥"

"सकृत्प्रपदनस्पृशामभयदाननित्यव्रती
न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।
यथोक्तकरणं विदुस्तव तु यातुधानादयः
कथं वितथमस्तु तत् कृपणसार्वभौमे मयि ॥"

विजयनगरस्थापनाचार्याः श्री विद्यारण्यमुनीश्वराः श्री वेङ्कटनाथस्य बाल्यस्नेहिताः । यवनानां दक्षिणदेशे दुराचारप्रतिभटनार्थं तैः तुङ्गातीरे स्वतन्त्रसाम्राज्यमेव संस्थापितम् । तदा करुणाशालिनः ते माधवमन्त्रीश्वराः स्वबाल्यस्नेहितं सहाध्यायिनं च वेङ्कटनाथं सबहुमानम् आकारयामासुः । यथेच्छं ऐश्वर्यमपि प्रयच्छाम इति आश्वासयामासुः । परं विरक्तशिखामणिः वेङ्कटेशदेशिकः राजभोगप्रदायकं जीवमित्रस्यापि आव्हानं नाङ्गीचकार । दारिद्र्ये दैन्ये विषीदन्नेव वेङ्कणमणिः प्रतिसंदेशमेवं प्रेषयामास–

"नास्ति पित्रार्जितं किञ्चित् न मया किञ्चिदर्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥"

इति । तस्य गृहस्थाश्रमिणोऽपि ईदृशं वैराग्यं निस्पृहतां च दृष्ट्वा सन्यासिश्रेष्ठा अपि विद्यारण्याः विस्मिताः समभवन् ।

पुरस्ताच्च कदाचित् श्री विद्यारण्यस्वामिनां तथा माध्व-पीठाधीश अक्षोभ्यतीर्थयतीनां च वादविवादसमये कः मध्यस्थः भवेदिति विचारः प्रस्तुतः । तदा विद्यारण्यस्वामिपादैः श्री वेदान्तदेशिकाचार्यस्य नाम सूचितम् । वेङ्कटविद्यारण्ययोः सातीर्थ्यमजानद्भिः, परं वेङ्कटदेशिकस्य निरपवादपाण्डित्ये सुदृढं विश्वसद्भिः श्रीमदक्षोभ्यतीर्थैरपि स्वसम्मतिः प्रदर्शिता । तदा उभाभ्यामपि श्रीपादाभ्यां सादरमुपनिमन्त्रितः वेदान्तदेशिकः । प्राग् विद्यारण्यमुनेः राजातिथ्यं स्वीकर्तुमामंत्रितोऽपि अनागतः वेङ्कटनाथः अनयोः उद्दण्डपण्डितपुण्डरीकयोः प्रचण्डे वादकोलाहले निर्णायकत्वमङ्गीकर्तुं सानन्दमाजगाम । प्रवृत्तः वाक्यार्थः 'तत्वमसि' वाक्यमधिकृत्य । चिरकालीनसंघर्षानन्तरं विद्यारण्यस्य बाल्यस्नेहितोऽपि अद्वैतसुहृदपि श्रीमान् वेंकटनाथदेशिकमणिः तद् वेदान्तवादांते एवमुदघोषयत्—

**"असिना तत्वमसिना परजीवप्रभेदिना ।**
**विद्यारण्यं महारण्यमक्षोभ्यमुनिरच्छिनत् ॥"**

इति । तथा तत्रस्थितान् प्रति 'मत्सन्निकृष्टमथवा मतमाश्रयध्वम्' अर्थात् माध्वमतमेव स्वीकुरुध्वमित्यादिदेश । अमुमेव श्लोकं 'विद्यारण्य एव विजशाली' बभूवेति वादिनः अद्वैतिनः एवं पठन्ति—

**"असिना तत्वमसिना परजीवैक्यबोधिना ।**
**विद्यारण्योऽतिनैपुण्यादक्षोभ्यमुनिमच्छिनत् ॥**

इति । अस्त्वियं वाद-विवादकथा । परं प्रकृते उभयोः प्रबलपीठाधिपत्योः विवादे माध्यस्थ्यस्वीकरणं वेदान्तदेशिकस्य सर्वसंप्रतिपन्नं पांडित्यं निष्पक्षपातवृत्ति सर्वशास्त्रनदीष्णतां द्वैताद्वैतविशि-

ष्टाद्वैतमतत्रयेऽपि विशिष्टवैदुष्यं च द्योतयति । कर्णाटक सिंहासनस्थापनाचार्याः 'इदं ब्राह्ममिदं क्षात्रमिति' सर्वसमर्थ षड्दर्शनाचार्याः श्री विद्यारण्यस्वामिनः एव तः, द्वैतसिद्धांतप्रति ष्ठापकानां श्री मध्वाचार्याणां साक्षात् शिष्यायमाणाः माध्व मतीयमूलसिंहासनाधीश्वराः अक्षोभ्यतीर्थाश्च अन्यतः, तयो यतिपुङ्गवयोः वाक्यार्थकोलाहले गृहस्थाश्रमिणः निष्किञ्चनस्य दूरदेशस्थस्य वेङ्कटदेशिकस्य निर्णायकपदस्वीकरणं तस्य अनन्य सामान्यामेव योग्यतां प्रथयति । अत एव तस्य अयत्याश्रमिणोऽपि 'सर्वतन्त्रस्वतन्त्रेति यतिराज-राजहंसैकयोग्याऽपि पदवी औ चित्यपूर्णा सार्थकाचेति सर्वैरपि प्रदत्तासीत् ।

एभिः यतीश्वरैः १२१ ग्रन्थाः कृताः । तत्र भूयांसः वि शिष्टाद्वैतसिद्धान्तप्रतिपादकाः काव्यनाटकस्तोत्रात्मकाश्च ग्रंथा इदानीं प्रतिवादिभयंकर श्री अण्णङ्गराचार्यैः कांचीपुरीतः वेदांत देशिकग्रन्थमालायां प्रकाशिता एव । एवं शताधिकग्रन्थकर्ता रोऽपि राजाधिराजमान्यतां प्राप्तवन्तोऽपि श्री वेङ्कटनाथार्य सौजन्यमूर्तयः विनयालंकृता एव सर्वदाऽसन् ।

**विनयो हि भूषयति सर्वरसम्**

एकदा एकः श्रीवैष्णवः विद्वान् देशिकाचार्याणां स्वभाव परीक्षार्थं तान् स्वगृहं उपनिमन्त्रयामास । तत्प्रार्थनानुसारं त गृहमागताः वेङ्कटनाथाः । सः स्वगृहद्वारि स्वपादरक्षां बुद्धिपूर्वक मेव अतूतुलत् । तां दृष्ट्वा मन्दं हसन्त एव देशिकाः—

**"कर्मावलम्बकाः केचित् केचिद् ज्ञानावलम्बकाः ।**
**वयं तु हरिदासानां पादपद्मावलम्बकाः ॥"**

इत्युक्त्वा तां पादुकां शिरसा स्पृष्ट्वा एव अन्तरागच्छन् । त यजमानः एव पश्चात्तापेन क्षमां ययाचे ।

### आशुकवित्वं वागीशत्वं च

एकदा श्रीरङ्गनाथदेवालये पण्डितप्रवराणां एका परिषत् संमिलिता आसीत् । तत्र एकस्यां रात्रौ यः सहस्रश्लोकान् निर्माति तस्मै 'कवितार्किकसिंह' इति पदवी प्रदेया इति निरधारि । तथा सर्वत्रापि समघोषि च । तामेतां पण्डितमण्डली घोषणां श्रुत्वा: भूयांस एव कवयः तत्र उपस्थिताः । एकस्यां रात्रौ केचन शतं केचन द्विशतं केचन चतुःशतं श्लोकान् विरच्य रात्रिरेव व्यरंसीदिति विफला उदतिष्ठन् । परमेक एव कवीश्वरः पञ्चशतसंख्याकान् श्लोकान् विरच्य सर्वानपि विस्मापयामास । परं वेङ्कटनाथार्यः रात्रेः चरमयामे आगत्य तत्रैव सर्वेषामपि पंडितानां समक्षमुपविश्य एकस्मिन्नेव प्रहरे सहस्रं श्लोकान् सद्यो रचयामास । अवसरपठितेष्वपि तेषु पद्येषु विद्यमानं विद्योतमानं हृद्यतमं भावं अर्थवैशिष्ट्यं रसास्वाद्यतां च दर्शं दर्शं मुग्धैः तैः सर्वैः स्निग्धैः तत्काव्यलुब्धैश्च विदग्धैः एककण्ठेन वेङ्कटनाथः 'कवितार्किकसिंह' इति उदघोषि । तदेव एकप्रहरप्रबद्धं पद्यसहस्रं अद्य पादुकासहस्रनाम्ना प्रसिद्धिं प्राप्य पण्डितप्रवरप्रशस्तिं समनुविन्दति । अनेन पादुकासहस्रेणैव स्फूर्तिं लब्ध्वा श्री वेङ्कटाध्वरिः लक्ष्मीसहस्रं नाम महाकाव्यं जग्रन्थ । आरम्भे च सः अमुं वेंकटनाथं वेंकटाध्वरिः—

> **"पद्यानां दशभिर्यदस्तुत शैतस्त्वत्प्रेयसः पादुकाम् ।**
> **त्रैय्यन्तार्यगुरुः परो हयमुखस्तत्रास्य को विस्मयः ॥"**

इत्यादिभिः वेंकटनाथं देशिकमणिरिति सम्बोध्य सः 'परो हयमुख' एवेति बहुगौरवपूर्वकं निर्दिशति । समुचितं चैतत् प्रशंसनं एकजन्मन्यपि कर्तुमशक्यं एकस्मिन् प्रहर एव रसभावनैर्भर्यभरीजृम्भमाणं श्लोकसहस्रं निर्मिमाणं महाकविं प्रति । एवमल्पीयस्येव अवकाशे विरचितेऽपि तस्मिन् श्रीरामपादुकावर्णनमये

पादुकासहस्रे क्वचिदपि रसापचयः असाधुशब्दप्रयोगो वा छन्दोभङ्गो यतिभङ्गो वा व्याकरणदोषो वा आलङ्कारिकप्रमादा वा औचित्यराहित्यं वा कस्यापि पुरोभागिनोऽपि अन्वेषयतोऽपि नैव दृग्गोचरतामुपयांति । यत्र यत्र निक्षिप्यते सविमर्शं चक्षुः तत्र तत्र अमन्दं सुधाबिन्दव एव स्यन्दन्ते । आलोक्यतामियं प्रस्तावपद्धत्यां वेङ्कटनाथस्य तीव्रतरा पादुकाव्यावर्णनेच्छा–

"यदेष स्तौमि त्वां त्रियुगचरणत्रायिणि ततो
महिम्नः का हानिस्तव मम तु सम्पन्निरवधिः ।
शुना लीढा कामं भवतु सुरसिन्धुर्भगवती
तदेषा किंभूता स तु सपदि सन्तापरहितः ॥"

"मितप्रेक्षालाभक्षणपरिणमत्पञ्चषपदा
मदुक्तिस्त्वय्येषा महितकविसंरम्भविषये ।
न कस्येयं हास्या हरिचरणधात्रि क्षितितले
मुहुर्वात्याधूते मुखपवनविष्फूर्जितमिव ॥"

नूनमीदृशेषु परःशतेष्वेव उपमाप्रभेदेषु वेङ्कटदेशिकः न केवलं कालिदासं तुलयति, किन्तु शब्दप्रौढिम्ना पदबन्धबन्धुरताचारिम्णा च अधिकं च कञ्चन विच्छित्तिविशेषं कलयति । श्रूयतामस्य काव्यरङ्गमवतितीर्षोः श्रीरामपदत्रं स्तोतुमुपक्रममाणस्य पूर्वप्रार्थनाप्रणाली–

"निस्संदेहनिजापकर्षविषयोत्कर्षोऽपि हर्षोदय-
प्रत्यूढक्रमभक्तिवैभवभवद्वैयात्यवाचालितः ।
रङ्गाधीशपदत्रवर्णनकृतारम्भैर्निगुम्भगिराम
नर्मास्वादिषु वेङ्कटेश्वरकविर्नासीरमासीदति ॥"

"रंगक्ष्मापतिरत्नपादु भवतीं तुष्टूषतो मे जवात्
जृम्भंतां भवदीयशिञ्जितसुधासन्दोहसन्देहदाः ।
श्लाघाघूर्णितचन्द्रशेखरजटाजंघालगंगापय-
स्त्रासादेशविश्रृङ्खलप्रसरणोत्सिक्ताः स्वयं सूक्तयः ॥"

अयि मान्याः कियतो वा अस्य आशुकवेः वागीशकवेश्च पद्यानि

न्यायशास्त्रस्य आद्यद्रष्टा

# अक्षपादः

" चक्षुष्मन्तश्चरणकमले चक्षुषा श्रोत्रवन्तः
श्रोत्रे भूमेर्जलधितनये जन्मवन्तोऽपि न स्मः ।
वक्त्राण्यासन् भगवति न षट् पञ्च चत्वारि वा नः
कस्मादस्मान्नहसतु जनस्तोष्यतस्त्वद्गुणौघम् ॥ "

इत्यनेन वेङ्कटाध्वरिः लक्ष्मीसहस्रप्रस्तावनायां भगवतीं इंदिरां वर्णयितुं स्वस्य अशक्तिं ख्यापयिष्यन् " नाहं चरणे चक्षुष्मान्, न वा चक्षुषा कर्णवान्, नापि भूश्रोत्रे अर्थात् वल्मीके उत्पत्तिमान्, हन्त कथं तर्हि त्वां स्तोतुं शक्नोमि? इति पृच्छति। पर्यायेण 'तव महिमानं गातुं चरणे चक्षुष्मान् नाम अक्षपादः, अथवा चक्षुषा कर्णवान् नाम सर्पाधिराजः आदिशेषः, वाल्मीकिर्वा समर्थ इति सूचयति । अत्र वेङ्कटाध्वरिः अक्षपादं आदिशेषसमकक्षापन्नतया ततोऽपि प्रथमस्थाने उल्लेख्य बहु मानयति। स चायं सर्वतार्किकचक्रचूडामणिः अक्षपादः कदा वा भारतवर्षमिममलञ्चकारेति न सुनिश्चितम् अवगम्यते । परं ईसवीयप्रथमशतके एव रचितायां 'न्यायवार्तिकतात्पर्यटीकायाम्' 'न्यायमञ्जर्यां' च विश्वविलक्षणप्रेक्षाप्रथितः अक्षपाद एव न्यायसूत्राणां कर्ता इति निर्दिष्टं वर्तते । ततः ईसवीयचतुर्थशतके समुत्पन्नः न्यायभाष्यकर्ता वात्स्यायनोऽपि न्यायसूत्राणां सुसङ्गतविरचयितृत्वेन अक्षपादमेव संस्मरति ।

---

उदाहरामः । नूनमस्य सर्वाण्यपि पद्यानि आस्वाद्यान्येव विद्यन्ते। एवमेव अस्य इतरकृतयोऽपि एवमेव हृद्या एव सन्ति । मुख्यतया तस्य संकल्पसूर्योदयं हंससंदेशं सुभाषिततनीवीं यादवाभ्युदयं च अङ्कांतरे विमिमृक्षामः ।

### गौतमः अक्षपादश्च भिन्नौ अभिन्नौ वा

परं पद्मपुराणस्य उत्तरखण्डे २६३ अध्याये तथा स्कंद पुराणशिवपुराणयोः उमासंहितायां च गौतमनामा पण्डितवरेण एव न्यायशास्त्रकर्ता इति कथितं वर्तते। न्यायसूत्रवृत्तिकार विश्वनाथोऽपि न्यायसूत्राणि गौतमसूत्राणीत्येव निर्दिशति। किं श्री विद्यारण्ययतींद्रास्तु स्वसर्वदर्शनसंग्रहे न्यायशास्त्रं 'अक्षपाद दर्शनम्' इत्येव समुल्लिखंति। अथेदानीं न्यायसूत्राणां विरचयित किं गौतमः उत अक्षपादः इति शंका उदेति। तदत्र अनंतयज्व पितृमेघसूत्रटीकायां अक्षपाद एव गौतम इति अभिप्रेति। ड श्रीकण्ठशास्त्रिणो (M.A. D.Lit) पि अक्षपादगौतमसूत्राणीत्ये न्यायसूत्राणि सम्बोधयन्ति।

परं वस्तुतस्तु आन्वीक्षिकीकर्ता गोतमः अथवा गौत तथा अक्षपादश्च भिन्नौ एव पंडितौ। एकः मिथिलावासी अन् काठियावाडगतप्रभासतीर्थनिवासी च। न्यायसूत्रेषु १ प्रमा २ प्रमेय, ३ वाद, ४ अवयव, ५ अन्यमतपरीक्षा इति पञ्च विषयाणां मीमांसा वरीवर्ति। तत्र गौतमेन आन्वीक्षिक्यां प्र चीन-ब्राह्मण-बौद्ध-जैनवाङ्मयेषु विवेचितपूर्वा अपरिक्वपदशाय मेव वर्तमानाः विशिष्टां निष्कृष्टिमननुप्राप्ताः प्राथमिका ए त्रयोविषयाः पुनर्विशिष्य विवेचिताः, इदमित्थमिति निर्धारित पूर्णपरिष्कारमनुलम्भिताश्च। अक्षपादः पुनः इतरविषय अर्थात् प्रमेय-अवयव-अन्यमतपरीक्षादिकान् तर्ककर्कशमेधया स विविच्य नवीनामेव न्यायपरिष्करणप्रणालिकां प्रादर्शयत्। तेन आन्वीक्षिकीविद्या न्यायसूत्र, न्यायशास्त्र, तर्कदर्शनेत्यादिप अभिलप्यमानतां समगमत्। तत आरभ्यैव न्यायशास्त्रं तस्म देव अक्षपाददर्शनमित्येव अभिधीयते।

## पौराणिको अक्षपादः

ब्रह्माण्डपुराणे अक्षपादस्य जन्मकथा एवं वर्तते । पूर्वं [सो]मशर्मा नाम महापण्डितः सदाचारसम्पन्नश्च तपस्वी ब्राह्मणः [आ]सीत् । सः साक्षाद् रुद्रांशसम्भूत एवेति सर्वैरपि जनैः सप्र[श्र]यं पूज्यते स्म पर्युपास्यते स्म च । एकदा सः श्रीकृष्णस्य लि[…]णक्षेत्रे सरस्वतीनद्याः पूर्वतीरवर्तिनि प्रभासनाम्नि पुण्यस्थले [प]वित्रे देवालये स्थित्वा पुत्रप्राप्तये प्रखरां तपश्चर्यां अतनोत् । [त]स्य च प्रदीर्घतपोमहिम्ना बुद्धिबलेन भूतलबृहस्पतीयमानौ द्वौ [कु]मारौ समुत्पन्नौ । तौ एव अक्षपाद गौतमौ" इति ।

## अक्षपादनामरहस्यम

तत्र च अक्षपादः तीक्ष्णतरतर्ककर्कशप्रतिभाबलेन तत्वा[र्था]न् मेधायामेव निर्मथनन् सर्वदापि चिन्तामग्नः ध्यानलीनः [त]दिध्यासनतत्परश्च वर्तते स्म । तस्य बाह्यप्रपञ्चपरिज्ञानमेव [लु]प्तमिव आसीत् । 'पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् [ग]च्छन् स्वपन् श्वसन् अपि सः हन्त तत्वचिन्ताक्रान्त एव अव[र्त]त । मार्गे गच्छतोऽपि तस्य शिरःपिण्डे तर्कपरिष्करणविषया [ए]व सवेगं भ्रमन्ति स्म । तस्मात् पुरः आयन् निर्यन्नपि पुमान् [प]दार्थो वा तस्य नैव दृष्टिगोचरा भवन्ति स्म । जना एव तस्य [सा]र्वकालीनतत्वसमाधिं ज्ञात्वा मार्गं मुञ्चन्ति स्म, पश्वश्वान् [नि]वारयन्ति स्म, शिलाशकलकण्टकादीनपाकुर्वन्ति स्म । तस्य [दे]हपोषणाय काले काले तं विचारपरवशमेव स्वयं आनाय्य [स्ना]नपयित्वा वस्त्राणि धारयित्वा रसकवलान् भोजयन्ति स्म । एवं [ग]च्छता कालेन कदाचित् अयं विचारजडः पंडितपरिवृढः कमपि [ग]हनतरं विषयं विचारयन्नेव गृहात् प्रस्थितः । तत्वचिन्ताचक्र[मा]रूढ एव ग्रामाद् बहिरपि समागतः । शिरः कपाले बुद्धिः

विविधान् विषयान् मथ्नाति स्म, पादौ च चलतस्स्म, मस्तिष्कं भ्रमतः स्म, विचारः प्रवर्तते स्म, तस्य देहः पुरः प्रयाति स्म च। एवं वनमार्गे पुरः प्रसरतः अन्तर्मुखस्य तस्य विक्षिप्तव्यक्तेः पुरस्तात् मृत्युरिव व्यात्ताननः महान् कूपः प्राप्तः। तं पश्यन्नपि तत्व-तल्लीनतया न पश्यन् स सचक्षुरन्धः सहसा तत्र पतितः क्षत-विक्षताङ्गः मुमूर्षावस्थामेव अनुप्राप्तः। तदा देवाः 'माभूत् सर्वात्मना कलियुगे ज्ञानलोपः' इति करुणया तं उज्जीवयामासुः। उद्धारयामासुः। उपरि आनयामासुश्च। न पुनरेवं सः कुत्रापि पतेदिति तस्य सदैव दक्षे विचक्षणे च द्वे चक्षुषी चरण एव प्रा-यच्छन्। तेन देवदत्ताभ्यां पादप्रक्षिप्ताभ्यां दक्षचक्षुर्भ्यां स सचिन्तोऽपि विचारमग्नोऽपि स्वच्छन्दं सञ्चचार च। तद्दिनादा-रभ्य सः अक्षपाद इत्येव जगति ख्यातिं कीर्तिं च जगाम। तस्य पूर्वतनं नाम सम्पूर्णलुप्तमेव समभवत्।

### अक्षपाददर्शनम्

अपरापरदर्शनवत् अक्षपाददर्शनमपि निःश्रेयसार्थमेव प्रवृत्तम्। तेषां मते मोक्षो नाम 'दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानां उत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इत्यनेन दुःखा-भावरूप एव। तदर्थं च प्रमाणप्रमेयादीनां (अ.१ आ.१ सू.१) षोडशपदार्थानां तत्वज्ञानमत्यावश्यकम्। तत्र प्रमाणमन्तरा न प्रमेयसिद्धिरिति निरूपितैः प्रमाणैः किं प्रमातव्यमित्यपेक्षायां आ-त्मादयो अपवर्गपर्यंताः (१-१-९) केचन पदार्थाः उल्लिखिताः। भगवता अक्षपादेन एतेनैव सम्बंधेन आत्मतत्वविचारप्रस्तावे-

'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्'

(न्या.द अ.१ आ २ सू.१०)

इत्यादिना आत्मनो लक्षणमभिधाय आत्मनः नित्यत्वं देहेन्द्रियमनोभिन्नत्वं च व्यवस्थापितम्। अयं च अक्षपादः सू-

पष्टद्वैतवादिषु अग्रगण्य एव । द्रव्यगुणकर्मसामान्यविशेषसम-
ायादिसप्तपदार्थानां प्रमाणप्रमेयसंशयप्रयोजनादिषोडशपदार्था-
ां च सुसूक्ष्मतया इयं अक्षपादेन आविष्कृता विवेचनशैली
(केटगॉरिस्ट) पदार्थमीमांसात्मकप्रणालीत्युच्यते । अन्या च
प्रमाणमीमांसात्मिका (एपिस्टोमोलॉजिकल्) प्रणाली अक्षपादो-
ज्ञा एव पुरस्तात् तत्वचिन्तामणि कृता गङ्गेशोपाध्यायेन नव्य-
न्याय नाम्ना प्रवर्तिता । अस्य सर्वस्यापि आदिप्रवर्तकः आद्यः
न्यायाचार्यो नाम अक्षपाद एवेति दिक् ।

Statement about ownership and other particulars about newspaper **Madhuravani Sanskrit Monthly** to be published in the first issue every year after the last day of February.

**FORM IV**
**(See Rule 8)**

1. Place of Publication ... Gadag.
2. Periodicity of its Publication ... Monthly
3. Printer's Name ... H. S. Hombali
   Nationality ... Indian
   Address ... Station Road Gadag
4. Publisher's Name ... Pandharinathacharya Galgali
   Nationality ... Indian
   Address ... Madhuravani Office, Gadag
5. Editor's Name ... Pandharinathacharya Galgali
   Nationality ... Indian
   Address ... Madhuravani Office, Gadag
7. Names and address of induviduals who own the newspaper and partners or shareholders holding more than one percent of the total capital ... Pandharinathacharya Galgali (Propritor)

I, Pandharinathachary Galgali hereby declare that the particulars given above are true to the best of my knowledge and belief.

**Pandharinathacharya Galgali**
Signature of Publisher

Dated 16—3—57

# श्री श्री द्वारकापीठाधीश्वराणां परमौदार्यम्



श्री द्वारकाशारदापीठाधीश्वर श्री जगद्गुरु श्री शङ्कराचार्य महाराज

श्रीमत्परमहंसपरिव्राजकाचार्य जगद्गुरु श्री द्वारका शारदापीठाधीश श्री शङ्कराचार्यस्वामिमहाराजाः मार्गत्वेन एकदिनं हुब्बळ्ळीनगरं सनाथयंतः भाग्यात् संदृष्टाः मया। तदा ते अत्यन्तम् आत्मीयभावनया मधुरवाण्याः स्थितिगति-प्रगति-प्रसारादिकं विचार्य तस्याः निरन्तरप्रचालनप्रयोजकोपाय - शतपरिचिन्तनमपि अकुर्वन्। अन्ते च स्वयं एकाङ्कस्य व्यय वोढुं प्रतिवर्षं शतरूप्यकान् दत्वा संरक्षकत्वमङ्गीकर्तुं ससन्तोषं सद्यः सम्मतिं प्रादर्शयन्। पश्चाशद् रूप्यकांश्च तत्क्षण एव सम्पादकस्य हस्ते प्रदाय फलमन्त्राक्षताशीर्वादैः अन्वगृण्हन् मधुरवाणीम्। भारतसर्वकारस्य धर्मविरोधिधोरणीं निरूप्य धर्मजागृतये संस्कृतपत्रिकासम्पादकैः अनलसैः सिद्धैः बद्धकटिभिश्च भाव्यमिति सानुग्रहमन्वशासन्। साधुसन्यासिनियन्त्रणविधिं निरोधयितुं सर्वविधमपि प्रयत्नं करिष्याम इति प्रत्यजानन्। श्री स्वामिपादानां मेरुधैर्यं स्थाणुस्थैर्यं अम्भोधिगाम्भीर्यं कर्णौदार्यं बृहस्पतिचातुर्यं वाङ्माधुर्यं च दर्शं दर्शं चकितः मुदितः भक्तिभरितः मोदपुळकितश्चासमहम्। भगवान् ईदृशसनातनधर्मत्राणपरायणानां यतिमणीनां आयुः ऐश्वर्यं आरोग्यं सौभाग्यं च प्रयच्छतु इति प्रार्थयामः।



# रट्टमतम्

ले. पण्डित केशवशर्मा गलगली, धारवाड

कविर्वेङ्कटाध्वरिः स्वकीयविश्वगुणादर्शचंपूकाव्ये ज्योतिषशास्त्रं अम्बुधिरिव विस्तृतः, तदवगाहनं कर्तुमसमर्थः त्रिचतुरान् कणान् गृहीत्वा स्वयं कार्तांतिकशिरोमणिरिति जगति बंभ्रमीति प्रागल्भ्यं च प्रदर्शयतीति सम्यगेव दैवज्ञपाशान् वर्णितवान् । नायं शास्त्रस्य दोषः । कुवैद्यो रोगिणः मारकग्रहो यदि भवति नायं चरकसुश्रुत वाग्भटादीनां दोषः । संप्रति केवलं सप्तविंशतिनक्षत्रनाम्नां बोद्धारः केवलं राशिग्रहाणां अभिधानानि जानंतः ज्योतिर्विदः त्रिकालज्ञा वयं वैयक्तिक-राष्ट्रिय-भविष्यकथनं तनुम इति सुवर्णरञ्जितप्रकटनापत्रैः जनानां मोहमुत्पाद्य ज्योतिषशास्त्रं विडम्बनपथं असत्यपथं प्रापयन्ति चेत् पराशरजैमिन्यादिमुनयः शास्त्रस्य उपज्ञातारः किं कुर्युः? न तेषां मंतुरयम् । आधुनिककाले ज्योतिषशास्त्रस्य अभ्यासस्य न राजाश्रयः नापि लोकाश्रयः । अतः यथार्थशास्त्राभ्यासिनः यथार्थवादिनः विरलतमाः । क्वचित् क्वचित् भारते विद्यमाना अपि अद्यतन महामन्त्रिकण्ठीरवगर्जनेन ( ज्योतिःशास्त्रं प्रगतिविरोधकं न तत्र विश्वसेत्, मूढा एव विश्वसन्ति फलितशास्त्रे ( Astrology ) बाल्यादारभ्य-द्वादश-चतुर्विंशति-षट्त्रिंशत् हायनानि एतत् शास्त्रस्य अध्ययनं कृतवन्तः अद्यापि भारते तत्र तत्र विरलतरा अपि विद्यन्ते ।

उदाः– मद्रपुरीय-नागराजशर्मा, वंगीय S. K. Kar महाभागः, बेंगळूरीय B. V. Raman महाशयः इत्यादयः । एतेषां ध्वनिः विलीयते । कन्दमूलफलाशिनो मुनयः स्वार्थनिरपेक्षं परोपकारार्थं शास्त्रमेतत प्रणीतवन्तः । अद्य अधिकारपदाधिष्ठिताः

एतत् विस्मरन्ति, केवलमन्दविश्वासार्हमिदं शास्त्रमिति गर्जन्ति चिकित्सकशेमुषीमन्तः पाश्चात्याः 'Leo-Rapheal' इत्यादय शास्त्रमेतदभ्यस्य ग्रन्थान् प्रणयन्ति स्म ।

संस्कृतभाषायां तु नैकग्रन्थाः अद्यापि उपलभ्यंते, कर्णाटक वाण्यामपि दिष्टज्ञशास्त्रीयग्रन्थाः । तेषामन्यतमोऽयं रट्टमतनाम ग्रन्थः प्राचीनकर्णाटकभाषायां लिखितः । रट्ट अथवा रट्टय नाम्ना १३ तम शताब्द्याम् । प्राचीनाः प्रायशः पद्यात्मकग्रन्थ नेव लिखंति स्म, यतः पद्यात्मिका वाणी स्मरणभित्तौ एकदो त्कीर्णा तूर्णं न प्रणस्यति एषां जन्मजातके बुधचन्द्रौ बलिनौ अस्तु तावत् रट्टकृतिं वर्णयामः ।

ज्यौतिषशास्त्रं त्रिस्कन्धात्मकं होरासिद्धांतनामाधिष्ठि होरायां जातक-प्रश्नविभागः अन्तर्भूयते । ग्रहगणितविभागे सूर भास्कर-ब्रह्मसिद्धांतेषु संहितायां मेदिनीजातकं राष्ट्रभविष्यकथ नात्मकं सस्य-वृष्टिभवितव्यकथनपररं । ट्टमतं संहिताविभागे अं भंवति । वराहमिहिराणां बृहत् संहिता प्रसिद्धतरा । आरावाच मन्दिरतः भद्रबाहुसंहितापि अधुना प्रकटिता समुपलभ्यते ।

रट्टमतं न स्वतंत्रग्रंथः । अनेकप्राचीनग्रंथान् विलोक्य ग्रं मेनं प्रणिनाय, कविः स्वयमेव कथयति– प्रथमाध्यायस्य चतु त्रिंशत्तमश्लोके रत्नोज्वलसंहिता, धनकीर्तिसंहिता, वराहमिहि गार्ग्याचार्याणां संहिताः आधारभूताः । रत्नोज्वलधनकीर्ती प्रा जैनौ भवेताम् । तेषां ग्रंथाः सांप्रदं नोपलभ्यन्ते । भारतीया दुर्भाग्यमहिम्ना अनेकग्रंथाः प्रणष्टाः, विद्यमाना अपि नाडीग्रं इव न प्रकाशपथमानीताः ।

रट्टमतं वृत्तकंदरघट्टासु निबद्धं द्वादश अध्यायात्मकम् ।

रट्टमतं गुरुशनियुतिः क्रांतिं जनयतीति सुंदरपद्येन कथयति-

ಗುರುಶನಿಸಮಾಗಮಮಾಗಮದೊಂದು ಗಡಾ ।
ಸಿರಿದಂಜನದಂಜುವದಂದು ಗಡಾ ।
ವರುಷತ್ರಯ ಧ್ಯಾನವ ಮಾಡು ಗಡಾ ।
ಹರನಾದೊಡೆ ಕಾಯಲು ಮಾರ ಗಡಾ ॥

गडा आश्चर्यार्थकं अव्ययं हा हन्त इत्यर्थकम् ।

इयं युतिः यस्मिन् राशौ भवति तस्य राशेः अधिकारः तस्मिन् देशे देशस्य अक्षांशरेखांशानुसारेण युतिकालीनकुण्डली फलितं बोधयति । वर्षत्रयं धान्यसंग्रहं उपदिशति रट्टः । गुरुशनियुतिः महापरिवर्तनसूचिका पाश्चात्याः। एतद्युतेः सम्यगभ्यासं कृतवंतः। झाडकीलमहाभागः Legaery of झाडकीलपुस्तके बहोः कालात् पूर्वमेव परिवर्तनसूचिकायाः अस्याः युतोराधारेण भारते आंग्लानां राज्यं लुप्तं भवेदिति कथयामास । कश्चन अमेरिक ज्योतिर्वित् विंशतिवत्सरेषु पुनः पुनः भाविनीम् एनां युतिं गुप्तकालात् प्रभृति अभ्यस्य भारतस्य स्वातंत्र्यसूर्योदयः १९४७ तम क्रिस्ताब्दे भवतीति निजगाद । अयं लेखः बेंगळूरनगरीय A. M. मासिके प्रकटितः जिज्ञासुभिः अवश्यं द्रष्टव्यः । चीरो महाभागोऽपि १९२५ तमक्रिस्ताब्दे स्वलिखित 'World prediction' पुस्तके धार्मिककलहेन भारतस्य विभजनं प्रणीतवान् ।

१९६१ क्रिस्ताब्दे पुनः गुरु-शनियुतिः मकरराशौ भवति मकरराशेरधिकारः भारते तदनंतरं किं वा परिवर्तनं करोति न वयमिदानीं जानीमः । तदर्थं युतिकालसूक्ष्मावगमनमावश्यकम् । नास्मासु तादृशपंचांगकर्तारः । केचन ज्योतिर्विदः कथयन्ति भरतखण्डे कन्याराशेरधिकारः । कदाचित् लग्नचन्द्रयोः तत्र वसतिः स्यात् । मकरराशेरधिकारः भरतखण्डे विद्यत इति अस्मभ्यं प्रतिभाति । यतः मकराधिपतिः शनिः भारतकारकः

शनिः, शनि-हर्शलयुतिः ४५ वर्षेभ्यः पुनः पुनः भवति । १९४२ तमक्रिस्ताब्दे भूता भरतखण्डे शासनभङ्गांदोलनं समुद्भूतं प्रति युतिः १९१८–१९ तमक्रिस्ताब्दे 'इन्फ्लेंझा' रोगगर्जरितं भरतखण्डम् १९२१ तमक्रिस्तीहायने शनि हृ. केंद्रयोगे असहकारान्दोलनं, पुनश्च युतिः १९८७ तमाब्दे भविष्यति । सकलमेतत् अभ्यासिभिः अभ्यसितव्यं अस्तु ।

गुरुशुक्रचन्द्रयुतिः वृष्टिं उत्पादयति । इनसौम्ययोः मध्यगतः शुक्रः जनान् जलशोधनार्थं प्रयासयति, जनः तृषार्तः कुलालचक्रमिव जलार्थं बंभ्रमीति । शुक्रगुरुबुधयुतिः वृष्टिं दास्यति । शनिमङ्गळयुतिः अवनिज सूर्यगुरुयुत्या पर्जन्यं लुप्यते । परं रविगुरुयुतिः वर्षाकाले अनुकूलराशौ वृष्टिं दास्यति । मद्रास प्राच्यवाचनमन्दिराधिकारिणः पुस्तकमेतत् प्रकटीकृत्य, ज्योतिषाभ्यासिनः अधमर्णीकृतवन्तः स्तुत्यर्हमिदं तेषां कार्यं समयांतरे पुनः रट्टमधिकृत्य ब्रूमः ।

## पण्डितराज-जगन्नाथः

लेे. एन्. एस्. गदगकर, बी ए, धारवाड

प्रस्तुते पण्डितराजचरित्रे तस्य दैवभक्तिः दृढसंकल्पता मातापितृवात्सल्यातिशयो बन्धुप्रेम च सर्वाण्येतानि लक्षणानि चन्द्रिकाशुभ्ररश्मय इव प्रस्फुटानि । विष्णोर्वामपादांगुष्ठादुद्भूता त्रिलोकं पावयन्ती श्रीमत्शङ्करजटावासिनी गङ्गामाता अपि अस्य सद्गुणलुब्धा भूत्वा अभयहस्तमस्मै प्रससारेति सत्यमेवाभिमानास्पदम् । करुणार्द्रहृदयी सा अन्ते पण्डितराजं तस्य प्रेयसीं लवङ्गिकां च आत्मनो वीचिमालासु विलीनीचकार । अहो भक्तवात्सल्यता देव्याः ।

गुणगणान्विता महिमापूर्णा च ईदृशी गङ्गामाता सर्वदा अस्माकं भक्त्यादर भाजनं वर्तते । कविपुङ्गवो जगन्नाथोऽपि संस्मरणीयः भक्तवृन्दस्य । साहित्यिकदृष्ट्या तस्य सुधालहरी करुणालहरी लक्ष्मीलहरी पीयूषलहरी (गङ्गालहरी) इत्यादयः देवतास्तवनानीति विख्याता विद्वज्जनप्रियाश्च सम्भूताः । एतासु कृतिषु दण्डिनः पदलालित्यं भारवेरर्थगौरवं कालिदासस्य उपमासौकुमार्यं सर्वाणि दृग्गोचराणि भवन्ति । पदलालित्यार्थं भक्तिपरवशतार्थं च दृश्यतां श्लोकद्वयमिदं रसिवाचकैः ।

मरुल्लीलालोलल्लहरि लुलिताम्भोजपटली-
स्खलत्पांसुव्रातच्छुरणविसरत् कौङ्कुमरुचि ।
सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिल-
जलं ते जंघालं मम जननि जालं जरयतु ॥

तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं भजसि यदि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥

विशेषतो गङ्गालहरी रसप्रचुरा उत्कटभक्ति निर्भरा। वाराणस्यामात्मवीरेश्वरघाटे द्विपञ्चाशत् सोपानानि सन्ति इति कथ्यते । तदनुसारेण अनेन पण्डितप्रवरेण जगन्नाथेन द्विपञ्चाशत् पद्यानि रचितानि श्रद्धातिशयेन पठितानि । वाग्वैखरीरञ्जितानि भक्तिरसपरिपूरितानि तानि स्वाभाविकतो विद्वज्जनादरणीयानि सञ्जातानि ।

जगन्नाथस्य रसगङ्गाधरमन्तरेण स्तोकमपि अवश्यं प्रोक्तव्यम् । नूनमेतद्विना इदं लेखनमपूर्णं स्यात् । प्रथमतः रसगङ्गाधरस्तस्य कृतिरत्नेषु अत्युज्वल इति मन्यते साहित्यविमर्शकविचक्षणैः । अवहित चेतसा आलोक्य अभ्यस्य च ग्रन्थोऽयं रचित

पण्डितेन । यथा व्याकरणविषये नागोजिभट्ट भट्टोजिदीक्षिता अपूर्वा वर्तन्ते । उपसंहारे रसगङ्गाधरविषयकः प्रो. महेशचन्द्रः महोदयानामभिप्रायो विचारार्होऽस्ति । यथा–

"नवीनेषु निबन्धनेषु रसगङ्गाधर एव प्रधानम् । अत्र हि न कोऽपि विषयः निर्युक्तिकः उक्तः । प्रत्युत सर्व एव ते अतीव सूक्ष्मानुसन्धानेन निर्णीताः । यच्च क्वापि काठिण्यं न दृश्यते । यानि नवीनान्युदाहरणानि प्रणीतानि तान्यतीव मनोहराणि । अत एव अस्य अलङ्कारशास्त्रे व्युत्पत्तेः उत्पत्तये अध्ययनमतीव आवश्यकम् ।

---

## द्वितीयवर्षस्य

अयि मान्याः अयं दशमः अङ्कः गदगनगरात् प्रकाशमानायाः मधुरवाण्याः । बहुभिरेव ग्राहकैः प्रथमवर्षस्य वा द्वितीयवर्षस्य वा ग्राहकधनं ऐकमात्रमपि नैव प्रदत्तम् । कथं तर्हि पत्रिका प्रचालनीया ? ? ?

विंशतिवर्षेभ्यः प्रचलितां पत्रिकां प्रतिरोद्धुं मनः नैव सिद्ध्यति । प्रचालित् धनं नास्ति संरक्षकाः पीठाधीश्वराः केचन अद्यापि प्रतिश्रुतं धनं नैव प्रयच्छन्ति ।

अतः अगत्या इदानीं सर्वेभ्यः वाचकेभ्यः व्ही. पी. द्वारा प्रेष्यते । कृपया मोचनीया । व्ही.पी. प्रेषणे द्वादशाणकानां वृथा हानिः भवेत् । व्ही.पीं अनपेक्षमाणैः सत्वरं ग्राहकधनं सम्प्रेष्यम् इति सूचना ।

सम्पादकः

---

Regd. No. B 7171



# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणकपोस्टटिकीटप्रेषणं कार्यम् ।

व्ही. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनि ऑर्डरद्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्यमयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

BOOK-POST

To,

Sree

No. 348
Shri Shankarvev Vidyalankar
Shantikutir Gurukul Kangri
Dist. Saharanpur

If addressee is not found
please return to sender.

पंढरीनाथाचार्य गळगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग (कर्णा

Printed at the Hombali Printery. Gadag by H. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

उडुपि श्रीश्रीमदधमारुमठाधीश श्री विबुधेशतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर चैत्र १९५८ एप्रिल

प्रधान संपादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार

राजा एस्. गुरुराजाचार्याः



संपादकाः

गलगलीत्युपाव्हाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु. ५ ◆ एकाङ्कस्य ०-८-०

## मधुरवाण्या मुख्य संचालकाः

श्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादाः

## मधुरवाण्या महा संरक्षकाः

श्री श्री विबुधेशतीर्थः स्वामिपादाः अधयारुमठ, उडुपी प्रतिवर्ष ५०५ रु. प्रदा

श्रीमन्तः पद्मनाभराव वैद्य महोदयाः ,, ५०५ ,,

## प्रतिवर्ष १०१ रू. प्रदाः मधुरवाण्याः संरक्षकाः

श्री श्री पेजावर मठाधीश स्वामिपादाः श्री श्री स्वादीमठाधीश स्वामिपादाः

श्री श्री भंडारगिरि मठाधीश स्वामिपादाः

श्री श्री द्वारकामठाधीश श्री शङ्कराचार्य स्वामिपादाः

श्री श्री शृंगेरीपीठाधीश श्रीमद् अभिनव भारतीतीर्थ स्वामिपादाः

श्री श्री कूडली शृंगेरी मठाधीश स्वामिपादाः

---

# विषयानुक्रमणिका

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्छाभरमपहरन्ती सुरगिरः
मनोज्ञालंकारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

| २४ वर्षं | विलम्बि संवत्सर चैत्रमाससञ्चिका | अङ्कः १ |
|---|---|---|


## मच्छावतार मंगलम्

वेदान्वेषणतत्पराम्बुजठरप्रक्षिप्तसूक्ष्मेक्षणैः
क्षारोदन्वति वाडवोज्वलशिखिज्वालाजटालोदरे ॥
फुल्लत्पङ्कजकाननानि परितः प्रोज्जृम्भयन् पद्मना-
सद्मत्वं प्रथयन् पुनातु जलधेः प्राचीनपाठीनराट् ॥

कोपाटोपहिरण्यरेतसि पतत्पातङ्गपोतीकृतो
येन श्रौतपटच्चरःखलु हयग्रीवासुरस्तं नुमः
योऽदान्मुग्धहिरण्यगर्भशिशवे गोसन्ततिं, चाब्धिगं
कारुण्याब्धिमगण्यपुण्यफलदं मच्छं हिरण्यच्छविम् ॥

दोलान्दोलनदोहदोत्सवरतं लोलोर्मिमालाम्बुधौ
स्वच्छस्वर्णभपुच्छमच्छवपुषं स्वेच्छाप्तमच्छाकृतिम् ॥
वीक्ष्य स्वाम्बकमेव वाम्बुगलितं किन्वित्यहो संभ्रमात्
मुग्धा कृष्णकुटुम्बिनी मम मुदे स्वाक्षि स्पृशन्ती मुहुः ॥

### मासावतरणिका

देवांस्तर्पयितुं हराद् गिरिसुताक्षेत्रे सुपात्रे स्फुर
द्वीर्यं चार्पयितुं तु दर्पवशगे कन्दर्प उत्सर्पति ॥
तं कर्पूरयितुं शिवोऽग्निनयनं यत्फाल्गुणेऽपावृणोत्
तच्चैत्रेऽपि न मीलितं नु दहति ज्वालेव चण्डातपः ॥

संपादकीयम्

# वत्सरादौ विज्ञप्तिः

अयं च विलम्बिवत्सरः । सर्वाण्यपि कार्याणि विलम्बेनैव निर्वःर्त्यन्ते मादृशैः। अत एव मधुरवाणी अपि विलम्बेनैव आत्मानं प्रकाशयति। विगतवत्सरे अकस्मादापतिताभिः दैविकापत्तिभिः समये समये प्रकाशयितुं नापारि मधुरवाणीं। प्रथमतो द्वित्रसञ्चिकाः प्रकाश्य ततः स्वातन्त्र्य संग्राममेतिहासनामकः बृहदाकारः एक एव अमूल्यो ग्रन्थः उर्वरितसर्वमासानां आहत्यैकविशेषाङ्करूपेण प्रकटीकृतः । संस्कृतसाहित्ये महत्या एव एकस्या न्यूनताया अपाकरिष्णुना युवजननाडिन्धमरुधिरप्रवाहमुद्वेलयता चिरान्निद्रामुद्रामङ्गीकुर्वाणे संस्कृतज्ञसमाजे राष्ट्राभिमानज्योतिरुज्जागरयता अनेन एकेनापि नैकविद्वल्लोकप्रशंसितेन क्रान्तीतिहासात्मकेन ग्रन्थरत्नेन प्रीताः परितुष्टाश्च नो वाचकाः तृप्तिं प्रतिपद्येरन् क्षाम्येयुश्च नः इतराङ्कानाविष्करणापराधम् इति दृढं प्रतीमो वयम्। अस्मिंश्च प्रचलिते वर्षे यथासमयम् अप्रमादेनाङ्कानाविष्करिष्याम इति तु नैव वाचा निवेदयामः किन्तु कृत्या साधयामः । अस्मद्वचनस्य साधुतां सत्यतां स्वयमेव ज्ञास्यन्ति श्रद्धालवो वाचकवरेण्या इति नाधिकमत्र प्रतन्यते ।

**"तमन्तरा श्रीसुयमीन्द्रतीर्थ । कं या दयालुं शरणं व्रजेम ?"**

गतेऽपि वर्षे श्री श्री मत्पूज्यतमानां जगद्गुरुपदाधिष्ठितानां श्रीमत्सुयमीन्द्रतीर्थ स्वामिपादानां सकरुणहस्तावलम्बेनैव प्रावर्तयाम पत्रिकाम् प्राकाशयाम च शताधिकपुटपरिमितं क्रान्तीतिहासग्रन्थं । तेनैव च विश्वासेन अस्मिन्नपि वर्षे श्रीजगद्गुरूणां करुणावरुणालयानां चारुचरणं शरणीकुर्मः । अस्मिंश्च कलिमलकलुषीकृते जगति उदारचरितान् तानेकानपहाय को वा शरणं भवितुमर्हति संस्कृतपण्डितानां।

कः श्रोष्यति संस्कृतपत्रिकाकर्तृणां दैन्यालापं ? अतः गतवर्षे इव अस्मिन्नपि वर्षे पर्याप्तं सहायं प्रोत्साहनं आशीर्वादं च प्रदाय पत्रिकां प्रचालयितुं प्रगमयितुं च तानेव कामधेनुसदृक्षान् कल्पवृक्षकल्पान् गुरुसार्वभौमपीठाधिष्ठितश्रीसुयमीन्द्रतीर्थ श्रीश्रीचरणान् संप्रार्थ्य शरणमुपयामः सभक्तिभरम् ।

वस्तुतस्तु सर्वेऽपि महामहा पीठाधीश्वराः मधुरवाणीमहासंरक्षकाणां जगद्गुरु श्रीराघवेन्द्रमठाधीश्वराणां तथा वाञ्छातीतफलप्रदानेन कर्णमपि ह्रेपयतां श्रीमदधमारुमठाधीश स्वामिपादानां च आदर्शमनुसरेयुः तदा क्षणार्धं उच्छिन्न एव स्यात् संस्कृत पत्रिकाणां संस्कृतपण्डितानां तथा संस्कृतोद्धारार्थं प्रयतमानानां सर्वासामपि पुण्यसंस्थानां प्रचालनचिन्ताभरः । सत्यमनुकरणीयचरिता अनुसरणीयौदार्याश्च एते पीठाधिपतयः विश्ववन्द्याः सहस्रकृत्वोऽभिनन्द्याश्च । भगवान् भार्गवीजानिः तेषां श्रेयः श्रियं भूतिं कीर्तिं श्लाघ्यं भाग्यं च प्रयच्छत्विति प्रार्थयामहे ।



# स्वागतं सुसंस्कृतसख्यै 'भारतवाण्यै'

हन्त महान्नः सन्तोषः यत्सांप्रतमपि मातृभाषा राष्ट्रभाषांऽग्लभाषादीनां मिथः संघर्षे 'नैष समय' इति विभीषयत्यपि संस्कृतप्रसारं पुनरेका 'भारतवाणी' नाम्नी पत्रिकासखी कार्यरङ्गमवतरति सधैर्यम्। वस्तुतस्तु संस्कृतेनैव पोषितानां पोष्यमाणानां च प्रान्तीयभाषाणां मिथः कलहं शामयित्वा ऐक्यं संघटनां सौहार्दं सामरस्यं च साधयितुं सर्व-जननी सुरभारती एव एका एव क्षमा। तदधुना सर्वप्रान्तेष्वपि द्वित्र-संस्कृतपत्रिकाः स्वतोदुर्बलतत्तत्प्रान्तीयभाषासु बलं, शद्बसंपत्तिं, भार-निर्वहणक्षमतां च आधातुं, एकराष्ट्रियत्वकल्पनां उत्पादयितुं, वैचारिका-दानप्रदानव्यापारमभिवर्धयितुं च अत्यावश्यकतामश्नुवन्ति

इदानीं पुराणप्रसिध्दे इतिहासविश्रुते पुण्यनगरे संस्कृतसभाद्वारा 'भारतवाणी' नाम्नी पाक्षिकी पत्रिका एका आविष्क्रियते इ ति श्रुत्वा नामसाजात्यात् उद्देशसामान्यात् प्रयत्नसाधर्म्याच्च मधुरवाणी हर्ष-प्रकर्षपरवशा सुस्वागतं सन्तन्तनीति। भारतवाण्याः त्रयोऽपि संपादका नैकभाषा-तत्व-शास्त्र-ज्ञान-विज्ञान-विशारदा इति नास्त्येव नःतिलमात्रोऽपि सन्देहः अस्या यशस्वि-सुव्यस्थित-संप्रकाशने। अधुना अस्मल्लोचन-गोचरा द्वित्रसञ्चिकाः विषयवैविध्येन विचारप्राचुर्येण भाषासारल्येन भावगांभीर्येण मुद्रणसौष्ठवेन आकारचारिम्णा कर्गदधवलिम्ना शैली-बन्धुरतया च अतिमात्रमाकर्षकाः पण्डितप्रहर्षकाः सुरवाणीसमुत्कर्षकाश्च वर्तन्ते। तत्रत्य गद्यपद्यानि न केवलं निरवद्यानि किन्तु अतीव हृद्यानि आस्वाद्यानि च। एवमेवेयं पत्रिका उत्तरोत्तरामभिवृद्धिं सुप्रसिद्धिं च विन्दतु इत्याशास्महे।

भारतवाणी–

प्रधानसंपादकः डॉ. ग. वा पळसुले

कार्यकरि संपादकौ श्री रा, ल. जोशी, वसंत गाडगीळ

प्राप्तिस्थानं ६८५ सदाशिव पुणे २

वा, मूल्य ५।- एकस्य अंकस्य मूल्यम् इ० २५

---

## — सादर स्वीकारः —

**उपसंहारविजय** ( वेदान्तग्रन्थः )

जगद्गुरु श्रीमद् विजयीन्द्र श्रीपादविरचितः
प्रकाशकाः — विद्यावैभव कवितिलक साहित्यालंकार धर्मशास्त्रभूष
वेदान्त शिरोमणि मधुरवाणी परिमलादि पत्रिकासंपादक
**श्री राजा एस् गुरुराजाचार्याः**
प्राप्तिस्थानं—परिमल प्रकाशनमंदिर नंजनगूड (मैसूरस्टेट) मूल्यं २–८–

---

## TRUTH ( सत्यम् )

सनातन धर्मप्रचारोद्देशेन प्रवर्तिता आंग्लभाषामयी साप्ताहिकपत्रि
वार्षिक मूल्यम् ५–०–०

प्राप्तिस्थानं— हरलाल दासगुप्त M. A. F. C. S. ९१ चौरंघी कलकत्ता.

---

अस्मादेव स्थानात्प्राप्याः काश्चन अत्युपयुक्ता आंग्लपुस्तिकाः।

Cast System ( वर्णाश्रम व्यवस्था )

Early Marriage ( बाल्यविवाहः )

Hinduisam is The only Dharma. Why ?

हिन्दूधर्म एव परमो धर्मः कुतः ?

Open Letter to Mr M. K. Gandhi

महात्मा गान्धी महोदयाय अनावृत पत्रम्

**लः— एन्. आर्. सेनगुप्त** M. D.

एतानि सर्वाण्यपि आकारतो अणून्यपि विचारप्रागल्भ्यतः विष
महत्तया च बृहन्ति प्रौढानि अत्युपयुक्तानि पूस्तकानि सर्वैरपि सनात
धर्मानुयायिभिः अवश्यमेकवारमनुवाचनीयानि ।



गोत्रासगोत्रं क्षमया च शारदाविशारदं भूसुरकल्पकल्पम्
भास्वत्प्रभास्वत्सुयमीन्द्रतीर्थं वन्दे प्रशान्त्या शशभृत्सतीर्थम्

# श्री गुरुराजचरितम्

## श्री गुरुसार्वभौमानां अवतारस्य पूर्वरङ्गः

लेखकाः— **विद्यावैभव शिरोमणि राजा श्री गुरुराजाचार्याः**

(एतेषां सरसलेखकानां आचार्यवर्याणां सहृदयहृदयसमुल्लेखान् लेखान् अनुवाच्य को वा रसिकशिरोमणिः नानन्दति साश्चर्यं ? नान्दोलयति मूर्धानं ? नाभिनन्दति वा लेखनचातुरीम् ? शास्त्रेष्विव साहित्येऽपि भारतीं लीलालालित्येन लालयन्तः लासयन्तश्च एते कविप्रवराः अस्मिन् लेखे श्रीगुरुसार्वभौमाणां अवतारपूर्वकथां प्रमाणोदाहरणपुरस्सरं सरसमेव न्यरूरुपन् । अमीषां निरूपणशैली संविधानचातुरी कथा कथनमाधुरी वाग्गुम्फनवैखरी च विद्वद्रञ्जिनी मन्दनन्दिनी चेत्यत्र न बिन्दुमात्रोपि सन्देहः)

शंकुकर्णाख्यदेवस्तु ब्रह्मशापाच्च भूतले
प्रल्हाद इति विख्यातो भूभारक्षपणे रतः
स एव राघवेंद्राख्य यतिरूपेण सर्वदा
कलौ युगे रामसेवां कुर्वन्मन्त्रालये भवेत् ॥

**नृसिंह पुराणे**

हिरण्यगर्भस्य नित्यसुन्दरः सत्यलोकः । भगवान् भूतभावनः ब्रह्मदेवः नवरत्नमण्टपे परं ब्रह्म पूजयन् आस्ते । भगवतः खगवाहनस्य निगमगीतानि दशावताररूपाण्यपि आरिराधयिषोः चतुराननस्य सपर्यापर्याये मत्स्य, कूर्म, वराह, नरसिंह, वामन, परशुरामादि षडवताराणां ध्यानावाहन भजन पूजनादिकं पर्यवसितप्रायमेवासीत् । विद्याभिमानिनी साक्षात् सरस्वती अपि तत्रैव धवलकमलासनमासीना विपंचीपञ्चमरागे एव निजकंठकिन्नरीकलकाकलीं मेलयित्वा मन्दं मृदु मधुरं च भगवन्तं उपश्लोकयन्ती अतिष्ठत् । कोमलकरांगुलीभिः तन्त्रीः क्वाणयन्त्याः तस्याः वीणा... कम्बुकण्ठात् निस्सरतः कल्याणी-

रागस्य विसरत्तानवितानानि श्रोतृणां मानसेषु भक्तिरसमुद्वेलयन्ति स्म। लोककल्याणकांक्षिण्याः तस्याः शारदाम्बायाः इयं संगीतसेवा चिरं चारु प्रावर्तत । तत्र च पुरन्दरादयः वृन्दारकाः, वशिष्ठप्रमुखाः ब्रह्मर्षयः, गन्धर्वाः, अप्सरसश्च गानमुग्धाः तानलुब्धाः भक्तिस्निग्धाश्च भूत्वा आसनेष्वेव बद्धा इव कीलिता इव स्तंभिता इव स्थाणुतामेव लम्भिता इव बाह्यपरिज्ञानवर्जिताः भक्तिपारवश्येन अतिष्ठन् । तत्रापि शंकुकर्णो नाम देवः विरिञ्चिचञ्चलाक्ष्याः कराञ्चलसंचालित चंचद्विञ्ची-पञ्चमस्वरप्रपञ्चितेन कल्याणरागेण सुतरां हृतहृदयः भक्तिपारवश्येन समुदञ्चितरोमांचकञ्चुकितकलेवरः मुकुलितकरकमलः मीलितनयन-युगलः बाह्यप्रपञ्चपरिज्ञानविकलः तन्मयतामुपगत्य तस्थौ ।

तदा जानकीजानिं पूजयितुकामः कमलयोनिः रामरूपं दध्यौ । तत्क्षण एव नवनीरदनीलविग्रहश्रीः पतितपावनः कोदण्डधारी सीता-प्रभुः प्रादुरासीत् । तं च भक्तिगम्यं विश्वनम्यं प्रत्यक्षं परं ब्रह्म दृष्ट्वा सादरं संभ्रांतः हंसवाहनः "अर्घ्यं अर्घ्यं पाद्यं, पाद्यं ! क्व पुष्पाणि? कुत्र वा तुलसी ? इति सोद्वेगं इतस्ततः अवालूलुकत् अन्वैषिषच्च । परं न तस्य सविधे गंधाक्षततुलसी पुष्पादिकं आसीत् । "किमिदं ? श्रीरामस-मभ्यर्चनाय सत्यलोके, तत्रापि ब्रह्ममन्दिरे न पाद्यं नैवार्घ्यं न खलु कुसुमं नापि तुलसी ! धिगिमां मदीयनिकेतनस्य अव्यवस्थां" इति उत्क्वा परितः सरोषं चक्षुः संचारयामास वाणीपतिः ।

नित्यं पूजार्थं तुलसीपुष्पाद्युपहरणाय नियोजितः शंकुकर्णः तत्रैव कल्याण्याः वाण्याः कल्याणरागस्य गान-तान-वितानैकलीनमानसः भक्तिपुलकितः परवशतायामास्ते ।

तं च स्वकार्यप्रमत्तं शंकुकर्णमालोक्य जगर्ज परमेष्ठी "शङ्कुकर्ण! कोऽयं ते तामसव्यापारः ? श्रीरामपूजार्थं नानीतानि पुष्पाणि नोपकल्पितः संभारः। अयं च भगवत्पूजासौकर्यप्रतिरोधः नूनं दैत्यधर्म एव । अतः भुवि त्वं दैत्ययोनौ एव अवतरेः" इति । तदा समुपजातदेहभानः विदित-स्वापराधः शंकुकर्णः पश्चात्तापपापच्यमानहृदयः पपात ब्रह्मपदे, लुलोठ सकरुणं, रुरोद दीनदीनम्, अन्वनाथीच्च सांजलिबन्धम् "क्षमस्व

ब्रह्मन् ! क्षन्तव्योऽयं क्षुद्रजंन्तुकृतो मन्तुः । "कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो" कियान् मे अपराधः कीदृग् भयंकरोऽयं दण्डः। निरंतरं हरिप्रद्वेषिणी खलु दानवजातिः । यावज्जन्म भवदीयसेवां कृतवतः सर्वदापि हरिप्रवणमानसस्य मे दैत्ययोनिस्मरणमात्रेणैव भयकंपः उत्पद्यते । दयस्व धर्मात्मन् ! अनुगृहाण अनुचरम्, त्रायस्व भगवद्द्वेषपातकात्" इति

तस्यैवं आर्तप्रार्थनां श्रुत्वा द्रुतहृदयः पद्मसंभवः सकरुणमवादीत् "वत्स मा भैषीः स्वभाव एव प्रेमद्वेषयोः निदानं, न जातिः नवा-जन्म । जात्या विष्णुभक्तस्य तव कुत्रापि कदापि हरिद्वेषः नैव संभविता । "सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि" । मदीयं च वचः नान्यथाभवितुमर्हति । तव च विष्णुभक्तिप्रकृतिः भवान्तरेऽपि विकृतिं नोपयास्यति । मम शापानुसारं दैत्यकुले समुत्पन्नोऽपि भक्ताग्रेसरो भूत्वा पुरः लोके विष्णुभक्तिं प्रख्यापयसि प्रसारयसि च" इति । तदा समाश्वस्तः शंकुकर्णः ब्रह्मकरार्च्यमानस्य श्री सीतापतेः पादपांसुषु विलुठ्य "भूयादव्यभिचारिणी रघुपतौ भक्तिश्च नारायणे" इति प्रार्थयामास । तदा मन्दस्मितोत्फुल्लगल्लः वैदेहीवल्लभः सोल्लासं शंकुकर्णं कृपाकटाक्षेण अन्वग्रहीत् । तदा मरालकेतनः सदयमुदीरयामास "वत्स शंकुकर्ण भाग्यवान् खल्वसि । यस्य देवदेवस्य पूजोपकरणानुपकल्पननिमित्तं दण्डितोऽसि शप्तोऽसि तस्यैव श्री मूलरघुपतेः स्वयं पूजापर्युपासनैः एव तत्सन्निधिं प्रयास्यसि । नूनं त्वं धन्योऽसि मान्योऽसि दैवशालिमूर्धन्योऽसि च" इति । तदा शंकुकर्णः "स्वामिन् तर्हि अयं ते शापोऽपि मम अनुग्रह एवेति मन्ये । भवत्करार्चितमूलरामपूजनं नाम-ममैकः वरीयान् वरणीयश्च वर एव । तदर्थं कृतज्ञोऽस्मि प्रणतोऽस्मि च इति सानन्दं ववन्दे ।

क्रमशः

---

# प्राचीनसाहित्ये विज्ञानपरिचयः

[ निबन्धकः — श्रीकालीपद-काव्यव्याकरणतीर्थः ]

अहो वैचित्र्यम्, यदा सर्वेऽपि सर्वदेशीया मानवा मोहान्धकारसमाच्छन्नाः केवलं स्वेच्छाहारविहारेषु निरुद्धचेतसः शिष्टविगर्हितं समाचरन्तो निष्फलञ्च जीवितं वहन्तः कालमनयन्, यदा च पाश्चात्त्या नरा आममांसभोजिनः शौचाचारविरहिताः परस्परं कलहायमाना हिंस्रस्वभावाश्च आसन्, तस्मात् स्मृतेरतीतकालादारभ्य भारतवर्षमिदं प्रदीपस्येव ज्ञानस्य विज्ञानस्य च प्रभया समुद्भासितं बभूव। तत्रत्यैर्महर्षिभिः प्रणीतानि शास्त्राण्येव तत्प्रामाण्यं सूचयन्ति वर्तन्ते।

अलोकसामान्यतपःप्रभावेण लब्धज्ञानास्ते हि भारतीया महर्षयो योगबलेन साक्षात्कृतपरमेश्वरा बभूवुः। अतः तेषां परमेश्वरानुग्रहेण दृग्गोचरं किमपि नासीत्। तपोबलेनैव ते परोक्षमपरोक्षञ्च सर्वमेव वस्तु याथार्थ्येनोपलभ्य लोकहिताय शास्त्रेषु निहितवन्तः। न केवल मोक्षोपयोगिनि ज्ञाने तेषां बुद्धिः प्रससार, परन्तु विज्ञानेऽपि शिल्पशास्त्रात्मके तेषामप्रतिहतप्रसरा धीर्नवीनतमां प्रतिभां विकासयामास।

ज्ञानं हि द्विविधम्। एकं मोक्षोपयोगि ज्ञानम्। अपरञ्च शिल्पे शास्त्रे चान्यफलिका या बुद्धिः सा विज्ञानमिति "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरि"त्यमरकोशवाक्यात्।

तेषाञ्च मनस्विनां ज्ञाने यथा मतिर्विज्ञानेऽपि तथैव सूक्ष्मतमा बुद्धिरवलोक्यते। स्थूलादारभ्य सूक्ष्माण्यपरिमाणान्यपि वस्तूनि तेषां ज्ञाननेत्रगोचरीभूतान्येवाभूवन्। अमुष्मिन् प्रबन्धे तेषां विज्ञानवतां महर्षीणां शिल्पशास्त्रविषयकाणि कानिचिद् विज्ञानान्युदाहरिष्यन्ते।

स्कन्दपुराणान्तर्गतकाशीखण्डस्योत्तरार्द्धे षडशीतितमेऽध्याये विश्वकर्मेश्वरलिङ्गस्य प्रादुर्भावविवर्णनावसरे हरपार्वतीकथाच्छलेनैवं वर्णितमस्ति।

निखिलकलाविद्यानिपुणस्त्वष्टुः सुतो महनीयकर्मा विश्वकर्मा पूर्वं ब्रह्मणोऽपरा तनुरासीत्। स चाल्पीयसि वयसि कृतोपनयनो गुरुकुले वसन् गुरुसेवनरतो भिक्षान्नेनोदरपूरणं कुर्वन् कालं निनाय। प्रावृट्काले समायाते तस्य गुरुस्तं प्राह! वत्स!

"कुरूटजं मदर्थं त्वं यथा प्रावृड् न बाधते।
यत् कदाचिन्न भज्येत न पुरातनतां व्रजेत्॥"

एतेन प्राचीनकाले सर्वोत्तमगृहनिर्माणरीतिरासीदिति ज्ञायते। तत्रैव स्कन्दपुराणांतर्गतोत्तरार्धे गुरुपत्न्या उक्तः स विश्वकर्मा—

गुरुपत्नी च तं प्राह रे त्वाष्ट्र! कुरु कञ्चुकम्।
ममाङ्गयोग्यं नो गाढं न श्लथञ्च प्रयत्नतः।
विनैव वाससा चारु वाल्कलञ्च सदोज्ज्वलम्॥ इति

एतेन रमणीयवाल्कलकञ्चुकनिर्माणरीतिरुक्ता। ततश्च गुरुपुत्रेणोक्तम्—

गुरुपुत्रोऽपि तं प्राह ममार्थं पादुके कुरु।
यदारूढस्य मे पादौ न पङ्कं संस्पृशेत् क्वचित्॥
चर्मादिबन्धनिर्मुक्ते धावतो मे सुखप्रदे।
याभ्याञ्च सञ्चरे वारिस्थलभूमावविद्रुतम्॥

याभ्यां पादुकाभ्यां वारिभूमौ सजलप्रदेशे स्थलभूमौ च अविद्रुतं यथेच्छं सञ्चरे सञ्चरेयम् इत्यर्थः। एतेन चर्मादिबन्धनविहीना जलस्थलसञ्चरणक्षमा पादुका तदासीदिति ज्ञायते।

ततश्च गुरुकन्ययाऽपि स याचितः। यथा—

गुरुकन्याऽपि तं प्राह त्वाष्ट्र! मे श्रवणोचिते।
भूषणे स्वेन हस्तेन कुरु काञ्चननिर्मिते॥
कुमारीक्रीडनीयानि कौतुकानि च देहि मे।
दन्तिदन्तमयान्येव स्वहस्तरचितानि च॥
गृहोपकरणं द्रव्यं मुसलोलूखलादिकम्।
तथा घटय मेधाविन्! यथा त्रुट्यति न क्वचित्॥

अक्षालितान्यपि यथा नित्यं पीठानि सत्तम ।
उज्ज्वलानि भवन्त्येव स्थालिकाश्च तथा कुरु ॥
सूपकर्मण्यपि च मां प्रशाधि त्वष्टृनन्दन ।
यथाऽङ्गुल्यो न दह्यन्ते पाकः स्याच्च यथा सुखम् ॥
एकस्तम्भमयं गेहमेकदारुविनिर्मितम् ।
तथा कुरु वरं त्वाष्ट्र ! यत्रेच्छा तत्र धारये ॥

कुमारीक्रीडनीयानि कुमारीणां क्रीडायोग्यवस्तूनि । दन्तिदन्तमयानि हस्तिदन्तनिर्मितानि । एवं गुरुणा गुरुपत्न्या गुरुपुत्रेण गुरुकन्यया चाभिहितस्त्वष्टा विषण्णमनाः काननानि परिभ्राम्यन् दुःखदुःखेन कालं निनाय । ततश्च दैवयोगेन कञ्चित् तापसमवलोक्य तस्मै निजदुःखकारणं कथयन् तस्योपायं जिज्ञासमानस्तेन तापसेन शिवोपासनार्थमादिष्टः सर्वाभीष्टप्रदातारं महेश्वरमर्चयन् तस्य वरेण शिल्पविज्ञानं समग्रं विज्ञाय गुरूणामभिलाषं सम्पादयन् महान्तं सन्तोषं लेभे । एवं प्राचीनकालादारभ्यास्माकं देशे रम्यं चिरस्थायि कुटीरम्, अगाढमश्लथं वासोरहितं वाल्कलं कञ्चुकम्, यथाभिलाषं सर्वत्र सञ्चरणक्षमा चर्मरहिता पादुका, हस्तिदन्तनिर्मितानि कुमारीणां क्रीडावस्तूनि, सौवर्णं कुण्डलम्, मुषलोलूखलादीनि गृहोपकरणानि, रमणीयाः स्थालिकाः, निरुपद्रवपाककर्मशिक्षा, एकदारुविनिर्मितमेकस्तम्भमयं चलं गेहमित्थं बहुविधानामेव विज्ञानानां प्रचलनं दरीदृश्यते ।

एवं महाभारतेऽनुशासनपर्वणि पञ्चनवतितमेऽध्याये चर्मपादुकायाश्छत्रस्य चोत्पत्तिविवरणं दृश्यते । एकदा कृतदारपरिग्रहो भगवान् जमदग्निस्तपनकिरणदग्धे मध्यमेऽह्नि स्वकान्तया रेणुकया सार्द्धं शरैः क्रीडन् स्वनिक्षिप्तान् शरान् संग्रहीतुं तामादिदेश । रेणुका च भृशं सूर्यकिरण प्रतप्तावयवा शरानयनाक्षमा सती मुहुर्विश्राम्यन्ती पुनरपि तान् भर्तृनिक्षिप्तान् बाणानानिनाय । भगवान् भृगुश्च रेणुकाया विलम्बमसहमानस्तस्य कारणं ज्ञातुमैच्छत् । ततश्च "नाथ! प्रखरतपनकिरणदह्यमानगात्रा नाहं शक्नोमि शरनानेतुम्" इत्युक्तवत्यां रेणुकायां जमदग्निराह—

अद्यैन दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ।। इति

तदा जमदग्निशापभयत्रस्तो विवस्वान् ब्राह्मणरूपेण तत्रागत्य तं तुष्टाव । उपशान्तचेतसि जमदग्नौ भगवान् सविता रेणुकायास्तापोपशमनाय छत्रमुपानहञ्च ददौ । ततःप्रभृति लोकेऽस्मिन् छत्रस्योपानहश्च व्यवहारः प्रदृश्यते । यथोक्तं महाभारतेऽनुशासनपर्वणि–

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृण्हीष्व पद्भ्याञ्च त्राणार्थं चर्मपादुके ।।
अद्यप्रभृति चैवेह लोके संप्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च
छत्रं हि भरतश्रेष्ठ यः प्रदद्याद् द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ।।

ततश्च रेणुका सूर्यप्रदत्तं छत्रमुपाहनञ्च गृहीत्वा सूर्यकिरणेभ्य आत्मरक्षणाय मूर्ध्नि छत्रं पादयोरधस्तादुपानहौ परिदधाना जमदग्निनिक्षिप्तान् शरान् संगृहीतवती । एवं बहोः कालादारभ्यात्र भारते वर्षे प्राचीन ज्ञानविज्ञानानुशीलनरता भारतीया महर्षयो नानाविधेषु शिल्पविज्ञानेतिहासादिषु शास्त्रेषु परं पाण्डित्यं प्रदर्शयन्तः सर्वेषामुपरि वर्तमाना अद्यापि सर्वैरेव नमस्क्रियन्ते भक्तिनम्रशिरोभिरर्वाचीनैः प्राचीनैश्च विद्वद्वरेण्यैः। एवञ्च शास्त्रेषु बहून्येव विद्यन्ते शिल्पसम्बन्धीनि वाक्यानि; सत्यवसरे तान्यन्यत्रोदाहरिष्यामः ।

---

॥ श्री ॥

के एल्. व्यासराय शास्त्रिणा विरचितं

# प्रभातगीतम्

१) ज्योतिः प्ररोह उदगादुदयाद्रिशृङ्गे
सौवर्णवृक्ष इव सम्भृततुङ्गशाखः ।
कीर्णेव हेमकुसुमैर्वसुधा चकास्ति
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

२) कूजन्ति वृक्षशिखरेषु पतत्रिसङ्घाः
क्रीडन्ति हंसनिवहाः कमलाकरेषु ।
हुङ्कार शब्द मुखरा भ्रमराश्चरन्ति
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

३) बन्दीव कालमभिशंसति ताम्रचूडः
(वैतालिक इवेत्यर्थः)
केकी गभीरनिनदो धमतीव शङ्खम् ।
पारावतः कलरवं कुरुते विटङ्के
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

४) मुग्धाऽद्य का स्वपिति कश्च पुमानितीव
पृच्छन् विरौति ननु "काक" इति स्वघोषः
नीचोऽपि मान्यवचनो यदि साधुवादी
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

५) गाने पटुः परभृता सहकारयष्ट्या-
वुद्गायतीव मधुरां मधुमासशोभाम् ।
शृण्वन्ति तां क्षितिरुहाश्चलदुत्तमाङ्गा
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

६) अभ्यास योगनिरतास्त्वरितं प्रबुद्य
बालाः कलं सरिगमादिकमालपन्त्यः
निद्रालसैः कररुहैः क्वणयन्ति वीणां
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

७) गोष्ठस्थिता सुदृढदामनिबद्धकंण्ठा
धेनुः स्ववत्समवलोकितुमुत्सुकैषा ।
हम्भारवं वितनुते क्षुधितश्चवत्सो
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

८) आप्लावयन् स्वमहसा भुवनान्तराल-
मैन्द्रीमुखे तिलकवद्विलसन् विवस्वान् ।
शैलाग्रपीठमधितिष्ठति कर्मसाक्षी
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

९) सूर्यं कृताप्लवमिवाम्बुनिधौ सुदीप्तं
वीक्ष्यात्मनो वपुषि चापि कलङ्कमिन्दुः ।
तत्क्षालनार्थमिव मज्जति पश्चिमाब्धौ
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१०) जाड्यं नुदन्त इव दूरतरं पतङ्गाः
पक्षौ धुवन्ति पतनार्थमुदीक्षमाणाः ।
आमन्त्रयन्ति च खगान् सहचारिणः स्वान्
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

११) अत्युन्नते नभसि सञ्चराः शकुन्ताः
सूर्यं प्रति प्रकृतिनाग्निकयाऽर्चनाय ।
क्षिप्ताः प्रसूननिकरा इव सम्प्लवन्ते
निद्रां जनास्त्यजत पश्यत सुप्रभातम्

१२) कौन्दीलता नववधूरिव सन्नताङ्गी
मन्दस्मिताञ्चितमुखीव लसत्प्रसूना ।
संसेव्यते मधुकरेण रसोत्सुकेन
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१३) निर्निद्रतामुपगतानि सरोरुहाणि
निद्रानिलीढनयनं भुवनं समीक्ष्य ।
मन्ये हसन्ति मधुपस्वनकैतवेन
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१४) व्याकोश पद्मरुचिरां सरसीं वगाह्य
संश्लिष्य गाढमतिमुक्तलतां च मार्गे ।
आयाति वः प्रियसखः पवनोऽद्रिशृङ्गात्
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१५) तारागणापसरणाद्विमलीकृता द्यौः
सम्मार्जितेव गमनाय विभाति भानोः ।
सद्यः स यास्यति तथा भुवनानि पश्यन्
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१६) आरोग्यमर्थनिचयो मतिवैभवं च
सम्प्राप्यते भुविजनैरुषसि प्रबोधात् ।
इत्येतदाप्तवचनं हृदये निधाय
निद्रां जनास्त्यजत पश्यत सुप्रभातम् ॥

१७) लब्धं स्वराज्यमधुना ननु तावता किं
तस्योच्छ्रयोऽद्य परिमृश्य जनैर्विधेयः ।
पद्माकरं कुरुत भारतवर्षमेतत्
निद्रां जनास्त्यजत सुप्रभातम् ॥



# अश्विनीकुमारौ

देवमाता अदितिः गृहे विश्रान्ता आसीत् । तदा बुधः भिक्षार्थम् आगत्य '३ॐ भवति भिक्षां देहीति ' याचितवान् । तदा अदितिः पूर्णगर्भिणी आसन्न-प्रसवा च अभवत् । अतः गर्भभरेण अलसायाःतस्याः धान्यं गृहीत्वा तत्र आगन्तुं विलंबः जातः । तदा शीघ्रकोपी बुधः कोपेन शापं दत्तवान् यत् "तव अयं अतिथिसेवायाः प्रतिबन्धकः गर्भः मृतःभवतु" इति । तदा तस्य शापाक्षराणि श्रुत्वा भयभ्रान्ता अदितिः पत्युः समीपमागत्य रोदितुमुपाक्रमत । तदा तस्याः पतिः कश्यप महर्षिः 'तव गर्भः कदाचिदपि मृतः न भविष्यतीति" आश्वासयामास शान्त्वयामास च । अथापि अज्ञानाद् अदितिः मम अण्डः अर्थाद् गर्भः मृतः इति यावत्पुत्रजन्म शोचति स्म। अतएव तस्याः पुत्रस्य नाम मार्तण्ड इति अभवत् ।

तस्मै एव मार्तण्ड इति नाम्ने सूर्यदेवाय देवानां त्वष्टा विश्वकर्मा स्वस्य पुत्रीं प्रदत्तवान । तस्याः नाम संज्ञा इति । संज्ञा तु स्वकान्तस्य प्रचण्डतरेण प्रकाशेन प्लुष्टक्लिष्ट सर्वाङ्गा सर्वदा सन्तप्यते स्म । यदायदा सूर्यदेवः प्रेमभरेण उत्सङ्गे आलिङ्गति तदा तस्य तेजसा संज्ञायाः देहे दाह एव उत्पन्न इव भवति स्म । एव-मेव तस्याः मार्तण्डाद् मनुः यमः यमुना चेति अपत्यत्रयं संबभूव । परं क्रमेण सा तेजोनिधेः चण्डकिरणस्य मार्तण्डस्य प्रचण्डप्रणयकेलीकलापैः समुद्भूतमहा सर्वाङ्गसन्तापं सोढुं अशक्नुवाना पतिं त्यक्त्वा गन्तुं निश्चिकाय

ततः सा पातिव्रत्यप्रभावेण स्वस्य छायायामेव चैतन्यम् आरोपयामास । स्वस्य रूपानुरूपदेहाकारविशिष्टां तां स्वछायांम् प्रति सा एवं आदिशत् "इमे त्रयःअपि पुत्राः त्वयैव साधु रक्षणीयाः । त्वया च संज्ञा इत्येव मम नाम्ना सूर्येण अन्यैश्च व्यवहर्तव्यम् " इति । एवमादिश्य सा स्वपितुः विश्वकर्मणः गृहं प्रति गतवती । परं तत्र पिता पतिं परित्यज्य समागतां पुत्रीं तिरस्कृत्य पुनरपि पतिगृहमेव गन्तुं उपदिदेश ।

परं पत्युः कोपस्य शापस्य देहतापस्य च भीत्या संज्ञा पतिसमीपं न गतवती । किन्तु उत्तरकुरुदेशेषु संचचार । जनाः आत्मानं परिचित्य पुनः सूर्याय निवेदयेयुः इति भयभावनया सा स्वस्या मानुषाकारं त्यक्त्वा अश्वाकृतिं स्वीकृत्य तृणानि भक्षयन्ती [illegible] । पुत्रांश्च [illegible]

इतश्च सूर्यदेवः संज्ञायाः छायामेव संज्ञां मन्वानः तया सह यथापूर्वं प्रेम्णा व्यवहरति स्म। संज्ञायाः छाया आकारतः रूपतश्च तद्रूपा एव आसीत्। एवं गच्छता कालेन मायासंज्ञाया अपि सावर्णः शनैश्चरश्चेति द्वौ पुत्रौ बभूवतुः। ततः सा छाया स्वस्य औरससन्ततौ अभ्यधिकं स्नेहं वात्सल्यं च चकार। सापत्न्यपुत्रान् यमादीन् प्रेम्णा नैव पश्यतिस्म। तदा एकदा कोपनो यमः तस्याः पुत्रभेदबुद्धिं कनिष्ठपुत्रपक्षपातं च दृष्ट्वा रुष्टः तां ताडयितुं चरणौ उदधरत्। तदा सा तं 'त्वं पादेन खञ्जः भव" इति शशाप। तदा सूर्यदेवः "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति' इत्याद्युक्तीः अनुस्मरन् 'कथमियं पुत्रेषु एवं कठोरा वर्तते? कुतो वा कनिष्ठपुत्रयोरेव स्निह्यति?' इति चिन्तयामास। तदा तस्याः स्वसर्वपुत्राणां मातृत्वे एव सन्दिहानः तां बलात्केशेषु गृहीत्वा सनिर्बन्धम् अपृच्छत् 'का सि त्वम्' इति। तदा सा सर्वमपि वृत्तान्तं कथयामास।

तदा नेयं स्वपत्नी संज्ञा इति ज्ञात्वा सूर्यदेवः स्वप्रेयसीं संज्ञां पुनः आनेतुं स्वस्य श्वशुरस्य गृहं प्रति अगच्छत्। तदासंज्ञायाः पिता "सा अत्रापि नास्त्येव।परं तस्याः स्थानं अहं जाने। परं ईदृशेन उग्ररूपेणैव यदि त्वं तस्याः समीपं गच्छेःतदा पुनः देहदाहभयात् सा पुरःपलायेत। अतः त्वां शाणम् आरोपयित्वा सौम्यकान्तिं सह्यतेजसं शान्तविग्रहं च करिष्यामि। एहीति" आजुहाव। तदा तथेति उक्तवन्तं जामातरं सूर्यं शाणे निर्घृष्य सङ्कुचितशरीरं शान्तकान्तिं च चक्रे।

ततः त्वष्टुः सकाशात् तस्याः स्थिति-गति-तपो-रतिविरतिप्रभृतिगुणगणान् उपश्रुत्य कुरुक्षेत्रम् आजगाम। तत्र च स्त्री-तुरंगरूपेण सञ्चरन्तीं संज्ञां ददर्श। ततः स्वयं अपि पुमश्वःभूत्वा तां प्रेम्णा अनुससार। स्वस्य समीपम् आगच्छन्तं प्रेम्णा च मुहुर्मुहुः स्वमुखं चुम्बन्तं स्वकायं च परामृशन्तं तम् अश्वं संज्ञा वडवा वेगाद् क्रोधाच्च निवारयामास निषेधयामास च। परमथापि अश्वरूपी सूर्यः बलात् तां निगृह्य बुभुजे। ततः सातं स्वपतिं सूर्यं एव विज्ञाय स्नेहादालिलिङ्ग। ततः तस्याः अश्विनीरूपायाः द्वौ कुमारौ उत्पन्नौ। तौ एव अश्विनीकुमारौ इति भुवि विख्यातौ संबभूवतुः। पुरस्ताच्च तौ एव देववैद्यौ इति स्वर्गलोके प्रथितौ पुरस्कृतौ पूजितौ प्रशंसितौ प्रणतौ च अभवताम्।

( अश्विनीकुमारयोः वेदोक्तमहिमा अग्रिमांके प्रकाशयिष्यते )

# नित्यं संस्कृतं पठन्तु !

कवयिता –
साहित्याचार्यः शास्त्री पं रुद्रदेव त्रिपाठी काव्य पुराणतीर्थः
साहित्यालङ्कार, साहित्यरत्नम् मन्दसौर म. प्र.

नित्यं संस्कृतं पठन्तु, प्रीत्या संस्कृतं वदन्तु
विज्ञाः ! संस्कृतभाषोन्नत्यै, पूर्णं सहयोगं प्रददन्तु ।
अस्या एव प्रभावात् पूर्वैर्लब्धं जगति गुरुत्वम्
विश्वस्मिन्नपि विश्वेऽप्यस्या, विततं किं न विभुत्वम् ?
तस्मान्निद्रां सन्त्यजन्तु, कर्तव्यं स्वं प्रभजन्तु-विज्ञाः
उच्चैर्नीचैर्नीचैरुच्चैर्गच्छति नियतेश्चक्रम्
पश्यन्ति न किं निकटमागतं सहसा विपदो नक्रम् ?
कालं व्यर्थं नो गमयन्तु, वक्त्रं शत्रूणां यमयन्तु-विज्ञाः
तानि दिनानि गतानि शुभानि स्वापेऽस्माकं विज्ञाः ।
चरणनिपतनैः समाराधयन् येषु नृपतयोऽविज्ञाः ।
प्रगतिं राष्ट्रियां पश्यन्तु, मोहादेवं नो नश्यन्तु-विज्ञाः
अद्य जागृताः समे मानवाः स्वं स्वं हितमीहन्ते,
सत्याग्रहादि विविधोपायैः स्वेष्टञ्चाशु लभन्ते,
स्वान्तं मातुर्मा व्यथयन्तु, कष्टं स्वीयानां कथयन्तु विज्ञाः
एतर्ह्यपि नो यदि प्रबुद्धास्त्यक्त्वा घोरां निद्राम्,
स्थितिं पुनः कः समुन्नेष्यति ? जातां प्रायः क्षुद्राम्,
दुःखं विज्ञानां हरन्तु, योग्यं कृत्यं सञ्चरन्तु विज्ञाः

---

'मेरा जूता है जापानी' चित्र श्री ४२० रीत्या गेयम् ।

# संस्कृत-साहित्ये नारीकृतयः

[निबन्धकः—डा. यतीन्द्रविमल-चतुर्धुरीणः, एम्. ए., पि एच्. डि. (लंडन)]

वर्तमानेऽस्मिन् युगे नारीणामग्रगतौ सर्वे, विशेषेण नार्यः सर्वदा सयत्ना वर्तन्ते। शिक्षायां दीक्षायामन्यत्र सर्वेषु विषयेष्वपि ताः समुन्नतां पदवीमारोढुमीहन्ते, तदर्थं बाहुल्येन यतन्ते च। इत्थञ्च ता न केवलमुच्चैःशिक्षामेवधिकुर्वते, परं तांस्तान् विषयानाश्रित्य ग्रन्थादिप्रणयनद्वारापि यशांसि वितन्वत्यो दृश्यन्ते। सोऽयमादर्शो नारीशिक्षायां नैदम्प्राथम्येन पदमकरोद् भारते वर्षे। सुप्राचीनाद् वैदिकाद् युगादेव भारतीया रमण्य आदर्शेनानेनानुप्राणिताः सत्यः प्रत्यभासन्त। वैदिकयुगगोचरा रमण्यः सामाजिक्यां जीवनपद्धतौ सर्वथा यदुच्चैःस्थानमधिचक्रुस्तन्मन्ये प्रायः सर्व एव किञ्चिदभिजानन्तीति। न वयं स्वल्पकायेऽस्मिन् निबन्धे तद्युगीनानां रमणीनां विषये किञ्चिदप्यभिधातुं यतिष्यामहे। परं तत्परवर्तिन्यो रमण्योऽपि न केवलमुच्चशिक्षिताः परं बहून् ग्रन्थानपि विरचयन्त्य आसन्नित्यस्य धाराकारा ऐतिहासिक्यः प्रवृत्तयो मन्ये बहूनामेवाज्ञातचर्या इति तद्विषयमवलम्ब्य किञ्चिदिव प्रस्तुमः। तत्कृतानां संस्कृतग्रन्थानामादर्शा भारतवर्षस्य विभिन्नेषु प्रदेशेषु—क्वापि साधारण-पुस्तकागारे, क्वापि व्यक्तिविशेषस्य गृहे, क्वापि मठे मन्दिरे वा विक्षिप्ताः साधारण्येब्वप्रकटा वर्तन्ते। यत् सत्यं काल-स्त्रोतसापि केचन विलयं प्रणीता विदुन्वन्त्येव मानसं सहृदयानाम्। एवं स्थितेऽपि काव्य-पुराण-स्मृति-तन्त्रादिषु तासामनितरधारणीं पारदर्शितामारोपयन्तो ये ये ग्रन्था अस्माभिरन्विष्यान्विष्योपलब्धास्तेषां मूल्यमपि न स्वल्पतयाऽवधारयितुं शक्यते। तदेतेभ्यो ग्रन्थेभ्यः प्राचीनानां भारतीय-रमणीनां बहुमुखायाः प्रतिभायाः परिचयोऽस्माभिर्लभ्यते। संस्कृतसाहित्ये भारतीय-नारीभिरुपहृतानामेषां दानानां यत् किल सावशेषं वर्तते, तेनापि मन्ये महतोऽस्य साहित्य-महीरुहस्य नवीना काचन शाखा प्ररोढुं क्षमते। तत्र तत्रेति कृत्वाऽनवरतमनुसन्दधता मया याः किल रचनास्तासां संगृहीतास्ताः क्रमेण ग्रन्थात्मना प्रकाश्यन्ते। तेष्वेव कियतां

ग्रन्थानां काचन संक्षिप्ता विवृतिर्मयाऽत्र दीयते। एतानधिकृत्य विस्तृतं विवरणं धारावाहिरीत्याऽतःपरं क्रमशो लिपिबद्धं कर्तुमस्त्येव से महान् मनोरथः।

## दृश्यकाव्यं — नाटकादि।

सचिवोत्तमस्य महापण्डित-घनश्यामस्य द्वे पत्न्यौ सुन्दरी कमला च बालकवे राजशेखरस्य कृतिं विद्धशालभञ्जिकां नाम नाटिकामुपजीव्य मनोरमां पाण्डित्यलीलाक्षेत्रायमाणां काञ्चन टीकां रचयतः स्म, यस्याः सुन्दरीकमलीयमिति चमत्कारतरङ्गिणीति च नामद्वयी दृश्यते। तयोर्भर्ता घनश्यामोऽपि तस्याः शालभञ्जिकायाः "प्राणप्रतिष्ठां" विदधौ। अपूर्वा बोधशक्तिः सुन्दरी-कमलयोः, अपूर्वा भाषा, अपूर्वा च विचारदक्षता। ते तु केवलं तद्ग्रन्थीयटीकाकृतामेव न समालोचनं चक्रतुः, परमतिप्राचीनानां कालिदास-भवभूति-विशाखदत्तामरसिंहानां महामनस्विनामपि कठोरकठोरां समालोचनां कर्तुं न बिभ्यतुः। सेयं समालोचना कठोरापि बहुषु स्थलेषु समीचीनेत्यस्माकं प्रतिभाति। स्वीयाभिमतिपोषणार्थमेते बहूनामलङ्कारा।भिधान-व्याकरणादि-शास्त्राणां सम्मतिमाजह्रतुः, परं तेष्वनेक एव ग्रन्थाश्चिराय जगतो विलीना इति भृशं विषीदामः।

## श्रव्यकाव्यं—महाकाव्यादि।

नारीकृतीनां श्रव्यकाव्यानां यन्नामनिदर्शनमस्माभिरासादितं तेन तद् द्विधा विभजितुं शक्यते (१) पृथग्विषयमवलम्ब्य रचिताः कविताः, (२) सम्पूर्ण-काव्यञ्च।

१ घोषाऽपाला-विश्ववारा-प्रभृतयो वैदिक-नारीऋषयः पाली-प्राकृत-भाषाया नारीकवयश्चात्र न समुल्लिख्यन्ते। तानेतानपहायाप्यन्येषामपि नारीकवीनां नामास्माभिराकर्णितं ये संस्कृतभाषया कवितां व्यलिखन्, यांश्च प्रसिद्धाः साहित्यमहारथिनो राजशेखर-धनददेव-प्रभृतयः प्रभूतेन स्तुतिवादेनायोजयन्। एषु च केचन केवलं नामशेषा वर्तन्ते, न परं वस्तुतोऽपि, दौर्भाग्यादस्माकं तेषां सुघटित-काव्योद्यानश्च नैकं विशीर्णमपि दलम् अस्मत्कृते सावशेषं वर्तते। तादृशानां केषाञ्चन नाम समुल्लिख्यते— कामलीला, कनकवल्ली, ललिताङ्गी, मधुराङ्गी, सुनन्दा,

विमलाङ्गी, प्रभुदेवी, लाटी, विजयाङ्केति। येषां च कविताः स्वल्पविस्तृततया समुपलब्धास्तेष्वपि कियतां नामोल्लिख्यते—इंदुलेखा, भावदेवी, गौरी, केरली, कुटला, लक्ष्मीः, मदालसा, मधुरवर्णी, मदिरेक्षणा, मारुला, मोरिका, नागम्मा, पद्मावती, फल्गुहस्तिनी, चन्द्रकान्ताभिक्षुणी, प्रियंवदा, सरस्वती, सरस्वती-कुटुम्बदुहिता, शीलाभट्टारिका, सीता, सुभद्रा, त्रिभुवनसरस्वती, चण्डालविद्या, विद्यावती, विज्जा, विकटनितम्बेति। एषु कस्यचन त्रिशत्-पञ्चत्रिंशा अपि कविता मया विभाविताः, केषां पुनर्द्विचतुराः। प्राप्ताश्च कविता विविधविषयोपजीवनेन कविभिर्विरचिताः, तद् यथा—देवस्तुतिर्दर्शनं धर्मः प्रेम देहावयवाः पशवः पक्षिण इत्येवमादयः। कवितानामासां भाषाभावौ मधुरौ, आलङ्कारिकी छान्दसी च निपुणतापि न न्यूनतामावहति। नारीकवीनामेषामन्या अपि कविता आसन्नित्यत्र नास्ति कश्चित्संशयः। भवतु यथा तथा वा, इतस्ततो विक्षिप्तानामप्येतेषां द्विचतुराणां कुसुमानां सौरभेण दिशो विदिशश्चामोदिता वर्तन्ते। कविष्वेतेषु केचन नवम्या दशम्या वा शताब्द्याः पूर्वं भारतमलमकार्षुः।

२ वयं भारतीयनारीकवीनां कानिचन सम्पूर्णानि काव्यान्यासादितवन्तः।

(क) तत्र संग्रामसिंहजनन्या अमरसिंहमहिष्या देवकुमारिकया कृता वैद्यनाथप्रासादप्रशस्तिरन्यतरा। वैद्यनाथनाम्नः शिवस्य प्रासादप्रतिष्ठावसरे प्रशस्तिरियं रचिता तन्मन्दिरगात्रे समुत्कीर्णा च वर्तते। इतिहासानुगृहीता प्रशस्तिरियं वस्तुगत्या राजमात्रा कृता नवेति समस्त्येव सुमहानवकाशः सन्देहस्य। सेयं राजमहिषी खृीष्टीयाष्टादशशताब्दीप्रथमभागे राजपुतनाख्यभूभागे जन्म जग्राहेत्यैतिहासिकी स्थितिः।

(ख) राज्ञ्या गङ्गादेव्या कृतं मधुराविजयापरनामकं वीरकम्परायचरितं द्वितीयम्। इयं विजयनगरसम्राजो वीरकम्पनराजस्य महिष्यासीत्। खृीष्टीय-चतुर्दशशताब्द्या मध्यभागे भर्तुर्मधुरा (मादुरा) विजयमुपजीव्यायं ग्रन्थस्तया रचितः। तदिदं काव्यं दाक्षिणात्यस्य चतुर्दशशताब्दीसंघटितैरैतिहासिकतत्त्वैरलङ्कृतं वर्तते।

(ग) ताञ्जोरनृपते रघुनाथनायकस्य सभाकवीभूतया मधुरवाण्या कृतं रामायणकाव्यं तृतीयम् । काव्यकर्त्रीयं खृीष्टीय-सप्तदशशताब्दी-प्रथमभागे वर्तमाना रघुनाथकृतम् आन्ध्ररामायणमवलम्ब्य पुस्तकमिदं व्यरीरचत् ।

(घ) यथोक्तस्य रघुनाथनृपतेः सभाकव्यन्तरीभूतया रामभद्राम्बया कृतं रघुनाथाभ्युदयनामकं महाकाव्यमन्यत् । ग्रन्थेऽस्मिन् रघुनाथस्य राज्ञो रूपं गुणा विजयप्रवृत्तयश्च वर्णितान्युपलभ्यन्ते । पुस्तकादस्मात्तात्-कालिकमैतिहासिकं तत्त्वं प्रभूतमेवाविर्भवदासाद्यते ।

(ङ) विजयनगरसम्राजोऽच्युतदेवरायस्य सभाकवयित्र्या तिरुमलाम्बया कृता वरदाम्बिकापरिणयचम्पूरन्यतरा । खृीष्टीय-षोडशशताब्दी-मध्यभागे तया विरचितस्यास्य चम्पूकाव्यस्य प्रथमे भागे अच्युतदेवस्य वंशावली तस्य पितुर्विजयवार्ता तस्य बाल्यावस्था चेत्यादीतिहासशुद्धं विवरणं लिखितमास्ते । उत्तरस्मिन् भागे नृपेणाच्युतरायेण सह वरदाम्बिकायाः परिणयस्तत्पुत्रस्य चिन्नवेङ्कटरायस्य जन्मादि च विवृते । अस्मिश्चोत्तरस्मिन् भाग इतिहासात् कवित्वमेवाधिक्येन पदं निदधौ ।

### आधुनिका नारीकवयः

यद्यप्यद्यत्वे संस्कृतस्य पठन-पाठने भूयसा ह्रासमुपगते, तथापि भारतीया रमण्य इदानीमपि यत् काव्यचर्चायां नैकान्ततः पराङ्मुख्यः सञ्जातास्तस्य नैकं प्रमाणं दर्शयितुं शक्यते । यथा मालवारदेशस्य लक्ष्मीराज्ञीकृतं सन्तानगोपालनामकं काव्यम् । अन्याश्च काश्चन नाममात्रेणोल्लिख्यन्ते – अनसूया, कमलाबाई, वापट, बालाम्बिका, हनुमन्नाम्बा, ज्ञानसुन्दरी, कामाक्षी, मन्दयमघाटी, आलमेलम्मा, राधाप्रिया, रमाबाई, श्रीदेवी, बालराज्ञी, सौत्रामणिदेवी, सुन्दरवल्ली, त्रिवेणीति

### पौराणिक—कर्मपद्धतिः

मण्डलीकनृपतेः कन्या हरसिंहस्य राज्ञः पट्टमहिषी वीणाबाई खृीष्टीयायां त्रयोदश्यां चतुर्दश्यां वा शताब्द्यां गुर्जरं जन्मना समलङ्कृतवती । श्रुति-स्मृति-पुराणेषु तस्याः प्रगाढं पाण्डित्यमासीत् । तया प्रणी

द्वारकापत्तलं नाम पुस्तकं वर्णाश्रमिणां धर्म्ये कृत्ये साहायकमाचरदा-

चन्द्रतारकं भारतं वर्षमलङ्करिष्यति । इयमस्याः कृतिविविध-तीर्थ-देश-जनपद-भ्रमणज-प्रतिभासारापि द्वारकामात्रमुपजीव्यात्मानं लभते । एते-नैतदवगम्यते यन्न केवलं वैदिकयुगीया रमण्य एव धार्मिकेषु व्यापारेषु विशेषेण लौकिकाचारेष्वध्यक्रियन्त परं पारकालिक्योऽपि स्त्रियस्तत्र दत्तकरावलम्बा देशस्य धार्मिक-लौकिक-क्रियाकलापमवलम्ब्य पाण्डित्य-मण्डितान् विविधान् ग्रन्थान् रचयाम्बभूवुः ।

## स्मृतिशास्त्रम्

स्मार्तनारीषु विश्वासदेवी पायगुण्डाख्य-लक्ष्मीदेवी चान्यतमे । पद्मसिंहस्य पट्टमहाराज्ञी विश्वासदेवी ख्रीष्टीय-पञ्चादशशताब्द्यां मिथिलायाः सिंहासनं स्वपदस्पर्शपूतमातनोत् । अनपत्यतया पुनस्तस्या अवसाने राज्यं भवसिंहपुत्रस्य हरसिंहस्य करगतमासीत् । स्वतो धर्मप्रवणतया ततोऽपि गङ्गां प्रत्यत्यन्तासक्ततया सा तामाश्रित्य महदेकं पुस्तकं व्यरचयत्, यस्य "गङ्गावाक्यावली"ति नाम । श्रुति-स्मृति-पुराणेतिहास-ज्योतिषादीन् महतः शास्त्रराशीनुन्मथ्य सा सम्भाव्यमाना गङ्गाविषयिणीर्दर्शन-स्पर्शन-श्रवणस्नानाद्याः क्रियाः सुविहितया शैल्या स्वाभिलाषानुरूपं विहितवती । स्मृतितत्त्वस्य कठोरे विचारव्यापारे कठिनतमे याथार्थ्यनिरूपणे च न सा क्वचिदपि पाराङ्मुख्यं परिशीलयन्त्यस्माभिरालोकिता । प्रत्युत सर्वत्रैवानुपमेन विश्लेषण-शक्तिमहिम्ना सुप्रकटेन प्राचीन-मतादि-विवेचनेन अतिरोहितया स्वीय-वक्तव्यपरम्परया च सा सर्वदौन्मुख्यमेव प्राख्यापयत् । ग्रन्थोऽयमर्वाचीनानां स्मार्तानामुपादेय आसीत् । स्मार्तशिरोमणिभूता मित्रमिश्ररघुनन्दनभट्टाचार्य-वाचस्पति-मिश्रप्रमुखाः पण्डिताग्रेसरा अपि ग्रन्थस्यास्य मतमुदलिखन् प्रायेणेदमेव तथ्यमिति च स्वीचक्रुः । आतलस्पर्शि-पाण्डित्यप्रसूतमिदं पुस्तकं कथङ्कारं रमण्याः कृतिः स्यादिति विस्मेराः केचन विद्वद्धौरेया ग्रन्थोऽयं कविवर्यस्य विद्यापतेरिति बभ्रमुः । निबन्धग्रन्थेभ्यः पुराणादिभ्यश्च प्रमाणसंग्रहे साहायकं विदधद् विद्यापतिर्ग्रन्थोयं विश्वासदेव्याः कृतिरेवेति स्पष्टं प्रतिपादयति स्मेत्यपरोक्षं ग्रन्थमिममालोचयताम् । एवञ्च नायं विश्वास-देवीकृत इति सन्देहमात्रशरणं गवेषणं शशविषाणान्वेषणमिव श्रमसारं मेषां पण्डितानाम् ।

पायगुण्डोपाख्य-लक्ष्मीदेवी सुप्रसिद्ध-वैयाकरणस्य वैद्यनाथ-पायगुण्डस्य सुयोग्या सहधर्मिणी। विरल एव जगदन्तराले महनीयोऽयं मणिकाञ्चनयोगः। सेयं खृीष्टीयायामष्टादशशताब्द्यां जीवन्त्यासीत्। तत्कृतायाः कालमाधवटीकाया द्वितीयाध्यायस्यान्तिमे भागे प्रसङ्गतस्तयाऽभिलिखितं यच्छकनरपतेश्चतुर्दशोत्तर-सप्तदशशतके (१७१४) एतट्टीकाविरचनात् कियत्यपि प्राक्काले कादाचित्कस्त्रयोदशभिस्तिथिखण्डैरेकः पक्षः सञ्जघट इति।

लक्ष्मीदेवीयमसाधारण-प्रतिभासारा भारतरत्नभूता रमण्यासीदित्यत्र नास्ति कश्चिदपि संशयः। विज्ञानेश्वर-कृतां याज्ञवल्क्यटीकां मिताक्षरामुपजीव्य तया मिताक्षराव्याख्यानं नाम काचन टीका प्राणायि। स्मार्त-धुरीण-माधवाचार्य-विरचितस्य "कालमाधव" नाम्नः स्वनामख्यात-स्मृतिग्रन्थस्योपर्यपि तया स्वनाममुद्राङ्किता "कालमाधवलक्ष्मी" नाम्नी टीका कृता। लक्ष्मीरियं साक्षात् सरस्वत्यासीत्। पारेपरार्धं शास्त्राणामगधबोधस्तस्या रचनायाः प्रतिपंक्ति प्राकटयमाटीकते। वैदिकीः संहिताः ब्राह्मणान्युपनिषदः सूत्राणि महाभारतादि प्राचीन-नवीने स्मृती पुराणोपपुराणानि ज्योतिषं विशेषेण व्याकरणं यथावसरं यथायथं तथा सुनिपुणमुध्दृत्य तथा व्याख्यातानि यथा तदवलोकयतामतिप्रतिभाप्रदीप्तानामपि चक्षूंष्याकाशमेवोत्पतितुमुत्सहन्ते नाम। महाप्राज्ञोऽयं माधवाचार्यो वक्तव्यान् विषयान् युक्त्या शोधयन् सिद्धान्तेन समीकर्तुमनितरसामान्यां शक्तिमत्तामवगाहते। तस्यैतस्य कृतेष्टीकाकरणप्रयास एवातिसाहसं दूरे तद्गुणदोष-विचार-चातुरी। परमिदमाश्चर्यं यद् व्याख्याने नैकत्र सा तत्त्वानुसन्धानेन विश्लेषणपारदर्शितया च माधवार्यमभिभवन्तीव भाव्यते। एवमपि दृश्यते—क्वचिन्माधवमस्पष्टमिव मन्वानानामपि लक्ष्मीः स्पष्टतयाऽवभासते। अनाविष्कृतनिर्वचन-दुर्बोधे माधवे प्रतिपत्तॄणामाविष्कृतसारल्या सौजन्यसारा मुखरा च लक्ष्मीः सुगमतामवगाहते। वस्तुतो लक्ष्मीसदृक्षा सरस्वती सुरभारती-पूते भारतेऽप्यनारतं नावतरत्येव। अपरे अपि द्वे टीके स्तः कालमाधवस्य। ते च कालमाधवलक्ष्म्याः प्राचीने। तयोरन्यतरा च मूलकृत एव कृतित्वेन प्रचलति। ते इमे टीके समं कालमाधवलक्ष्म्या संमुद्रय प्रदर्शितम् अस्माभिरासां

वैसादृश्यम् । ते च टीके उपोद्घातमात्रपर्यवसायिन्यावधस्तान्न प्रसरतः स्म । आदित आन्तं यावस्लक्ष्मीरेव सुचारुरूपेण टीकां प्राणयत्, तस्या एवानुकम्पया मथिताज् ज्ञान समुद्रादुदभूज्जगतः कल्याण-हेतुः "कालमाधवलक्ष्मीः"—भारतस्य विशिष्टा भारती ।

## तन्त्रशास्त्रम्

प्रसिद्धस्य तन्त्रशास्त्रविदः प्रेमनिधेः पत्नी प्राणमञ्जरी शिक्षा-दीक्षयोः सर्वथा पत्युरनुवर्तिन्यासीत् । ख्रीष्टीयाष्टादशशताब्द्याः प्रथमे भागे सा कुमायुने जन्मागृह्णात् । तत्कृतायास्तन्त्रराजतन्त्र-टीकायाः प्रथमपटलमात्रमवशिष्यते । भूयसा निश्चयकोटिमाश्रयतेऽयं संशयो यन्नूनमन्येषामपि पटलानां तया टीका कृता,परं कालक्रमेण सा चिराय विनष्टेति । अस्माभिः प्रकाशिताच्छिष्टोपलब्धभागादेव प्रमाणीभवति यदियमन्यानपि बहून् ग्रन्थान् विरचयमासेति । टीकायाश्चास्याः सुदर्शनमिति नाम । सुदर्शननाम्नस्तत्पुत्रस्य मरणादूर्ध्वं तन्नाम्नश्चिरस्थैर्यमिच्छन्त्या अक्षरालीमयीयं सुदर्शननाम्नी टीका तया विहितेति तत एव ग्रन्थादवगम्यते ।

टीकायामस्यां तया तन्त्रशास्त्रविषयिणी प्रगाढा निपुणतोपदर्शिता। तन्त्रस्य प्राथमिकश्लोकस्य पञ्चविधां व्याख्यां विधाय सा परं पाण्डित्यमुपादर्शयत् । सा मनोरमाकर-सुभगनाथ-प्रमुखाणां टीकाकृतामन्येषां तान्त्रिकाणामनेकेषां शास्त्राणाञ्च मतमुद्धृत्य क्वचित् खण्डितवती क्वचिद्वा स्वपक्षीकृतवती । तन्त्रस्य सूक्ष्मातिसूक्ष्मं मतमाश्रित्य प्रवर्तितस्तया सूक्ष्मतमो विचारः । तन्त्रान्तराणामपि मतमुद्धृत्य विखण्डच च स्वमतमेतया प्रतिष्ठापितमनेकत्र । एवमतिविदुष्यपि सा स्वकीयटीकानिर्माणे स्वाभीष्ट-देवस्य हैहयस्य प्रसादादपि स्वामि-प्रसादमेव बहुमन्यते स्व । प्रशंसार्हस्तस्याः परमजटिलेऽपि तन्त्रशास्त्रे तादृशः पाण्डित्य-प्रकाशः ।

वयमाशास्महे— अनुयुगं भारतीया रमण्यो यां नाम ज्ञानवर्तिकां प्राज्वलयन्, तस्याः प्रकाशमनुसृत्य वर्तमानयुगवर्तिन्यो रमण्योपि प्रभूतं ज्ञानमुपार्ज्य देशस्य दशानाञ्चोपकाराय तद् वितीर्य च धन्यम्मन्या भविष्यन्तीति । शम् ।

# अतीतावशेषाः !

लेः- विद्याभूषणः श्रीगणेशराम शर्मा, साहित्यरत्नम् झालावाड़

सुविख्यातो महान् प्रवासी मार्कोपोलो महाशयो यदा काश्मीरमाजगाम तदा तदुपरि काश्मीर-सुंदरीणाम् रूपसौन्दर्य्यमाधुरीणां, मन्त्रतन्त्रविद्यानां तथा तामस चमत्कारतन्त्राणां, महान् प्रभावोऽजायत । स खलु स्वयात्रायाः प्रवासवृत्तान्त-विवरणा - वर्णन - प्रसङ्गे लिलेख यत् काश्मीरदेशीयास्तान्त्रिकाः पाषणप्रतिमा अपि मुखरयन्ति स्म । स्वेच्छानुसारं वायुमानम् पर्यवर्तयन्, प्रकाशमन्धकारेऽन्धकारं च प्रकाशे परिणातमकाःर्षु ।

× × × × × ×

मुगल-सेनायामश्ववाराणां प्रमुखं स्थानं तदङ्गत्वेनासीत् । अश्वानामश्ववाराणां च सम्यक् निपुणं निरीक्षणं क्रियते स्म, तत्र जागरूकं सावधानं सतर्कं च व्यवस्था-निरीक्षणं भवति स्म । तदानीं निरीक्षणाकालेऽन्येषामपि जात्य-तुरङ्गमान् समानीय प्रदर्शनस्य प्रवृत्तिः सामन्तानां महती हि प्रचलिता बभूव । तामिमां वञ्चकवृत्तिं निरोध्दुं सम्राट् अकबरो नानाप्रयत्नान् चक्रे । मनसबदारश्रेणीनामश्ववाराणां तत्तुरंगमानां च परिचय-चिह्न-संकेता आपि लिख्यन्ते स्म पञ्जिका-सूचीषु । मनसबदाराणां सैनिकानां च नाम संज्ञा पितुर्नाम, जातिर्निवासस्थानं देहवर्णाः ललाट-कर्ण-नासिका-नेत्र-भ्रू-श्मश्रु कूर्चोच्चतादीनां, विशेषचिह्नानामपि वर्णनं लिख्यते स्म; एवमेवाश्वानां परिचय-संकेता अपि लिख्यन्ते स्म । तदानीं तुरगानां सप्त जातयोऽभूवन् आरबीयाः ईरानी, मुजन्नस, तुरुष्का, याबू, वाजी, वङ्गेति ।

× × × × × ×

अधुना सर्वत्र प्रचलितासु घटिकासु पूर्वं ( Watch ) घण्टामिनटनिदर्शकौ द्वावेव कण्टकावास्ताम् । पल-प्रमाणामापकस्य ( Second.... ) तृतीयस्य लघुतमस्य कण्टकस्य शोधनं सर जान फ्लॉयर नाम्ना आंग्ल चिकित्सकेन (१३४३-१७३४) रोगिणां नाडीस्पन्दनगतिक्रमं गणायितुं कृतम् ।

× × × × × ×

अश्वानां परिचयाय अग्नि-दाहेन संकेतचिन्हप्रथायाः प्रचलनमभूत्। अयं प्रचारो द्वादश्यां शताब्द्यां फ्रांस-ओरिसंस्थानेऽपि चाभूत्, अलाउद्दीन-खिलजिना तथा शेरशाहेनापि चास्याः पद्धत्या उपयोगोऽक्रियत। लोहखण्डमग्निना सन्ताप्याश्वस्य ग्रीवायामेकं संकेतचिन्हमक्रियत विभिन्नकक्ष्यानामश्वानां परिचय-संकेतानां पृथक् चिन्हान्यासन्। केचिन्मनसबदारा अपि स्वकीयाश्वपरिचितये स्वनाम्नः प्रथमाक्षरस्य वान्तिमाक्षरस्य वन्हिदाहसंकेतमकारयन्।

× × × × × ×

सप्तदश्यां शताब्द्यां फ्रांसदेशस्य पेरिसनगरे चायपत्राणि, चुरुटिका-धूम्रपान विधिना पेपीयन्ते स्म।

नेपोलियनस्य राज्याभिषेकोत्सवसमये यो हि-वेशो धृतोऽभूत्तत्र शतत्रय संख्यकाः घटिता मधुमक्षिकाः खचिता बभूवुः! इमाः स्वर्ण मधुमक्षिकाः ११७४ ईस्वीये वर्षे राज्ञः आइल्डेमिक प्रथमस्य समाधौ न्यधीयन्त।

× × × + × ×

पाण्डवाः स्वजनन्याः कुन्तीदेव्या आदेशानुरोधात् पञ्चापि च भ्रातरो द्रौपदीं परिणिन्युरिति त्वस्मत्पुराणेषु प्रचलितमस्ति। तथैवैका द्वितीया घटना फ्रांसदेशे समघटत। यत्र मातापित्रोरज्ञानुरोधात् एको भ्रातरौ वहन्! महान्ति साहसपूर्णानि कार्याणि चक्रे)

ईशवीयात् १५४६ वर्षतः १५६२ वर्षं यावत् फ्रांस देशस्य वर्नस्थाने एकः ईश्मिएने द सेण्टलोप नामकः सामन्तः महान् पराक्रमी शूरो वीरश्च सैनिको बभूव। तस्य द्वौ भ्रातरावस्ताम्। तौ पङ्गू अभूताम्। पितरौ विकलाङ्गयोर्द्वयोर्महतीं चिन्तामकुरुताम्। स्व-जननी-जनकयोस्तामिमां चिन्तामपकर्तुं ईस्पीयनः प्रतिजज्ञे यत् सः स्वयं यत्र यत्र गमिष्यति तत्र तत्र स्वीयौ पङ्गू भ्रातरावपि सहैव नेष्यतीति तयोः सहवसतिं न कदापि त्यक्ष्यतीति च तेन प्रतिज्ञातमभूत्। इत्थं प्रतिज्ञानन्तरं तु इस्पीयनः संख्याबद्धानि युद्धानि योध्दुं विवशो बभूव। पितृभ्यां कृतप्रतिज्ञतया स एकस्मिन्नेवाश्वपृष्ठे तौ द्वावपि पङ्गू भ्रातरावारोप्य युद्धक्षेत्रेऽवतरीतुं प्रचक्रमे शत्रूंश्च जिजिगाय। एवं सः विंशतिवारं योध्दुं जगाम, परमेश्वरानुकम्पया सर्वेष्वपि च युध्देषु विजयश्रियमासाद्य न्यवर्तत। ततस्तु स 'एकाश्वारोहक त्रयम्'— इति संज्ञया पर्यचीयत लोकैः। स च बहु सम्मानितः समादृतश्च बभूव।

× × × × × ×

अस्माकं भारतीय गणराज्यस्य प्रधानो महामंत्री श्री जवाहरलाल नेहरू-महाभागोऽधुनैवामरीकाराष्ट्रस्य भूतपूर्वस्य राष्ट्रपतेः श्री अब्राहिमलिंकनमहोदयस्य पित्तलधातुविनिर्मितं हस्तमेकमुपायनरूपेण समर्पितमलभत। लिङ्कनमहाभागस्य तमिमं पित्तलहस्तं श्री नेहरू-महोदयः स्वकार्यालयस्य लेखनकाष्ठफलके ( टेबुल ) न्यधत्त। विषयेऽत्र श्री नेहरूमहोदयेन विज्ञापितमभूद्यत् श्रीअब्राहमलिंकनस्यायं हस्तो मे सदा वस्तुत्रयं सततं स्मारयति—१-अविचलता [ धैर्यम् ] २—कठोरता [संयमोऽनुशासनं च ] ३ — कोमलता [ करुणार्द्रहृदयता सामाजिकता, सरलता च ] एभिरेव त्रिभिर्गुणैः श्री अब्राहमलिङ्कनमहोदयो महापुरुषो बभूव। सोऽयं हस्तो ममापि त्रीन् गुणानिमान् नित्यं स्मारयति।' अस्य हस्तस्योपायनरूपेण प्राप्तेरनन्तरं श्रीनेहरूमहोदयः स्वलेखनकाष्ठफलकात् सर्वानप्यन्यान् पत्रभारान् व्यपनयत्।

× × × × × ×

—सर्वादौ मिश्रदेशवासिनो बिडालपालनमारेभिरे। न केवलं ते बिडालपालनमेव चक्रुः परं तान् बहु सम्मेनिरे। मार्जाराणां पूजनाय ते मन्दिराण्यपि च प्रातिष्ठिपन्। यदि कश्चिन्मार्जारो म्रियते स्म; तदा तस्य शवं तैलौषधिप्रभृतिभिर्द्रव्यैः 'मर्मा' रूपेण सुरक्षितं कृत्वा सम्राजां ममीकृतानि शरीराणीव ररक्षुः। यदा तेषां कुटुम्बे मार्जारो मृत्युं गच्छति स्म तदा तच्छोकं प्रदर्शयितुं सर्वेऽपि कौटुम्बिकाः श्मश्रुशिरोमुण्डनं क्षौरमकारयन्।

× × × × × ×

—ब्रिटिशराष्ट्रस्य सम्राट् जार्जस्तृतीयो बालकान् कठोरे नियन्त्रणे सानुशासनं स्थापयितुं ववाञ्छ। तस्य सोफियानाम्नी पुत्री क्वचिल्लिलेख यत् तस्यास्त्रयोदश चतुर्दश वार्षिकौ द्वौ भ्रातरौ तदुपस्थितावेव सम्राट् एकदा कशाघातैः प्रजहार। सम्राज्ञ्या विक्टोरियादेव्याः शासनकालेऽपि च सम्राजः कौटुम्बिकान् बालकान् नियन्त्रणे रक्षितुं कठोरो व्यवहारः क्रियते स्म। सम्राज्ञ्या विक्टोरियायाः पंचवर्षदेशीयो बालकोऽपि यदि तदाज्ञां विनाभाषत तदा तस्याः क्रोधावेशात् सनासाक्षिसङ्कोच-भ्रूभङ्गो भवति स्म।

× × × × × ×

—सर जार्ज ग्रियरसन 'भारतीय-भाषा-सर्वेक्षणा' ( The linguistic survey of India ) नाम्नि स्वपुस्तके लिलेख यत् हिन्दीभाषायाः सर्वप्रथमो व्याकरणलेखको जॉन जोशुआ केटलर इति महाशयो बभूव। केटलर महाशयो

'डच ईस्ट इण्डिया कम्पनी' संस्थाया मृत्योऽभूत् । तेनेदं व्याकरणं डच्भाषायां सन् १६१५ ईशवीये वर्षे लिखितम् । युट्रेश विश्वविद्यालयस्य पूर्वीय भाषाणां प्राध्यापको डेविडमिल महाशयोऽस्य व्याकरणस्यानुवादं कृत्वा 'मिसलेनिया ओरिएण्टालिया' नाम्नि पत्रे प्राचीकटत् । तस्यैका प्रतिलिपिः 'हेग स्टेट रेकॉर्ड आफिस' नाम्नि स्थानेऽद्यापि च सुरक्षितावतिष्ठते । अत्र पुस्तके हिन्दी भाषायाः पारसीकभाषायाश्च द्वयोरपि व्याकरणे शब्दकोशौ च विद्येते ।

× × × × × ×

—सिन्धुप्रान्ते जगद्विख्याते 'मोहनजोदडो' स्थाने या त्रिमूर्तिरुपालभ्यत; सा 'आन' इति संज्ञयाभिधीयते । सिन्धुसंस्कृतौ 'आन' इति सर्वश्रेष्ठस्य परमेश्वरस्याभिधानमभूत् । एतदभिधानं किलाद्यापि तमिलभाषायां प्रचलितमस्ति । एतन्नामास्मिन्नेवार्थे बेबीलोनिया असीरिया क्रीटादिदेशानां भाषास्वपि समुपयुज्यते । अनेन विदुषामयमभिप्रायो भवति यत्कस्मिंश्चिद्युगे द्राविडभाषा समग्रेऽपि भारते भाष्यते स्म । अस्याश्च भाषितारो न केवलं भारत एवापि तु विदेशेष्वपि च स्वसंस्कृतिं प्रसारयामासुः । केचिन्मन्यन्ते, आर्या द्राविडाश्चैकस्या एव जातेर्द्वे शाखेऽभूताम् । भूगोल-परिस्थितिः शनैः शनैस्ते द्वे पृथक् चक्रे ।

× × × × × ×

—पुराणानुशीलनस्य प्रामाण्याद्यत्त्वे कर्नल विलफर्डमहाशयस्येदं मतं यत् प्राचीना भारतीया मिस्रदेशं पर्यचिन्वन् । मिस्रदेशीयस्य सूर्यदेवस्य वाहनभूते श्येनपक्षिणि तथा भारतीयस्य भगवतो महाविष्णोर्वाहनभूते गरुडदेवे चैकरूपताऽस्ते । ऋग्वेदस्य सूर्यदेव एव पश्चाद्विष्णुरजायतेति तु निर्विवादम् । अतः परं महाभारतस्याद्ये पर्वणि नागपत्नीकद्रू गरुडयोश्च सम्वादोऽस्ति, यत्र सा कद्रू वदति गरुत्मन्तम्— 'भो गरुत्मन् ! त्वं मे पुत्रान् समुद्रस्य परस्मिन् पारे स्थितान्देशान् नयस्व; यान् रमणीयकानिति कथयन्ति लोकाः । अनेनानुमीयते यत्तदानीं मिस्रदेशे नागजातीया लोका न्यवसन्निति ।

× × × × × ×

—इयमपि च मान्यतास्ति यत् बिलोचिस्तानदेशस्य दक्षिणे मकराण-नाम्नि प्रदेशे द्राविड़ा जना एव न्यवसन् । एतत्कथ्यते, यत् सिकन्दरस्याक्रमणकालेऽत्र प्रान्ते 'अरावण' संज्ञका लोका [illegible] । [illegible] प्रदेशे सोऽयं शब्दोऽतीव

व्यापकोऽस्ति । अयमपि शब्दः सूचयति यत् कस्मिंश्चित्काले मिस्रदेशे द्राविडायाः संस्कृतेः प्रभुत्वमासीत् । मिस्रभाषाया 'रा' शब्देन सूर्योऽभिधीयते तामिल भाषायामपि 'रा' शब्दस्यामेवार्थः । एवमेव अलई (तरंग) अम्मा (माता) उदई (वस्त्रम्) इत्यादयः शब्दा अपि द्वयोर्भाषयोः समानार्थकाः ।

× × × × × ×

—सेयं घटना भार्गवपुरस्य (भागलपुर) । सुप्रसिद्ध उपन्यासकथा-लेखकः श्रीशरचन्द्र चट्टोपाध्यायः कदाचित्सीमानियुक्तं पत्रवाहकं (Postman) दृष्ट्वा तं पप्रच्छ—'अयि भोः ! देवके ! ! अप्यस्ति मदीयं किमपि पत्रम् ? पत्रवाहकः प्रत्युदतरत्—'महाशय ! नास्ति भवदीयं किमपि पत्रादिकम्, किन्तु 'मच्छरबाबू' नामा कश्चिन्नवागन्तुको महाशयोऽत्रगतोऽस्ति । घण्टाद्वयं तमिमं महानुभावं विचिन्वन्नहं परिश्रान्तोऽस्मि' । शरच्चन्द्रो मन्दं मन्दं विहसन्नुवाच—'मच्छरबाबुः ? नो बन्धो ! बङ्गवासिषु तु तादृशः । अन्यत्र क्वचिदन्विष्यताम् । लोका अपि कीदृशानि विचित्राणि नामानि रक्षन्ति !' शरच्चन्द्रस्य वचनमाकर्ण्य पत्रवाहकोऽब्रवीत् 'परन्तु महाशय ! केनापि बङ्गीयेनावश्यं भवितव्यम् !' शरच्चन्द्रेण पत्रवाहकस्य हस्तात्पत्रं द्रष्टुं गृहीतम् ! दर्शनसमकालमेव तत्क्षणमुवाच-'मामकीनमेतत्पत्रम् ।' पत्रवाहकश्चकितः साश्चर्यमब्रूत—'किं भवतोऽभिदानं मच्छरबाबुरित्यप्यस्ति ? शरच्चन्द्रो निरुत्तर इवाभूत् । पत्रवाहकमूचे—'अयं हि सन्धिविषयकः प्रसंगः। न त्वं तं वेदितुं प्रभवेः' ।

—एतत्पत्रं शरच्चन्द्रस्य मातुलेन श्रीविप्रदासगंगोपाध्यायेन पटना-नगरतो लिखितमभूत् । स खलु व्याकरणप्रियोऽभूत्ततस्तेन 'श्रीमत्+शरच्चन्द्र' इत्यनयो द्वयोः पदयोः सन्धिं कृत्वा 'श्रीमच्छरच्चन्द्र चट्टोपाध्याय' इति लिखितमासीत् ।

---

Regd. No. B. 7171

# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणक पोस्ट-टिकीट प्रेषणं कार्यम् ।

व्हि. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कण्टिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लघुतराणां पद्यापेक्षया गद्यमयानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

**BOOK-POST**

To,

Shree ..................

If addressee is not found please return to sender.

पंढरीनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग. ( कर्नाटक )

Printed at the New Gadag Printery Gadag.. by P. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

उडुपि श्रीश्रीमदधमारुमठाधीश श्री विबुधेशतीर्थ स्वामिपादानां
कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर ज्येष्ठ १९५८ जून

प्रधान संपादकाः
कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार
राजा एस्. गुरुराजाचार्याः



संपादकाः
गलगलीत्युपाह्वाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु. ५ एकाङ्कस्य ०-८-०

## मधुरवाण्या मुख्य संचालकाः

श्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादाः

## मधुरवाण्या महा संरक्षकाः

श्री श्री विबुधेशतीर्थः स्वामिपादाः अधमारुमठ, उडुपी प्रतिवर्षं ५०५ रु. प्र

श्रीमन्तः पद्मनाभराव वैद्य महोदयाः ,, ५०५ ,,

### प्रतिवर्षं १०१ रू. प्रदाः मधुरवाण्याः संरक्षकाः

श्री श्री पेजावर मठाधीश स्वामिपादाः श्री श्री स्वादीमठाधीश स्वामिपा

श्री श्री भंडारगिरि मठाधीश स्वामिपादाः

श्री श्री द्वारकामठाधीश श्री शङ्कराचार्य स्वामिपादाः

श्री श्री शृंगेरीपीठाधीश श्रीमद् अभिनव भारतीतीर्थ स्वामिपादाः

श्री श्री कूडली शृंगेरी मठाधीश स्वामिपादाः

---

# विषयानुक्रमणिका

# मधुरवाणी

२३ वर्षे । विलम्बि संवत्सर ज्येष्ठमास सञ्चिका । अङ्कः

## वराहावतारमङ्गलम्

श्रीतुल्यानि कियन्ति सन्ति ललनारत्नानि रत्नाकरे
न्वित्यौत्सुक्यवशात्प्रविश्य सलिले न प्राप्य काञ्चिद् रुषा ॥
दंष्ट्राग्रेण तले प्रहृत्य मिलितं मृत्पिण्डमेवोद्वहन्
लक्ष्म्या संभ्रममीक्षितो मम मुदे स्याद् भू-वराहो हरिः ॥
विश्वान्दोलनकारिभूमिजननी यद्दंष्ट्रपर्याङ्किका-
प्रेङ्खोलोत्सवमाप्य मुग्धशिशुवत् सल्लालिता पालिता ॥
यत्श्वासानिलवीजिताऽम्बुलुलिताऽवाकेलिषूत्तोलिता
भूत्यै मोदनिमीलिताऽस भगवान् पोत्री स धात्रीपतिः ॥
रक्षोरुक्षविलक्षणोग्रवपुरीदृक्षं क्षमे स्वीकृतम्
त्वद्रक्षार्थमुपेक्षते जनकजा लक्ष्मीर्न तद् द्रक्ष्यति ।
नान्या कापि समुद्वहेत्तदधुना त्वामेव कन्यां वृणे
इत्युक्त्वा च वसुन्धरां परिणयन् भूयाद् वराहः श्रियै
सावज्ञं श्वशुराब्धिना च मनुना कार्तज्ञचनम्रात्मना
सासूयं रमया भयाद्दितिसुतैः कौतूहलाच्चामरैः ॥
सव्रीडं क्षमयानुरागरसया यस्साभिमानं किरैः
दृष्टः क्रोडतनुः कृषीष्ट भगवानिष्टं च कष्टं हरेत् ॥

## मासावतरणिका

वासन्ते समये विरुत्य सततं मंजुस्वनाः कोकिलाः
वैपञ्चीश्रुतिपञ्चमस्वरमुदञ्चन्त्यद्य किञ्चालिनः ॥
आम्लेष्वाम्रफलेषु रुच्यपरिणामामोदरस्यो रसः
स्वादिष्ठोऽखिलतुष्टये गुणगणै ज्र्येष्ठो यथार्थाभिधः ।

पुण्यात्मनां सत्क्रियया हि पुण्य पुरीजनाः पुण्यविशेषमापुः ॥



यद्दातृत्वयशोऽतिवर्तितुमलं पञ्चापि देवद्रुमाः
संभूयापि न पञ्चपावकगणो किञ्चास्य ब्रह्मद्युतिम्
नो पञ्चामृतमस्य चाञ्चति रसं वाचां समीचीनतां
तं वन्दे सुयमीन्द्रतीर्थयमिनं दुर्वादिपञ्चाननम् ॥

# को वेदानुद्धरिष्यति?

वेदरक्षा-धर्मशिक्षा-दत्तदीक्षास्तपस्विनः
लोकक्षेमाय जीयन्तां विबुधेशयतीश्वराः ॥

---

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत्
तेषां प्रकाशनदशा च महीसुरैश्चेत्
तानन्तरेण निपतेत् क्व नु मत्प्रणामः ?

इति प्राचीना भोजराज सदृशाः वसुमतीवल्लभाः पारायणप्रवचनादिभिः वेदार्थप्रकाशनमेव नम्यत्वप्रयोजकधर्मतया अवबुध्य वैदिकान् आदृणन्ति स्म नमस्कारैः, गृणन्ति स्म प्रशंसाभिः पृणन्ति स्म भूरिदक्षिणाभिः, विश्रणन्ति स्म गृहक्षेत्रादीन्, प्रीणन्ति स्म पदवीपारितोषिक पुरस्कारादिप्रदानैः सदस्सु ।

तादृशेन हि राजगौरवेण सभाजिताः पदक्रमघनजटादिवेदपाठ प्रणालीपटीयांसः मनुवंशावतंसायमाना गुणैर्गरीयांसः विद्यया वरीयांसः महिम्ना महीयांसः तपसा तेजीयांसः भूयांस एव हि विद्वांसः महीमिमां सनाथयन्ति स्म ।

तदनन्तरं यवनादिपरकीय भूपालानां शासनसमये वेदस्य महतीं क्षेमंकरणशक्ति च सम्यगेव अवबुध्यन्तः सुसंस्कृतप्रजाजनाः वेदविदुषः सामूहिकरीत्या वैय्यक्तिकरूपेणापि यथाशक्ति यथायोग्यं सत्कृत्य दानदक्षिणादिभिः पोषयन्ति तोषयन्ति प्रोत्साहयन्ति स्म च । तेन यदृच्छालाभसन्तुष्टाः ब्राह्मणश्रेष्ठाः गृहस्थधर्माश्रितैः सामान्यजनैरेव प्रदत्तेन अल्पीयसापि दानदक्षिणादिना सन्तुष्य वेदाध्ययनपरम्परामविच्छिन्नां प्राचालयन् । तेषां अल्पतोषिविप्राणां पुण्यप्रभावेणैव चेंगिझखान-अवरंगजेबादिकृतान्तक्रूरयवनभूपालाना दुःशासनसमये दाहितेष्वपि नाशितेष्वपि

चूर्णीकृतेष्वपि श्रौतग्रन्थराशिषु अद्यापि किञ्चिदप्यपरिहीयमाना यथावत्सुरक्षितं तिष्ठति वैदिकज्ञानसंपत् ।

एवं वेनहिरण्यकशिप्वादीनां काले बौद्धचार्वाकादीनां समये शकहूणबर्बरयवनांग्लादीनां च समये अविक्षतं रक्षिता अविकलमवशिष्टा वेदविद्या अद्य स्वराज्यसमधिगमानन्तरं कष्टामेव दशामवगाहते ।

आंग्लानां कालेऽपि एतद्देशीय राजमहाराजाः वैदिकेभ्यः आश्रयं दत्त्वा श्रुतिं गोपायन्ति स्म । पीठाधिपतयोऽपि स्व-स्वसंस्थानेषु वेदविद्यापारंगतान् संरक्ष्य श्री शारादाम्बाया अनुग्रहभाजनतामुपगच्छन्ति स्म ।

परमद्य जात्यतीतः सर्वकारः हिन्दूजातीया ब्राह्मणपालिता इति वेदविद्यां तृणाय मन्यते । संस्थानिकाश्च शरदभ्रविलायं विलीना विलीयमानाश्च वेदरक्षणाद् बहोः कालादेव विरताः । सामान्यजनाश्च आंग्लभाषाध्ययनलब्धवृत्तिवेतनैः कृतकृत्यंमन्यमानाः वैदिकविद्या नामकाचन विद्या अस्तीत्येव विस्मृतवन्तो दृश्यन्ते। अन्ये च केचन जिज्ञासुवृत्तयः गृहस्थाः कलाशालादिषु अधीयानाश्छात्राश्च आंग्लभाषागत वेदभाषान्तरविमर्शादिभिरेव परितृप्यन्तः मूलसौगन्धं मनसापि नाघ्रातुमुत्सहन्ते । इतरे च वैदिकब्राह्मणाः श्राद्ध-पक्ष-विवाहोपनयनादि प्रयोगाणां मन्त्रतन्त्रादिपाठमात्रेण जीविकानिर्वाहमाकलयन्तः वेदसंहिताः स्वप्नेऽपि न समीक्षन्ते । पीठाधिपतयस्तुकेचन प्रान्तीयकेन्द्रमन्त्रिवर्याणां सन्दर्शनसंभाषणादिभिरेव स्वपरमहंसाश्रमं सार्थकं मन्वानाः तदर्थप्रयत्ने सदा दत्तावधाना आतिष्ठन्ते । तथा विपुलक्षेत्रस्वामिनां श्रीमतां पीठाधिपतीनां 'भुसुधारणा, 'स्वामितानिर्मूलन, मठदेवालयानुशासनादि, नानाविधपाशेभ्यः कथं वा आत्मामोचनीयः इति चिन्तासंभ्रमे नास्त्येवाद्य वेदविद्यायाः स्थितिगतिदशादिपरिशीलनाय अवसरः । इतश्च शास्त्रपण्डिताः 'वेदाभ्यासजडः', 'वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभ' इत्यादिभिरुपहासोक्तिभिः अवशिष्टानपि कतिपयवेदविदुषः उपहसन्ति। सामाजिकाश्च श्राद्धश्रावणी सत्यनारायणकथा-द्वित्रसंस्कारकरणाभिज्ञै

'याज्ञिक' इतिनामधारिभिः श्रोत्रियापदेशैरेव सर्वनिर्वाहे संहिताद्यध्यायिनां दशग्रन्थिपाण्डित्यस्य का वा आवश्यकता इति शंकाशंकूनुट्टंक्य वैदिकभविष्यं गाढान्धकारभीकरं निदर्शयन्ति।

एवं प्रजानां राजसंस्थानां पीठाधिपतीनां अन्येषां केषामपि सहाय प्रोत्साहनाद्यभावे कोवा किमर्थं वा वेदाध्ययनाय प्रवर्तेत। अद्यैव बहुष्वेव पुरग्रामेषु विवाहोपनयनादिमंत्रज्ञाः पुरोधसो अनेकशो दुर्मिला एव भवन्ति। इयमेव परिस्थितिः पुरस्तादपि एवमेव प्रवर्तेत तदा अचिरादेव 'वेदाध्यायी सर इव मरौ' इति वेंकटाध्वरेः वचनं यथार्थीभवेदेव। न चिरायैव ध्वनिमुद्रिकायंत्रद्वारा विवाहादिसमाकलनप्रसंगः परापतेत्। समूलमेव समुच्छिद्येत परम्पराप्राप्तवेदवर्णोच्चारणपद्धतिः। ऐरोप्यदेशीयवेदविद्वद्वर्गवत् अर्थज्ञानेपि पठनपाठनादिविषये वेदमूकता एव प्राप्येत भारतीयपण्डितैरपि।

वेदमूला एव भारतीया संस्कृतिः, वेदानुसारिण एव अस्माकं आचार-विचार-व्यवहाराः, वेदानुप्राणित एव वेदप्रणिहित एव च नो धर्मः, वेदानुगृहीतान्येव अस्माकं शास्त्राणि, वेदार्थनिर्णयार्थ एव नो वेदान्तः। तस्मिंश्च सर्वाधारे विश्वमूले वेद एव अन्तर्हिते अन्तरिते वा 'छिन्ने मूले कुत्र शाखाप्ररोह' इति वत् सर्वमपि आचार-विचार-धर्म विद्यादिकं स्वयमेव विलुप्येत। भारतीयानां सनातन ज्ञान विज्ञान वैशिष्ट्यं विनश्येदेव

हा वेदमातः! कीदृशीयं ते कष्टा दशा। किं नास्ति कोऽपि महात्मा य एनां मीनविग्रह इव दीनवत्सलो भगवान् समुपस्थितसंकटात् परित्राता? चार्वाक–सांख्यादीनां आघातात् त्वां पुरा भगवान् वेदव्यासः कपिलश्च अक्षतं ररक्ष। बौद्धानां भीकरात्याचारविदीर्णां त्वां भुवमवतीर्णः बुध इव मेधावी कुमारिलभट्टः जुगोप। यवनानां आक्रमणावसरेऽपि म्लायमानां तां श्रुतिमातरं विद्यारण्यः अर्थालंकारैः परिष्कृत्य राजसिंहासने पूजयामास। पुनरन्यथाव्याख्यानदूषितामेतां सर्वज्ञचूडामणयः पूर्णप्रमतयः मन्त्रालयगुरुसार्वभौमाः भूतराजाश्च उद्दध-

तस्याः यथार्थ सौंदर्यं परममुख्यवृत्तिं च संप्रकाश्य वेदपुनःप्रतिष्ठापन-महाकार्यं सम्यगकार्षुः ।

परमद्य हा हन्त न कोऽपि तादृशः वेदोद्धरणकर्मालंकर्मीणः कर्मंन्दी राजेन्दुर्वा वीक्षाविषयतामुपैति । का गतिः को वेदानुद्धरिष्यति? इति चिन्ताचक्रमारुह्य दुरन्तदुःखावर्तभ्रमिभ्राम्यमाणेष्वेव वेदाभिमानिषु भारतीयेषु भगवान् आनन्दतीर्थभक्तिप्रसन्नः उडुपि श्रीकृष्णः भक्त-वाच्छल्येन भारतीयानुजिघृक्षया च स्वाराधकान् श्री श्रीमदधमारुमठाधीश श्रीमद् विबुधेशतीर्थ स्वामिपादान् वेदोद्धाराय प्रेरयत् । यदा चेते वयसा तरुणाः मनसा सुकुमाराः तपसा वृद्धाः ज्ञानेन प्रबुद्धाः श्रीश्रीमद् विबुधेश-तीर्थश्रीस्वामिपादाः स्वपर्यायिप्रारम्भे यदा पूजार्थं भगवन्तमुपासदन् तदा तेनैव प्रेरिताः वेदोद्धारार्थं कटिमाबबन्धुः । 'मम पर्याये श्रीकृष्णस्य मुख्य-पूजा नाम वेदपाठप्रवचनप्रवर्तनमेव । न्यूनातिन्यूनं शतसंख्याका अपि वा संहितापाठपटीयांसः वेदविद्वांसः मम पर्यायक्रमादुत्तिष्ठन्तु । तदर्थं अस्मन्मठस्य कियत्यपि वा हानिः कियदपि वा ऋणं भवतु नाम। मम सर्वस्वहोमं कृत्वापि रक्षणीयो वेदः शिक्षणीयाः छात्राः । तद्धि तपः तद्धि तपः तदेवेश्वरपूजनम् " इति संकल्पं प्रतिज्ञां च विधाय पर्याय पीठमध्यारुहन् ।

एतेषां अस्य भारतोद्धरणार्थं प्रवृत्तस्य संकल्पस्य पश्चात् श्रीमदा-चार्याणां श्रीकृष्णस्य च शुभाशीर्वादहस्त अस्त्येवेति सामान्यजनता दृष्ट्या अशक्यप्रायोऽपि तेषां मनोरथः अद्य फलेग्रहिः संजायते। अद्य पुण्यधाम्नि उडुपीक्षेत्रे तेषां सत्यसंकल्प-कर्तृत्वशक्ति-दातृत्वमहिमा-प्रभावात् शताधिका एव छात्राः वेदपारायणपटीयांसः महीयांसः परिदृ-श्यन्ते । इतर राजमहाराजैः शताधिकवर्षविधौ अपि अशक्यं वेदोद्धरणं वेदप्रसाररूपं च पुण्यकर्म पञ्चषवर्षविधौ एव साधितवन्तः पुण्यात्मानः श्री श्रीमदधमारुमठाधीशस्वामिपादाः न केवलम् अभिनन्दनीयाः किन्तु सर्वात्मना सर्वैरपि साष्टांगम् अभिवन्दनीया एव इत्यत्र न मात्र-पि संशीतिः ।



(शेषं चरमपुटे)

# स्कन्दस्वामी

" वल्लभीविनिवास्येतां ऋगर्थागमसंहृतिम्
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृतिम् " ।।

इत्यनेन अदसीयेन ऋग्वेदचतुर्थाष्टकभाष्यस्य अन्तिमपद्येन अयं स्कन्दस्वामी वल्लभीदेशनिवासी, अस्य पिता च भर्तृध्रुवनामाऽऽसीदिति ज्ञायते । अद्ययावद् वेविद्यमानेषु वेदभाषाकर्तृषु स्कन्दस्वामी एव पुरातनः प्रथमश्चेति वक्तुं शक्यते । तदनन्तरकालीनाः सायणमाधवप्रभृतयः सर्वेऽपि वेदव्याख्यातारः आद्यभाष्यकारस्य श्री स्कन्दस्वामिनः मतं शुभनाम च स्वस्वग्रन्थेषु सादरमुल्लिखन्ति । तद्भाष्यवचनानि च तत्र-तत्र सगौरवभरमवतारयन्ति उदाहरन्ति स्वस्वमतोपोद्बलकतया समुद्धरन्ति च ।

अनेन च स्कन्देन किं समग्रस्यैव ऋग्वेदस्य भाष्यं लिखितं अथवा कतिपयाष्टकानामेव वा इत्येतत्तु न सम्यग् ज्ञायते । अद्य उपलभ्यमानहस्तप्रतिषु संपूर्णप्रथमाष्टकस्य द्वितीय-तृतीय-चतुर्थ-पञ्चमाष्टकानां कतिपयभागानां च लिखितं भाष्यं उपलभ्यते । इदं भाष्यं त्रावणकोर (तिरुवनन्तपूरं) पट्टणे मुद्रितम् ।

वेदानां यज्ञयागादिषु समुपयोग एव प्रधानप्रयोजनम् । यज्ञार्था एव वेदा इति अस्य मतम् । अयं प्रतिसूक्तस्यापि प्रारम्भे तत्सूक्तस्य ऋषिदेवतादिबोधकं कमपि श्लोकं निर्माय विलिखति । वेदार्थपरिज्ञानाय ऋषिदेवतादि ज्ञानमात्रेणैव अलं । छन्दोज्ञानं तु अनावश्यकमेव इति अयं अभिप्रैति । अत एव अयं स्वभाष्यप्रारम्भश्लोकेषु तत्तत्सूक्तदेवताऋष्यादिकं निर्दिशन् छन्दस्तु न क्वापि निर्दिशति । तथा स्वयं कण्ठरवेणैव " न छन्दः, अनुपयुज्यमान वचनत्वात् " इति छन्दसः सर्वथा वेदार्थज्ञानानुपयुक्तत्वं स्पष्टमेव प्रतिपादयति ।

स्वग्रन्थे चायं श्रीयास्कस्य निघण्टुनिरुक्त बृहद्देवतादिकान् प्रमाण-ग्रन्थानुदाहरति । तत्र तत्र च अनेन भूयः समुपयुज्यमानैः 'स्मरन्ति, स्मरणं, स्मृतिः, केचिद् इत्यादिपदैः तत्पूर्वमपि बहव एव वेदभाष्यकारा आसन्निति प्रतीयते । परमद्यतनसंशोधकैः तत्पूर्वकाले यास्कमेकम् अपहाय इतरभाष्यकृतां नामापि न श्रूयते ।

ऋक्संहितायाः चतुर्थाष्टकस्य ७-३५-५ मन्त्रस्य 'विष्ठितं जगदिति' पदं विवृण्वानस्य स्कन्दस्वामिनः "केचित्तु विष्ठितशब्दः स्थावर-वचनः जगदित्येतत्तु समुच्चीयते । स्थावरं जंगमं च बुध्द्यतामिति एवं व्याचक्षते" ।

इत्यादिभिर्नैकैः अन्यैश्च वचनजातैः स्कन्दस्वामिसमये अनेकेषामेव वेदव्याख्यातॄणां मतानि प्रचलितानि आसन् । स्कन्दस्वामिना च भूयांस एव तादृशाः वैदिकग्रन्था अधीताः स्वग्रन्थलेखनाय उपयोजिताश्चेति अवसीयते ।

अयं स्कन्दस्वामी न केवलं स्वयंपण्डितः परं कुलपतिपदमप्यधिष्ठाय नैकानेव वैदिकपण्डितान् वेदभाष्यकारांश्च स्वशिष्यान् जगति प्रथयामास । वेदार्थप्रकाशिका वेदरहस्यार्थप्रसारिका च काचन प्रबुद्ध-शिष्यपरम्परैव अनेन निर्मितेति चरित्रग्रन्थैः ज्ञायते । बहव एव हि उत्तरकालीना वेदभाष्यकाराः स्कन्दस्वामिशिष्यत्वं नाम एकं स्वसौभाग्यमेवेति धिया सादरं स्वग्रन्थेषु निर्दिशन्ति

शतपथब्राह्मणस्य भाष्यकारः त्रयीव्याख्यानधौरेयः प्रस्फुरद्वेदवेदिमान् हरिस्वामि नामा वेदविद्वान् अमुं स्कन्दस्वामिनं स्वगुरुत्वेन साभिमानं निर्दिशति । पठ्यन्ताम् अस्य हरिस्वामिनः शतपथब्राह्मण भाष्यगताः एते श्लोकाः

"नागस्वामी तत्रा.....श्रीगुरु स्वामिनन्दनः । तत्र याजी प्रमाणज्ञ आढ्यो लक्ष्म्या समेधितः ॥ तन्नन्दनो हरिस्वामी प्रस्फुरद्वेदवेदिमान् त्रयीव्याख्यानधौरेयोऽधीततन्त्रो गुरोर्मुखात् । यः सम्राट्कृतवान् सप्त-

सोमसंस्थास्तथर्कश्रुति । व्याख्यां कृत्वाध्यापयन्मां श्रीस्कन्दस्वाम्यस्ति मे गुरुः"

अयं गुहस्वामिपौत्रः नागस्वामिपुत्रः हरिस्वामी स्वयं पण्डित प्रकाण्डोऽपि वेदव्याख्यानविख्यातोऽपि 'श्रीस्कन्दस्वाम्यस्ति मे गुरुः' इति गौरवपुरस्सरम् उल्लिखति । एतेन तत्कालीनेषु वेदविद्वत्सु स्कन्दस्वामिशिष्यत्वं गौरवावहं महत्वद्योतकं अभिमानास्पदं चेति पर्यगण्यतेति तर्कितुमप्यस्ति सदवकाशः ।

स्कन्दस्वामिनः शिष्योत्तमः हरिस्वामी –

"यदाब्दानां कलेर्जग्मुः सप्तत्रिशंच्छतानि वै । चत्वारिंशत्समाश्चान्यास्तदा भाष्यमिदं कृतम्" इति स्वकृत शथपथब्राह्मणभाष्यस्य निर्माणसमयं निर्दिशति । कलियुगस्य ३७४० वर्षानन्तरकाले शथपथभाष्यं रचितम् । क्रिस्त पूर्वं ३१०२ तमे वर्षे कलियुगप्रारम्भः इति मतं प्रामाणिकमिति यदि गृह्येत तदा ईसवीय ६३८ तमो वत्सरः शतपथभाष्यस्य समय इति सिध्यति । स्कन्दस्वामिभाष्यं च ततः दशपंचदशवर्षेभ्यः पूर्वमेव विरचितं स्यात् । एवं च अयं विख्यातवेदव्याख्याता स्कन्दस्वामी क्रिस्तशकस्य सप्तमशतकस्य पूर्वार्धे विशेषतः ख्यातिं कीर्तिं जगाम नैकानेव च वैदिकग्रन्थान् जग्रन्थ, भूयस एव च वेदभाष्यकृतः वेदविदुषश्च निर्मापयामास । अस्य ग्रन्थ चरित्रादि विषयेषु अधिकाधिकं संशोधनमावश्यकं वर्तते ।

---

## कन्नडभाषामय परिमळपत्रिकायाः

# ❀ चन्द्रिकांकः ❀

को नाम न जानाति श्रीश्रीमतां चन्द्रिकाकृद् इति सुप्रसिद्धिभाजां श्री व्यासराजयोगिवर्याणाँ शुभतमं नामधेयं । श्री विद्यारण्यमुनिभिः संस्थापितस्य विजयनगर साम्राज्यस्य श्रीकृष्णदेवराजसमये संप्राप्तां महाविपत्तिं स्वतपोमहिम्ना परिहृत्य कर्नाटकसिंहासनस्य पुनःप्रतिष्ठापन श्रेयः समासेदुषां श्रीव्यासयोगिनाँ महिमापारम्यं अगम्यं रसिकरम्यं च वरीवर्ति । अत एव विमतीयोऽपि कविप्रवरः सोमनाथसूरिः तेषां यतीश्वराणां तपसा महसा पाण्डित्येन राजकारणपटुत्वेन असाधारणगुरुत्वेन च आकर्षितो भूत्वा "व्यासयोगिचरितम्" नाम रसबन्धुरं अतिसुन्दरं च चम्पूप्रबन्धमेकं निर्माय स्ववाण्यास्सार्थक्यं समपीपदत् । एतेषां च स्वोत्तुंगप्रज्ञापहसितांगिरसां यतिपुङ्गवानां ग्रन्थरत्नेषु 'तात्पर्यचन्द्रिका' कौस्तुभमणीयति स्वप्रभया प्रभावेन च । अस्याश्च यतिततिपतेः कलशकृतेः महत्वज्ञापनाय वैशिष्ट्योद्बोधनाय च परिमळसंपादकैः समयोचितकार्यकरणदक्षैः श्रीगुरुराजाचार्यैः 'चन्द्रिकांकः' अयमाविष्कृतः।

अत्र हि विशिष्टांके व्यासतीर्थस्वामिनाँ चन्द्रिका न्यायामृत तर्कताण्डवादि नैकग्रन्थपरिचायकाः सहृदयहृदयसमुल्लेखा अनेक एव लेखा द्वैतवेदान्तपरिचिचीषूणां तत्वबुभुत्सूनां जिज्ञासुवृत्तीनां जनानां नितान्तमुपकुर्वन्ति । एतद्विशिष्टाङ्कस्य प्रायःसर्वेऽपि लेखकाः तत्तच्छास्त्रेषु समासादितोद्दण्डपाण्डितीमण्डिताः प्राज्ञप्रकाण्डा एवेति तल्लिखितलेखा अपि मार्तण्डमयूखा इव पण्डितपरिषत्पुण्डरीकवनानि सुखं विकासयेयुरेवेत्यत्र नास्ति नस्तोकोऽपि सन्देहः

विचारप्रचोदका लेखाः, आकर्षक आकारः, मसृणतमानि पयःफेनपरिपाण्डुराणि च कर्गदपत्राणि, चारुतातिशयं पुष्णन्ति चित्राणि

शताधिका पत्रसंख्या, व्यासयोगिनां च सम्राट्कृष्णदेवबराजकृत रत्नाभिषेक*दृश्यनिदर्शकं अतिमात्रमनोरमं मुखचित्रं, अन्ये च ते ते विविधा विषयविशेषा अशेषाणामपि शेमुषीजुषां विशेषादरभाजनंता वितन्वन्ति।

ईदृशापूर्वमौलिकग्रन्थायमानमेकं बृहदाकारं विशिष्टाङ्कमाविष्कुर्वत: साहसैकरसान् श्री राजा एस्. गुरुराजाचार्यमहोदयान् सानन्दमभिनन्दाम: । अयं च अत्युपयुक्त: चन्द्रिकांक: कन्नडभाषाविद्भि: सर्वैरपि सुधीभि: सकृदवलोकनीय: इति संसूच्य विरमाम:

(अङ्क प्राप्तिस्थानं)

संपादक परिमळ

शाखाकार्यालय: मंत्रालयम्

तालूक– आदवानी. ( आन्ध्रप्रदेश ) जिल्हा– कर्नूल.

मूल्यम् १–८–०

---

*एतच्चन्द्रिकाङ्कस्य मुखपत्रे चारुचित्रचित्रितं रत्नाभिषेकप्रसङ्गमेवमुपवर्णयति सोमनाथ कवि; स्व व्यासयोगिचरिते–

"तदनु सकलदिङ्मुखमुखरीकरणनिपुणताधुर्येषु मंगलतूर्येषु, समापित सकळसंविधानसंपाद्यकृत्येषु अमात्यभृत्येषु, निरन्तरोद्घुष्य स्वस्त्ययनसूक्तपदवीसमापितेषु पुरोहितेषु, निरवद्यविद्यावैभवश्लाघाकम्पमानशिरस्सु सुमनस्सु, परिसरपापठ्यमाननानावादविजयबिरुदावलीपक्ष्मलितचाटुप्रपञ्चेषु कविसंचयेषु आकौमारचरितारम्भगम्भीरयशस्तुतिकृतकेलीकेषु विस्मयस्मितपक्ष्मपुटलोचनेषु पौरजानपदेषु स किल कृष्णमहीपाल: स्वयमेव करकमलेन आदाय कनककुम्भं भगवन्तं व्यासतापसं आदरान्मणिभिरभिषेक्तुं आरभत"।

# संस्कृतभाषा न मृता

ले. श्रीपाद दामोदर सातवळेकर स्वाध्यायमंडल पारडी.

केचन वदन्ति "संस्कृतभाषा मृतेति । मृताया अस्या भाषायाः प्रचारार्थं एवंविधानां सम्मेलनानां उद्यमः किमर्थं कार्यं" इति तेषां मतम् । असमञ्जसमेतत् कथनम् । संस्कृत-भाषायां साप्ताहिकानि, पाक्षिकानि, मासिकानि च पत्राणि इदानीं भारते देशे प्रकाश्यन्ते । तानि च ग्राहकैः पठ्यन्ते । किमेतत् अस्याः संस्कृतभाषाया जीवनस्य चिह्नं नास्ति ? कस्यां मृतायां भाषायां एवंविधानि पत्राणि प्रकाश्यन्ते ?

इदानीं प्रान्तीया भाषा अनेका भारतस्य प्रान्तेषु प्रचलिताः सन्ति। ताभिरेव प्रान्तीयव्यवहारो भवति तत्रत्यानां सर्वेषां प्रान्तीय-जनानाम्। प्रान्तान्तरीय-व्यवहारार्थं आंग्लराज्येन आंग्लभाषा प्रचारिता । सा आंग्लभाषा सार्धशतवर्षपर्यन्तं अत्रत्ये राष्ट्रिये व्यवहारे संप्रयुक्तापि प्रतिशतकं पञ्चभिर्भारतीयैः न ज्ञायते । अतः सा राष्ट्रभाषास्थानं प्राप्तुं असमर्था इति सिद्धमेव । आंग्लभाषाया आगमनात्पूर्वं संस्कृतभाषैव भारतराष्ट्रस्य राष्ट्रभाषा आसीदिति सिद्धं, भवति ताम्रपट्टेषु प्रयुज्यमानां तां संस्कृतभाषां दृष्ट्वा । आंग्लागमनात्पूर्वं अखिलस्य भारतस्य भाषा संस्कृतैवासीत् । आंग्लभाषायाः प्रवेशो भारते नाभविष्यत् तर्हि संस्कृतैव राष्ट्रभाषाऽभविष्यत् भारतस्य, सैव इदानींपर्यन्तं राष्ट्रभाषारूपेण समचलिष्यत् सर्वस्मिन् भारते देशे ।

### संस्कृतभाषायां संस्काराः

सर्वेषां भारतीयानां हिन्दूनां विवाहादिसंस्काराः संस्कृतभाषायामेव भवन्ति । सर्वे पूजाविधयः सर्वे उपासनाप्रकाराश्च संस्कृतभाषयैव क्रियन्ते । सर्वं आध्यात्मिकं धार्मिकं च कर्म हिन्दूनां गृहेषु संस्कृतभाषयैव भवति । अतः धार्मिकानुष्ठानेषु हिन्दूनां गृहे गृहे संस्कृतभाषैव प्रचलितास्तीति न कोऽपि तां प्रतिषेद्धुं समर्थः ।

इदानीं संस्कृतभाषैव बोधभाषा अस्ति इत्यस्मिन् विषयं केऽपि संदेहं न करिष्यन्ति । अतस्तेषां संज्ञानाय किमप्यत्र मया अवश्यं कथनीयम् :

यास्तु प्रान्तीया भाषाः सन्ति, तासु सर्वासु भाषासु प्रतिशतकं ६० वा ७० वा संस्कृतभाषायाः शब्दाः प्रयुज्यमाना दृश्यन्ते । वङ्ग-भाषायां तु इतोऽप्यधिकाः संस्कृतभाषायाः शब्दाः प्रयुज्यन्ते । मोहमदीया वङ्गीया अपि संस्कृतान् शब्दान् प्रयुञ्जन्ति । एवं सर्वासु प्रान्तीय-भाषासु प्रतिशतकं षष्ठिपर्यंतं संस्कृतपदानां उपयोगो भवति । द्राविड-भाषासु अपि बहवः संस्कृतशब्दाः प्रयुज्यमाना दृश्यंते । अतः एवं वक्तुं शक्यते यत् प्रान्तभाषाः प्रायः संस्कृतमयाः सन्ति । संस्कृताः संस्कृतोद्भवाः वा शब्दाः तासु प्रतिशतकं सप्ततिपर्यन्तं प्रयुज्यमाना दृश्यन्ते । दृष्ट्वा एतत्सर्वं को नाम ब्रवीतुं शक्नोति यद् भारते संस्कृता भाषा मृतेति ?

संस्कृत भाषा सर्वासां प्रान्तीयभाषाणां जननी भवतु, ज्येष्ठा भगिनी भवतु, पोषयित्री वा तासां सर्वासां भाषाणां भवतु, अथवा जीवयित्री संजीवयित्री वा भवतु । सर्वासां प्रान्तभाषाणां परिपोषणं कर्तुं समर्था एषा संस्कृता भाषा वर्तते—इत्यत्र न कोऽपि संदेहः ।

यदि कस्यामेव प्रान्तभाषायां नवीनानि संज्ञापदानि निर्मातव्यानि भवेयुः तर्हि तानि संस्कृतपदान्येव निर्माय तत्र प्रयोक्तव्यानि । न अन्य मार्गेण नवीनानां संज्ञानां प्रवेशः कास्वपि प्रान्तीयभाषासु भवितुं शक्यः ।

द्रविडभाषाणां आर्यभाषाभिः सह सङ्घर्षो भवतीति कैश्चिदुच्यते । यदि सङ्घर्ष एषः सुदूरीकर्तव्यः, तर्हि तद्दूरीकरणं संस्कृतभाषाप्रचारे-णैव भवितुं शक्यम् । द्रविडेषु प्रान्तेष्वपि संस्कृतभाषायाः सम्मानो वर्तते। नहि नहि, इदानीं द्रविडेष्वेव प्रान्तेषु संस्कृतभाषायाः प्रचारः सुमहान् वर्तते । उत्तरीयेषु तथा न दृश्यते यथा दक्षिणात्येषु प्रान्तेषु संस्कृत-भाषाप्रचारो दृश्यते । अतः सिध्यति यत् प्रान्तीयसंघर्षस्य अपनयनं यदि केन भवितुं शक्यं तर्हि तत्संस्कृतभाषायाः प्रचारेणैव भवितुं शक्यं नान्यथेति ज्ञातव्यम् ।

## आंग्लभाषाया प्रचारः

सार्धशतवर्षपर्यन्तं आंग्लभाषा भारते राजभाषारूपेण व्यवस्थिता आसीत्, परंतु प्रतिशतकं पञ्चजनैरपि सा ज्ञातुं न शक्यते । संस्कृत-भाषायाः पदानि तु सर्वे भारतीया जना जानन्त्येव । यत् राजभाषारूपयापि आंग्लभाषया न कृतं, तत् संस्कृतभाषाया भारते कृतमिति सुस्पष्टमनुभूयते । अत एव सर्वैः वक्तुं शक्यते यत् संस्कृतभाषायाः प्रचारः भारते कर्तुं सुकरोऽस्ति । यतः प्रत्येकस्यां प्रान्तभाषायां प्रति-शतकं षष्ठिपर्यन्तं संस्कृतशब्दानां उपयोगः प्रान्तीयैर्जनैः क्रियत एव । अतः संस्कृतभाषायाः प्रचारोऽस्मिन् भारतदेशे सुखसाध्यो वर्तते इति स्पष्टं भवति ।

## संस्कृतभाषा न कठिना

संस्कृतभाषा कठिनास्तीति असत्यः प्रवादो वर्तते अस्मिन् समये । प्रत्यक्षया रीत्या विचारे कृते संस्कृतभाषा सुबोधतरा वर्तते । संस्कृत-भाषापेक्षया सर्वाः प्रान्तीया भाषा कठिनतराः सन्ति । पश्यतां हिन्दी-संस्कृतयोः तुलनां, या इदानीं अत्रास्माभिः क्रियते—

तस्य पुत्रः याति = उसका पुत्र जाता है ।
तस्य स्त्री याति = उसकी स्त्री जाती है ।
तस्य मित्रं याति = उसका मित्र जाता है ।

अत्र संस्कृत-भाषायां पुंल्लिग-स्त्रीलिंग-नपुंसकलिंगेषु 'तस्य' तथा 'याति' इतिरूपेषु लिंगभेदेन रूपभेदो न जातः परंतु हिन्दी-भाषायां 'उसका, उसकी' तथा 'जाता, जाती' इति रूपभेदो जायते । मराठी भाषायां तु नपुंसकलिंगेऽपि रूपान्तरं अन्यदेव भवति । लिंगभेदे सत्यपि क्रियारूपभेदो संस्कृते न भवति । प्रान्तीयभाषासु लिंग-भेदे सति सर्वनामरूपेषु च क्रियापादरूपेण च रूपभेदो भवति—इत्यनेन संस्कृतभाषायाः सुबोधत्वं, प्रान्तभाषाणां कठिनतरत्वं च स्पष्टं भवति ।

एवं सरलतराऽपि संस्कृतभाषा कठिनतरा अस्तीति अनुभूय इदानीन्तनैर्जनैरित्यपि सत्यमेव वर्तते अत्र कारणं महापण्डिताना

पाण्डित्यं वर्तते । ये पण्डिता मध्यकाले अस्मिन् देशे जाताः, तैः संस्कृत-भाषायां कठिनतमाः रचनाः कृताः । सा तेषां भाषा जनभाषा नासीत्, परं सा आसीत् साहित्यिकी पण्डितभाषा ।

अस्माभिः या संस्कृतभाषा प्रचारयितव्या सा, संस्कृत-साहित्य भाषा (पण्डितानां भाषा) न भवितुं शक्या, सा तु जनभाषा एव भवितुं शक्या—इति सर्वैः अत्र संमिलितैः विद्वद्भिः ज्ञातव्यम् । तथा सर्वैः भवद्भिः एतदर्थमेव यावान् प्रयत्नः कर्तुं शक्यः तावान् प्रयत्नः कर्तव्यः । जनभाषारूपिणी या संस्कृतभाषा सा एव प्रान्तीयभाषाणां साहाय्य-कारिणी पोषयित्री च भाषा भवितुमर्हति । या महापण्डितानां साहित्य-भाषा पण्डितभाषा अस्ति, सा तु अल्पैः एव पण्डितैर्ज्ञातुं शक्या । अतः सा कदाचिदपि जनभाषापदवीं आरोढुं नैव योग्या भविष्यतीति सर्वैः मनसि अवधार्यम् । अनेनैव मार्गेण संस्कृतभाषायाः प्रचारः कर्तव्यः ।

भारतस्य बोधभाषा—

यदा संस्कृतभाषा जनभाषा भविष्यति तदैव सा भारतराष्ट्रस्य अखिलस्य बोधभाषापि भविष्यति इत्यत्र नास्ति संदेहः । यावत्काल-पर्यन्तं एषा भारतस्य बोधभाषा न संजाता, तावत्कालपर्यन्तं अस्माभिः संस्कृतभाषायाः प्रचारार्थं प्रयत्नो विधेयः ।

संस्कृतभाषायां सन्धिकरणं विविक्षां अपेक्षते

संस्कृतभाषायां सन्धयो भवन्ति । एवं संधयो जर्मनभाषायां रशि-यनभाषायामपि भवन्ति । परं संस्कृतभाषायां सन्धिकरणं वाक्ये वक्तु-रिच्छां अपेक्षते । सन्धिविषये एष सार्वत्रिको नियमो वर्तते—

संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे, वाक्ये तु सा विविक्षामपेक्षते ॥

वाक्ये सन्धिकरणं वक्तुरिच्छां अपेक्षते । वक्तुः यादृशी इच्छा भवति तादृशी संहिता वाक्ये भवति ।

अतएव संस्कृतभाषायां संधिभयं नास्ति । यत्र वक्तुः इच्छा भवेत् तत्र सन्धिः कर्तव्यः, वक्तुरिच्छा न भवेत् तत्र सन्धिः न कर्तव्यः । एवं अत्रापि संस्कृतभाषायाः सारल्यमेव वर्तते ।

एवं रीत्या विचारे कृते, स्पष्टमेतत् प्रतीयते, यत्संस्कृता भाषा नैव कठिना, नापि अध्येतुं अशक्या । आंग्लभाषायां प्रावीण्यं प्राप्तुं विंशतिवर्षाणां कालोऽपि न्यून एव भवति, परंतु संस्कृतभाषायां प्रावीण्यं त्रिष्वपि वर्षेषु प्राप्तुं शक्यम् । अत एव संस्कृतभाषायाः प्रचारोऽस्माभिः कार्यः ।

शब्दक्रमः

आंग्लभाषायां वाक्ये शब्दानां क्रमो निश्चितोऽस्ति । He eats mangos एवमेव आंग्लशब्दानां क्रमो वाक्ये भवितुं योग्यः । परं संस्कृतभाषायां वाक्ये एवं शब्दस्यानुक्रमो निश्चितो नास्ति । "**स आम्रं भक्षयति । भक्षयति स आम्रम् । आम्रं भक्षयति सः ।**"

इत्यादि प्रकारेण संस्कृतभाषायां वक्तुरिच्छानुसारेण वाक्ये शब्दानां क्रमो भवितुं शक्यः । एषापि सरलता एव संस्कृतभाषायां वर्तते ।



# श्रीमती विद्यासुन्दरी देवी

बहवः किलेदानीं पाश्चात्यविद्यया सुसंस्कृतमानसा ये सर्वेषामेव प्राचीनशास्त्रीयप्रबन्धानां कथानां वाऽश्रद्धेयतां भणन्ति। भवतु वाऽऽम्नायो वर्ततां वा स्मृतिरस्तु वा योगो विद्यतां वा सुकृतमात्रसुदर्शः श्रद्धेयतमो वृत्तान्तः। स एषां नव्यविलक्षणविदुषां नयनसरणिमुपागत एवाश्रद्धेयतमतामसंभवद्दोषग्रस्ततामतिशयोक्तिबाहुल्यमुद्भ्रान्तोन्मत्तादिमात्रप्रलापसादृश्यं वा प्राप्नोतीत्यहो प्रभावः पाण्डित्यस्य।

यदीदानीं कश्चित्प्रामाणिकोऽपि पुरावृत्तज्ञो नव्यप्राज्ञानां पुरतो ब्रूयात्।– आसीत्पूर्वं नृपालो भर्तृहरिर्नाम। स कदाचिद्भार्यया मूर्तयेव पातिव्रत्या भानुमत्या सह क्रीडागारं गतः करालकालकवलीकृतमात्मनो भर्तारमनुगत्य शोकानलं निर्वापयितुकामां कामपि ब्राह्मणीमद्राक्षीत्। अथाकर्ण्य तां सत्कुर्वतां पौराणां कलकलं सकौतुका भानुमती राजानमपृच्छत् आर्यपुत्र किमेतदिति। राजा प्राह स्म "प्रेयसि! पतिव्रतानां धर्मं परिपालयन्त्यसौ ब्राह्मणी पत्युरनुगमनेनात्मानं कृतार्थीकृत्य सुदुःसहं चिरवियोगानलं निर्वापयितुमिच्छतीति"। भानुमत्युवाच। "आर्य मूढतमा खल्वियं ब्राह्मणवधूर्याऽत्यासन्नं प्रियवियोगानलं परित्यज्य चितानलेनात्मानं दग्धुमिच्छति। यासां हि दयितमात्रावलम्बिजीवितानां साध्वीनां भर्तृस्नेहमृदुलानि चेतांसि किमिव चिताऽग्निना प्रयोजनं तासाम्। वार्तामात्रेणाप्युपनतः प्रियस्याप्रियवृत्तान्तपावकः क्षणादेवैता भस्मसात्कुर्यात्। तदेव ह्यनुगमनं पारमार्थिकमुच्यते यदाकर्ण्य पत्युरमङ्गलवृत्तान्तं स्वयमेव प्रयान्ति प्राणाः। न च ते वह्निमपेक्षन्ते। राजा तु तदाकर्ण्य तस्या वचनं मृषैवेदमशेषमिति मन्यमानः परीक्षितुकामश्च भानुमत्याः पातिव्रत्यं कथंचिदपि तां निशामत्यवाहयत्।

अथापरस्मिन्नहनि समुदिते भगवति पूर्वपर्वतमण्डनायमाने भास्करेऽनतिबहलपरिजनोऽसंभावयन्भाविनं महनर्थं भर्तृहरिर्मृगयामिषेण नगराद्बहिरगच्छत्। ततश्चाहूय दुराख्यायिनं नामात्मनो वचनकरमाज्ञापयामास।

"चेट द्रुततरं गत्वा निवेद्यतां देवी। "अरण्येऽत्र कमपि भयानकं केसरिण-मनुधावन्महाराजस्तेन हिंस्रेण व्यापादित इति"। अस्ति किमपि प्रयोजन-मेतेनास्माकं तदेतदवश्यमनुष्ठीयतामिति" । सोऽपि यदाज्ञापयति देव इत्यभिधाय ततो निर्गतो भानुमत्याः समीपं प्रययौ । निर्विशङ्कश्च वसन्तागमोन्मुखीमिव मालतीमकाण्डदावानलेन समयोजयद्भर्तुरासन्नमार्गे सोत्कण्ठप्रदत्तेक्षणामेतां भर्तृहरिनिधनवृत्तान्तेन । तस्याश्च तत्पविपात-निष्ठुरं वचनमाकर्णयन्त्याः सपदि धरातले पपात निःसंज्ञो देहः। तद्वचनश्रवणभीतेव चाह्रीयत कान्तिः, स्वर्गमार्गकृतप्रयाणमपि प्रणयिनं प्रत्यावर्तयितुमिव निर्जग्मुः प्राणाः । तद्विलोकमानश्च दुराख्यायी भीत-भीतो 'देवि समाश्वसिहि समाश्वसिहि मृषा किल प्रोक्तमिदं मया दुरात्म-नेति' सहस्रशश्चुक्रोश ।प्रायतत चैतां संज्ञापयितुम् । कृत्वाऽपि प्रयत्नसहस्रं विफलीभूतमनोरथ आत्मानं निनिन्द । हन्त पातिव्रत्यम् ।—इति । तदाऽत्र किं वा प्रतिपद्येतार्वाचीनः सुशिक्षित इति तर्कयेयुरेव सुधियः । उद्भवन्ति हि तेषां वदनकुहरादेवंविधकथाऽकर्णनोत्तरं 'प्रतारणेयं भाविकानां, प्रला-पोयमतिशयोक्तिरियमित्येव' प्रलापाः । किं तु भगवान्कालस्तदेषां दुश्चे-ष्टितमसहमान इव दुरितबहुलेऽपि कलौ क्वचिदेवंविधमपि वृत्तं घटयति। अत्रेदं निदर्शनम् ।

अस्ति वङ्गेषु डाकानगरान्तःपात्यबदुलपुराख्यो ग्रामः । तत्र च कायस्थश्चन्द्रदासो नाम प्रतिवसति । आसीच्च तस्य पतिव्रताशिरोमणिः कुलस्यासाधारणं भूषणं तनया विद्यासुन्दरी नाम। तां च विवाहार्हे वयसि चन्द्रदासः सकलगुणनिलयेन कलिकतानगरवासिना महाभागेन वृन्दाव-नरायेण पर्यणाययत् । अथ व्यतीते बहुतिथे काले विषमतया भवितव्य-ताया वृन्दावनरायो रुग्णः संवृत्तः । वर्तमानशकस्य चान्द्रचैत्रशुक्लप-ञ्चम्यां च स इमं दुरितबहुलं भूलोकं परिहाय देवलोकमात्रप्रणयी बभूव। अथ तत्पार्श्ववर्तिनी साध्वी विद्यासुन्दरी भर्तारमन्तरा शून्यं जगन्निष्प्रयो-जनं च जीवितमाकलयन्ती वाञ्छन्ती च चिराय तस्यैव सहवासं 'हा नाथ हा मदेकजीवित क्वासीति' विलपन्ती स्वस्य समीपवर्ति तद्भर्तृशरीरमा-त्मन पाणिभ्यां सुदृढं पर्यष्वजत । अवधार्य च भर्तुः परलोकप्रयाणं

स्वयमपि सपदि तमेव प्राणैरनुजगाम ।

बान्धवजनास्तु वृन्दावनरायस्य शवं निर्हर्तुमुपकरणानि संपा
सदनस्यान्तःप्रविष्टा विद्यासुन्दरीं भर्तारं गाढमालिङ्ग्य तत्सुखेने
निमीलितेक्षणां प्रत्यक्षीचक्रुः । अपेतेष्वपि तस्याः साध्व्याः प्राणेषु तथावि
शरीरं दुर्लभतममिवाकलयन्ती सपदि नापससार शरीरात्कान्तिः । अ
एव सचेतनामेव तां मन्वाना वृद्धा बहुविधं वैराग्यमुपादिशन् । तथा
वृन्दावनरायमपरित्यजन्तीं प्रत्युत्तरमप्रददानां च तां "साध्वि! परित्य
भर्तारं, नायमुचित इदानीं परलोकगमनान्तरायो निर्हरणप्रतिवन्ध" इ
वदन्तः करे गृहीत्वा दूरे कर्तुमारेभिरे । किं तु न शेकुस्तस्यास्तं भुजलत
बन्धं विश्लेषयितुम् । अथ त एनां संतप्तेन संदंशकेनादहन् । सचेतने
ष्वेव फलन्तस्ते तूद्यमास्तस्यां निष्फलत्वं प्रापुः । अथ तेष्वेके महाप्राज्ञ
'शोकातिशयेन शरीरवर्तिन उष्मणः शिरसि प्रवेशादेव मूर्च्छितेयमिति
भाषमाणास्तस्याः शरीरे प्रभूतानि हिमखण्डानि न्यधुस्तथापि यदा स
चेतनां न प्रतिपेदे तदा यूरोपीयवैद्यैस्तां संज्ञापयितुं प्रायतन्त । यदा
तेऽपि भूनासत्याः ( ! ) नूनं निश्चेतनेयं निष्फलोऽस्यामौषधाद्युपचार इ
बभाषिरे तदाऽवसितेतिकर्तव्याः सर्वेऽपि तत्रत्याः प्रशशंसुः साध्वीत
तस्याः । निर्हृत्य च सहैव भर्त्रा तां ससाधुवादमेकस्यामेव चितायामारो
पयामासुः । भगवान्हुताशनोऽपि तथाविधायाः साध्व्याः क्षणमपि दुरि
मयस्य भूलोकस्य संपर्कमसहमानः पश्यत्स्वेव बान्धवेषु तां भस्मावशेषत
निनायेत्यहो पातिव्रत्यम् । ( रा० स० अ० )

साधु विद्यासुन्दरि! साधु समुद्भासितं किल कलावपीदं भारतव
पुण्यचरितया भवत्या ।

सहृदयवाचकाः! बहुषु खलु संवादपत्रिकासु वृत्तमिदमतिविस्पष्टी
कृतं तत्तत्पत्रिकासंपादकैरिति नव्या अपि नात्र विप्रतिपद्येरन् । प्राचीनास्
बह्व्यः साध्व्य एवंविधा आसन्याः परलोकं गते भर्तर्यात्मनः क्षणम
भूतलनिवासं न सेहिर इति किंस्वित्प्राचीनकथास्वश्रद्धेयमिति कृ
पल्लवितेन ।

---

# श्री रघुनाथशिरोमणिः

वङ्गे नवद्वीपः पण्डितभूमिस्तत्रापि प्रथमः प्रधानश्च रघुनाथशिरोमणिरिति पूर्वभारतीयैः पण्डितैर्विदितम् । यस्य हि ग्रन्थनिचयमधीयानास्तार्किकेतिसंज्ञां प्रपद्यन्ते । तस्य किल विचित्रं जीवनचरित्रं सर्वैरेव श्रोतुमनुमोदितव्यमित्यद्य तद्यथाज्ञातं लिख्यते ।

नास्य पितुर्नामाधुना कैरपि स्मर्यते । असौ रघुनाथः स्वनामख्यातो धन्यतमः पुरुषः । जन्मकालः पुनरस्य गौराङ्गस्य सहाध्यायितया किञ्चिन्न्यूनाधिकः शालिवाहनस्य सप्ताधिकश्चतुर्दशशततमः शाको भविष्यति ( १४०७ ) । त्रिवर्षवयस्कस्य रघुनाथस्य पिता कालवशं गतवान् पिताऽस्यातीव दरिद्र आसीत् । सुतरां मरणादर्वाक् स स्त्रीपुत्रयोर्जीविकार्थं किंचिदपि द्रव्यादि रक्षितुं नापारयत् । उपायान्तरमलभमाना च रघुनाथस्य जननी भिक्षामेव वृत्तिमवालम्बत । किं तु तयापि तस्या आत्मजस्य च पोषणं दुष्करमासीत् । ततस्तदानीमनन्यगत्या सा तत्रत्यचतुष्पाठीच्छात्राणां यावदनिषिद्धं दासीकर्म कर्तुं प्रववृते ।

तदा रघुनाथः पञ्चमे वर्षे वयसि प्रविवेश । अथैकस्मिन्दिने रघुनाथमाता वह्निमानेतुं छात्रनिकेतने रघुनाथं प्रेरितवती । तदा चतुष्पाठ्यां कश्चिद्विद्यार्थी रध्नाति । रघुनाथस्तमग्निं ययाचे । याचितश्च स चुल्लिकोदराद्दर्व्यां वह्निमानीय 'गृहाणानलं रघुनाथेति' यावदुवाच तावदनानीतानलपात्रो रघुनाथो विपन्नः किंकर्तव्यमूढश्च क्षणं संवृत्तः । प्रत्युत्पन्नमतिश्च तत्कालमेव झटित्यञ्जलिना धूलिपुञ्जमादाय देह्यग्निमत्रेत्यब्रवीद्विद्यार्थिनम् । विद्यार्थ्यपि धूलिपूर्णे रघुनाथस्य करयुगले वह्निं प्रददौ । रघुनाथोऽपि स्वच्छन्दतोऽग्निमानीय मातुरग्रे न्यक्षिपत् ।

---

( १ ) 'गौराङ्गोनाम राजाऽस्त । स च शालिवाहन शके ( १४०७ ) वर्षे आविरासीत् ।' इति न्यायकोशे यत्प्रतिपादितं तत्र गौराङ्गस्य राजत्वोक्तिः प्रामादिकी । स किल श्रीरघुनाथशिरोमणेः सतीर्थ्यो वङ्गदेशीयो महायोगी ।

अहो इत्थमेव महात्मनामुन्नतिपथं परिष्करोति दैवमिति । तस्मिंस्तु मठे तदानीन्तनोऽद्वितीयो वङ्गीयो नैय्यायिको वासुदेवसार्वभौमो बहूञ्छात्रानध्यापयामास ।

स खलु तदा रघुनाथस्याग्निनयनव्यवहारं ददर्श । विसिस्मिये च तस्य प्रत्युत्पन्नमतित्वकर्मणः ।

ततः स सार्वभौमो यत्नादध्यापितोऽयं बालः कालेऽद्वितीयः पण्डितो भवेदित्यनुमाय तन्मातरं तं ययाचे प्रतिशुश्राव च तस्य पाठनार्थं पोषणार्थं च । तदाकर्ण्य रघुनाथमातापि सानन्दा तद्धस्ते पुत्रं समर्पयामास ।

अथ शुभदिनमासाद्य विद्यारम्भे रघुनाथहस्ते कठिनीं प्रदाय सार्वभौमो यदा रघुनाथेन वर्णमालामलेखयत्तदैव रघुनाथः सार्वभौममपृच्छद्गुरो किमित्यकारस्याग्रतो लेखनं पठनं च । आकारस्य पूर्वपाठे को दोष इति । एवं वङ्गीयवर्णमालायां पवर्गतृतीयस्या (व) न्तस्थचतुर्थस्य (व) चाकृतिः समाना समानं चोच्चारणमित्यवेक्ष्य स बालोऽपृच्छद्गुरो किमित्येकजातीयं वर्णद्वयमिति ।

श्रुत्वैवं बालभाषितं विस्मयपरो वासुदेवसार्वभौमस्तदैवाकामतोऽपि वर्णोच्चारविधिं सम्यग्बोधयामास । यस्य खलु कठिनीग्रहणसमय एव तथाविधकठिनार्थबोधे शक्तिः समीचीना वर्तेत तस्य व्याकरणादौ व्युत्पत्तिलाभे कालविलम्बो न संभवेदिति किमत्राश्चर्यम् ।

अथ कदाचिद्रघुनाथः कियन्ति क्षुद्रपुष्पाण्युत्तोल्यानेतुं सार्वभौमेनादिष्टः केवलहस्त एव स्थापयित्वा तान्यानीतवान् । तदालोक्य सार्वभौमः खिन्न इवोवाच कदलीपत्रादिव्यवधानं विना केवलहस्ते स्थापितानि पुष्पाणि यतो दुष्टानि भवन्ति अत एतानि त्याज्यानि ।

तच्छ्रुत्वा रघुनाथेनोक्तम् । गुरो न खलु सर्वाणि पुष्पाणि हस्ते स्थापितानि । यानि तु साक्षाद्धस्ते स्थापितानि तानि दुष्टानीति त्यज्यन्तां कदलीपत्रादिस्थानापन्नेषु नीचैःस्थेषु पुष्पेषु स्थितानि तु पुष्पाण्यदुष्टानि तत्तानि गृह्यन्तामिति ।

बालभाषितमेतं सिद्धान्तं निशम्य सार्वभौमोऽतीव विस्मितो बभूव। अर्वागेव दशमवर्षाद्रघुनाथः साहित्यं कियतीं च स्मृतिं समाप्य न्यायशास्त्रमध्येतुं प्रवृत्तः। द्वित्रैरेव च वर्षैस्तात्कालिकप्रचलितानधीत्य न्यायग्रन्थांस्तत्र तत्र दोषनिकरं प्रदर्शितवान्।

अथैकदा सप्तम्यां तिथौ सौरे प्रदोषे उत्तानं शयानो गाढचिन्तया निश्चलदृष्टिर्न्यायशास्त्रीयपदार्थान्ध्यातुं प्रवृत्तो रघुनाथः। तथाभूतस्य च तस्यैकं चक्षुर्दैवप्रेरितेन च्छदिस्तः पतितेन तृणेनाहतं प्रनष्टं च।

ततस्तेन निश्चितं भगवता प्रकुपितेन सूर्येण निषिद्धं प्रदोषेऽध्ययनं समाचरतो मे पुनः प्रदोषे शास्त्रं नैवालोच्यमिति दण्डो विहित इति। ततःप्रभृत्यद्यावधि वङ्गे चतुष्पाठीयविद्यार्थिभिः सप्तम्यां त्रयोदश्यां च प्रदोषे नाधीयते परन्त्वक्षा दीव्यन्ते। हस्ताहस्ति केशाकेशि मुष्टीमुष्टि वा दुश्चेष्टितं युद्धमनुष्ठीयते।

आसीत्तदानीं मिथिलैव न्यायचर्चायाः परमा भूमिः। अवाप्तविद्यानां छात्राणामुपाधिप्रदानप्रथापि मिथिलायामेवासीत्। रघुनाथोऽपि ततो मिथिलायां गतः।

अत्र द्विविधेयं किंवदन्ती प्रचरति। तत्रैकैवंविधा तथाहि—वासुदेवसार्वभौमो यथास्वशक्ति रघुनाथमध्याप्य यदा मन्यतेस्म मत्तोऽप्यधिकतरः पण्डितो रघनाथ इति तदा स्वयमेव साग्रहं सानन्दं च विद्योपाधिमधिगन्तुं मिथिलायां प्रेरितवानिति।

अपरा चेत्थम्—सार्वभौमादधीयानो रघुनाथोऽवितृप्त इव समधिकां विद्यामधिगन्तुं प्रदर्शयितुं वा विजेतुं वा मिथिलां गतवानिति।

तदानीं मिथिलायां पक्षधरमिश्र एवासीत्सर्वेभ्यः पण्डिततमः। स खल्वसंख्यान्विद्यार्थिनः प्रत्यहमध्यापितवान्। तस्य च साक्षात्कारे आसीदेवं रीतिः—यः कश्चित्पण्डितो विद्यार्थी वा तं साक्षात्कर्तुं गच्छेत्स तस्य छात्राञ्छास्त्रार्थे पराजित्यैव साक्षात्कारं लभते नान्यथेति।

ततश्छात्रपरिषदमासाद्य रघुनाथोऽलौकिकसन्निकर्षे किं तावल्लक्षणं कथं वेत्यपृच्छत्।

मैथिलास्तु स्वत एव क्रूरमतयो दाम्भिकाश्च त्रैलोक्यं तृणीकुर्वन्ति । तदा तेऽपि रघुनाथं काणमवलोक्य पप्रच्छुः ।

आखण्डलः सहस्राक्षो विरुपाक्षस्त्रिलोचनः ।
अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः ॥ इति ॥

ततो रघुनाथेनोक्तम् ।

आखण्डलः सहस्राक्षो विरूपाक्षस्त्रिलोचनः ।
यूयं द्वि(वि) लोचनाः शास्त्रे न्यायेऽहं त्वेकलोचनः ॥इति॥

ततः प्रवृत्ते तुमुले शास्त्रार्थे रघुनाथो नीचैरारभ्योच्चतमान्यावच्छात्रान्क्रमशः पराजितवान् । ततः केऽपि छात्रा वृत्तान्तमेतं पक्षधरमिश्राय निवेदयामासुः । श्रुतवृत्तान्तश्च स द्रुतमानीयतां वङ्गीयो विद्यार्थीति समादिशत् ।

ततः साक्षादुपसृत्य रघुनाथः कृतप्रणामो विहिताञ्जलिः प्रोवाच

शङ्करवाचस्पत्योः शङ्करवाचस्पती सदृशौ ।
पक्षधरप्रतिपक्षी लक्षीभूतो न कुत्रापि ॥

इत्येवं लोकमुखादवगत्य श्रीमत्पादयुगलं प्रणन्तुं कांश्चिच्च शास्त्रीयसंशयानपनेतुं प्राप्तोऽस्मीति ।

ततः पक्षधरमिश्रः कथयति–श्रुतो भवद्वृत्तान्तः । अहो

वक्षोजपानकृत्काण संशये जाग्रति स्फुटम् ।
सामान्यलक्षणः कस्मादकस्मादवलुप्यते ॥

इति चापृच्छत् । इत्थं प्रवर्तमाने तयोः शास्त्रार्थे चरमतो रघुनाथेन सामान्यलक्षणः सन्निकर्षः खण्डितो न पुनः पक्षधरमिश्रेण मण्डयितुमपारि ।

---

१ शङ्करः श्रीशङ्कराचार्यः 'शंकरः शंकरः साक्षादित्युक्तस्तत्सदृशः' श्रीशङ्करो महादेवः । वाचस्पतिर्न्यायवार्तिक व्याख्यानादिग्रन्थप्रणेता प्राचीनो नैय्यायिकप्रवरः । २. शङ्करो भगवान् हरो वाचस्पतिर्बृहस्पतिः । ३. वक्षोजपानकृत् स्तनपायिन् अप्रौढ शास्त्रविचारानर्हेति ध्वनिः । काण अन्ध लोचनशून्य 'सर्वस्यलोचनं शास्त्रमिति शास्त्रशून्य मूढेति ध्वनिः' :

सार्वभौमस्त्वित्थमात्मनः स्वीकृत्यापि पराजयं सानन्दमालिङ्ग्य रघुनाथं तार्किकशिरोमणिरित्युपाधिं प्रदाय च भूषयामास । उच्चैःकथयामास च यदि जगति पूर्णचन्द्रकिरणादपि निर्मलं किमपि वस्तु स्यात्तर्हि तद्रघुनाथस्य बुद्धिरेवेति ।

रघुनाथः पराजितादप्यनन्यसाधारणोऽसाविति विचिन्त्य पक्षधरमिश्रादनेकान्ग्रन्थानधीतवान् । समाप्तपाठश्च नवद्वीपमागतवान् ।

रघुनाथान्मिथिलायाः सर्वप्रधानः पण्डितः पक्षधरमिश्रः पराजित इति तदाप्रभृति वङ्गे नवद्वीपादेव सर्वे वङ्गीया उपाधिग्रहणमङ्गीचक्रुः । जागर्ति चाद्यापि स संमानो नवद्वीपे । किं तु तन्मूलं दरिद्रापुत्रः स रघुनाथः ।

समागतस्तु श्रीरघुनाथतार्किकशिरोमणिर्वासुदेवसार्वभौमान्तेवासिभिरपरैः पृष्टः । –

कतिदिवसमनैषीः पद्मिनीसद्मनि त्वं
रजनिषु रमितोऽभूः कैरविण्यां रमण्याम् ।
कथय कथय भृङ्ग स्वच्छभावेन ताव-
त्सुखमधिकमवापस्तत्र वाऽत्रैव वेति ॥ इति ॥

रघुनाथः प्राह –

त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को
माधुर्यं तव विश्वतोऽपि विदिता माध्वीक माध्वीकता ।
एतत्किन्तु मनागरुन्तुदमिव ब्रूमो न चेत्कुप्यसि
यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥इति॥ *

रघुनाथो मिथिलाया नवद्वीपमागत्य पाठयितुं प्रवृत्तः । किं तु मठं विधातुं नाल्पीयस्यपि भूमिरासीत् । द्रव्यं तु पूर्वत एव नासीत् । ततो

* पद्यास्यास्याद्यं पादत्रयमनेकैर्वङ्गीयैरविदितं किं तु सुभाषितरत्नभाण्डागारे दृष्टमस्माभिः ।

हरिघोषनामकः कश्चित्सद्गोपो दयापरतन्त्रः स्वीयामेकां बृहद्गोशालां रघुनाथशिरोमणये छात्रानध्यापयितुं प्रददौ । स चाल्पेष्वेव दिवसेषु नानादिग्देशागतैर्विद्यार्थिभिः शास्त्रालापे पृथग्विधवाक्प्रपञ्चपरायणैः कोलाहलेन महानापण इव संदृश्यते स्म । अत एवाद्यापि बहुसंततिका वाटी हरिघोषस्य गोशालेति कथयित्वोपहसंति लोकाः ।

रघुनाथः प्रायः सर्वस्यैव न्यायशास्त्रस्य दीधितिनाम्नीं टीकां व्यरचयत् । सा खलु पूर्ववर्तिभ्यः समस्तन्यायग्रन्थेभ्यः समीचीनेत्यधुना तस्या एव पठनं पाठनं च भारते सर्वत्र प्रचलति । स साकल्येन त्रिंशद्ग्रन्थान्निर्मितवान् ।

तत्पराचीनास्तु जगदीशतर्कालङ्कारप्रभृतयो रघुनाथशिरोमणेर्ग्रन्थस्यैव टीका विरचय्य कृतार्थंमन्या बभूवुरिति ।

एकदा कौतुकपरतन्त्रो नवद्वीपाधिपती रघुनाथशिरोमणिमप्राक्षीत्। हंहो महाशय श्रीमत उपनाम तु शिरोमणिरिति तत्किं शिरसि मणिं न ध्रियसे ।

ततो रघुनाथेनोक्तम्—

यस्य सांसारिकीचिन्ता चिन्ता चिन्तामणेः कुतः ।
तयैव हि शिरःकम्पःक्व शिरोमणिधारणम् ।। इति ।।

श्रुत्वा तु शिरोमणिभाषितं नवद्वीपाधिपतिस्तस्मै बहुद्रव्यप्रसूतिं भूमिं प्रादात् । कदाचिन्नवद्वीपनगरी वङ्गीयराजधानी बभूव । नाधुना तच्चिह्नमप्यस्ति ।

नवद्वीपो यद्यपि न्यायचर्चयैव सुप्रसिद्ध आसीत्तथाप्यधुनेंग्रेजीविद्यया प्लाविते वङ्गे तस्य प्रसिद्धिर्लुप्यते । यतो महामहोपाध्यायानामपि सन्ततय इंग्रेजीविद्यासागर आत्मानं निमज्जयामासुः ।

अहो यो हि नवद्वीपोऽशेषदेशपण्डितप्रणतै रघुनाथतार्किकशिरोमणिजगदीशतर्कालङ्कारगदाधरतर्कालङ्कारभवानन्दसिद्धान्तवागीशरघुनन्दनभट्टाचार्यप्रभृतिभिर्बृहस्पतिप्रख्यैः पण्डितैर्जाज्वल्यमानो बभूव स एवेदानीमपण्डितप्रसूतिकत्वात्तमसाऽऽवृत इव विषीदतीतिहा वैषम्यंकालगतेः।

### संङ्गीतरत्नाकर निर्माता

# शार्ङ्गदेवः

"शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी" इति वचनानुसारेण संगीतं नाम सर्वसंतर्पणं कलाकलशायमानं प्रमोदसाधनमेव । अत एव अभियुक्तैः 'साहित्यमपि सङ्गीतं सरस्वत्यास्तनद्वयम्' "साहित्य-सङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः" इत्यादिकाभिः मुक्ताफलप्रतिमाभिः उक्तिभिः संगीतस्य महत्वं मानवतानिदर्शकत्वं च अभ्यदायि । अतिपुरातनकाले सामवेद एव सातिशयां प्रसृतिं व्याप्तिं तानवितानविस्तारं च अधिजग्मुषः अस्य हि सङ्गीतनाम्नः विश्वसंप्री-णनसाधनविशेषस्य नटराजादेव समुत्पत्तिं आमनन्ति पुरातत्वविदः प्राञ्चः।इयं च सर्वसंमोहिनी संगीतकला इदम्प्रथमतया प्राचीनभारतीयैरेव अभ्यासपाटवेन विकस्वरनैकस्वर-संहिता-मूर्छनाऽरोहावरोह-रागमा-लिका-तानवितान प्रस्तार विस्तारादि नानाप्रकारान् आविष्कृत्य परि-ष्कृत्य संस्कृत्य च नियमबद्ध-भावशुद्धशास्त्रस्वरूपमापादिता । भारती यानां स्वरविज्ञान वैशारद्यनिदर्शकस्य सङ्गीतशास्त्रस्य स्वरूपलक्षणादि मीमांसकेषु गानशास्त्रज्ञेषु प्रथमगणनामानमर्हति अयं शार्ङ्गदेवः । अस्य संगीतरत्नाकर इति गानग्रन्थः संगीतकलायाः विश्वरूपं साक्षात्कारयति, नादभेदान् अवबोधयति, स्वरतरङ्गांश्च अवगमयति सूक्ष्मरागताल तानादि-गानगुणानां स्थानमानादिकं निर्दिशति । किंबहुना श्रीशार्ङ्ग-धरस्य संगीत रत्नाकरः विश्वविश्रुतस्य गन्धर्ववेदस्य महाभाष्य रूपता-मेव सन्धत्ते ।

अयं च शार्ङ्गदेवः ईसवीये त्रयोदशे शतके स्वजनुषा महीमण्डल मिदं मण्डयामासेति प्रतीयते । अस्य पिता सोढ्ढलदेवोनाम यदुवंशावतं सायमानः यादवसिंघणस्य मुख्यमन्त्री आसीत् ।

अयं च यादवसिंघणः अथवा सिङ्घणयादवः अर्वाक्तनयादव-वंशीय महीपालेषु अत्यन्त सुप्रसिद्धः बभूव ।

अयं हि यादवसिङ्घणः गुर्जरान् निर्जित्य कुन्तलानाक्रम्य सर्वानपि बलिष्ठान् तुरुष्कान् जैत्रयात्रावसरे सलीलं जिगाय। वैरिवृन्दपुराक्रन्दनप्रथितयशसः अस्य हि यादवमहीमहेन्द्रस्य भ्रूपरिस्पन्दनमात्रेण कान्दिशीकतामभजन् आन्ध्राः। पन्हाळ प्रतिष्ठितस्य शिलाहारभोजराजस्यापि राज्यं विजित्य स्वसाम्राज्ये अन्तर्भावयामास। गदगशासने "बल्लाळ होय्सळोऽपि अनेन पराजयं प्रापद्यत" इति उदलेखि।

अस्य च यादवराजस्य खोलेश्वरो नाम ऋग्वेदी ब्राह्मणः सेनापतिः बभूव। तस्य द्वितीयपुत्रः बिज्जळः कावेरीपर्यन्तं कर्णाटकराज्यं स्वाधीनं विधाय शिवमोग्गा नगरे चिरमुवास।

अस्यैव हि यादवराजसिंघणस्य प्रधानसाचिव्यं दिव्यमव्याहतं निर्वहतः सोड्डलदेवस्य सुकुमार एव अयं सङ्गीतरत्नं शार्ङ्गदेवः।

शांर्गदेवस्य पितेव पितामहोऽपि भास्करभट्टनामा महापण्डितः 'मीमांसाकौमुदी' 'पद्यामृतसोपाना'दि ग्रन्थप्रणेता सर्वत्रापि सुप्रथित एवासीत्। दाक्षिणात्योऽपि विद्वत्तल्लजोऽयं भास्करपण्डितः गुणानुरागिणा काश्मीरसुधीसमाजेन सबहुमानमाकारितः चिराय अवात्सीत् तत्रैव काश्मीरमण्डले। तस्यापि पिता अर्थात् शार्ङ्गधरस्य प्रपितामहः दिवाकरपण्डितोपि 'आचारार्क' नामकं ग्रन्थं प्रणिनायेति ऐतिह्यविदः आशेरते।

तदेवं आगर्भपण्डितानां विश्रुते वंशे महीयसि लब्धजन्मायं शर्ङ्गदेवोऽपि कथमपवादभाजनतामुपनयेदात्मानम्। संस्कृतसाहित्यकलासंगीत-नृत्य-वाद्य-तालादिषु समुपलब्धप्रगल्भचातुरीधुरीणः असावपि संगीतरत्नाकरं नाम बृहद्ग्रन्थं जग्रन्थ। स्वकीये चास्मिन् गेयग्रन्थे आत्मनः पूर्ववर्तिनां भरत मतङ्ग कोहळ आञ्जनेय अभिनवगुप्तादि नानागानगुरूणां नामानि उल्लिखति।

तेन शार्गदेवात्प्रागेव संगीतशास्त्रं पर्याप्तिप्रसारं परिष्कारपौष्कल्यं प्रकारप्राचुर्यं च अभिपद्य उत्कर्षभूमानं प्रगतेश्च चरससीमानं उपाप्राक्षीदिति विस्फुटमवसीयते।

परमद्य समुपलभ्यमान संगीतशास्त्रीय लाक्षणिकोद्ग्रन्थेषु प्राथम्य-प्राधान्यप्रौढिमानमाढौकमानेऽस्मिन् गेय ग्रन्थे (१) स्वरगताध्याय (२) रागविवेकाध्याय (३) प्रकीर्णाध्याय (४) प्रबन्धाध्याय (५) तालाध्याय (६) वाद्याध्याय (७) नृत्याध्यायेति सप्ताध्यायाः संवर्तन्ते ।

तत्रप्रथमं स्वरगताध्याये पिण्डोत्पत्ति, नादोत्पत्ति, श्रुति, तज्जाति, शुद्धस्वर, अपस्वर, मृग पशुपक्ष्याद्यनुकरणस्वरादीनां विवेको वर्तते। तथा सप्तस्वराणां जाति, वर्ण, ऋषि, देवता, छन्दश्छायादीनि, नाना विधाः गेयालंकाराः, त्रयोदशप्रकारका विशिष्टालंकाराः, तल्लक्षणानि वादिसंवादि स्वरभेदाः, तथा कपाल, कम्बलादि नानागानरीतयश्च सुविशदं निरूपिताः ।

द्वितीयस्मिन् रागविवेकाध्याये रागोपरागाः भाषा - विभाषा-आंतरभाषारागाः तथा रागाङ्ग - भाषाङ्ग - उपाङ्ग - क्रियाङ्गादिरागा इति नानाप्रकारेण विभक्तानां असंख्यरागरागिणीनां लक्षणस्वरूपादयः साधु विवृताः विवेचिताश्च शास्त्रसंस्कृतसुमेधसा शार्ंगदेवेन ।

तृतीये च प्रकीर्णाध्याये गायकानां गुणदोषाः शारीरलक्षणानि गमकगमकिलिंगानि वृन्दवाद्य, सामूहिकसंगीतादीनां पद्धतयश्च प्रदर्शिताः ।

पञ्चमे तालाध्याये मार्गताललयविवरणं तत्षडंगविचारणं दशप्राणलक्षण निरूपणं तत्तालोपतालसंबध्देतरयावद्विचारा अपि अत्र प्रस्तुताः विस्तृता विवेचनानिकषशिलासम्मर्शननिष्कर्षिताश्च ।

तुरीये प्रबन्धाध्याये धात्वंगजाति प्रबन्धानां विशदविवरणं गीतिरीतीणां त्रिदोषविचारः त्रैगुण्यविचारश्च प्रवृत्तः परिष्कृतश्च ।

षष्ठे वाद्याध्याये तत्कालीनरूढिसमारूढानां प्रयोगोपयोगभूमिकामुपगतानां नानावाद्यविशेषाणां लक्षणानि सुसूक्ष्मम् अभ्युदीरितानि लक्ष्यन्ते ।

चरमे च सप्तमे नृत्याध्याये नर्तनकला तद्भेदाः तदुपयुक्तहावभावाः भावभंग्यः रसरागाः तानताललीला वाद्यवृन्दानि अन्ये च नृत्याङ्गभूताः परिकरविशेषाः सविस्तरं ससंमर्शं च व्यावर्णनसरणिमधिरोपिताः सर्वशास्त्रनदीष्णेन शास्त्रसाहित्यसंगीतादित्रिविधपाण्डित्यमण्डितेन शार्ङ्गदेवेन ।

यद्यपि अद्यतनसमयप्रचलितविविधसंगीतरागरूपाणां निर्देशः निदर्शनं वा संगीतरत्नाकरे नोपलभ्यत एव । परं प्राचीन संगीतशास्त्रस्य व्याप्ति विस्तार प्रणाली प्रकारादीन् परिचिचीषूणां नितान्तमुपकुर्वदिदं ग्रन्थरत्नं संगीतसंसारमेव आदीपयति । अस्य च गानगन्धर्वेति सुप्रसिद्धस्य शार्ङ्गदेवस्य चरितं यथाश्रुतं समासतो निरूपितं । हम्मीरविजय शार्ंगधरसुभाषितादिकर्ता शार्ंगधरकविः शार्ंगधरपद्धति शार्ंगधरसंहितादि वैद्यकग्रन्थप्रणेता च वैद्यशार्ंगधरः अन्य एव प्रस्तुतात् संगीत शार्ङ्गदेवादिति बोद्धव्यं वाचकैरिति दिक् ।

---

# " स्वप्नफलम् "

## यादृशी भावना यस्य सिद्धिर्भवति तादृशी

काशीपट्टणे पुण्डलीको नाम मालाकारः अवर्तत । सः अतीव देवभक्तः श्रद्धालुश्च अभवत् । स्वप्नेषु च तस्य दृढःविश्वासः आसीत् ।

एकस्मिन् दिने तस्य स्वप्ने कोऽपि ब्राह्मणः आगत्य अकथयत् " पुण्डलीक श्वः प्रातःकाले त्वं विश्वनाथमन्दिरस्य महाद्वारस्य समीपे तिष्ठ । तत्र त्वं किमपि प्रियं श्रोष्यसि " इति ।

भाविकः पुण्डलीकः तं स्वप्नं सत्यमित्येव श्रद्धधानः प्रातः विश्वनाथमन्दिरं गत्वा देवं प्रणम्य द्वारोपान्ते अतिष्ठत्

तत्रैव च बहिर्द्वारस्य दक्षिणतः कश्चन दयारामो नाम मोदकादि व्यापारी स्वस्य आपणे उपाविशत् । सः पुण्डलीकं उपाहूय "अरे किमर्थं त्वं अत्र आगच्छतः निर्गच्छतश्च जनान् गणयन्निव तिष्ठसि ? किं तव कार्यम्?" इति

तदा पुण्डलीकः–ह्यः रात्रौ स्वप्ने कोऽपि ब्राह्मणः "श्वः विश्वनाथ मन्दिरस्य बहिर्द्वारे त्वं किमपि प्रियं श्रोष्यसि" इति अकथयत् । स्वप्नार्था नैव मृषा भवन्तीति विश्वासेन अहमत्र तिष्ठामीति अवदत् । तदा पातं पातं प्रहसन् दयारामः " मूर्ख ! स्वप्नः किं कदाचित् यथार्थः भवति ! स्वाप्नसंपद् नाम गगनकुसुममेव । ममापि ह्यः रात्रौ स्वप्ने काश्यां कस्यचन मालाकारस्य उद्याने बकुलवृक्षस्य अधस्तात् शिलासनम् अधोधः सुवर्णनिधिः वर्तते " इति स्वप्नोऽभवत् । किमेतद् जातु सत्यं भवेत् ? अजीर्णदोषाद् अतृप्तवासनाविकारतया वा चित्रविचित्रा एव नरस्य प्रतिदिनं स्वप्ना संभवेयुः । मूर्खवत् न तत्र विश्वसेः ' गृहं गच्छ" इति उपदिदेश

तदा पुण्डलीकः सानन्दं गृहं गत्वा स्वस्य उद्याने बकुलवृक्षछाया-स्थितं शिलखण्डं उत्पाटयामास । तत्र च प्रभूतः सुवर्णनिधिः दृग्गोचरः बभूव । तं गृहीत्वा सः लक्षाधीशः संवृत्तः । स्वाप्नविश्वासस्य स समीचीनं प्रतिफलं अविन्दत ।

सम्पादकीयम् ४ पुटादनुवृत्तम्

अयि मान्याः अद्य भूमंडले तत्रापि भरतखंडे पांचवार्षिक दश-वार्षिक योजनादिभिः धान्यदुर्भिक्षा दूरोत्सारिता एव। प्रतिपट्टणं प्रति ग्रामं च उद्बुध्यमानाभिः शाला कलाशालादिभिः ज्ञानविज्ञानदुर्भिक्षापि नास्त्येव। इदानीं नास्तिकयुगे यंत्रयुगे दुर्भिक्षानाम एकैव। सा तु वैदिक ज्ञानस्यैव दुर्भिक्षैव। नैषा पञ्चशतयोजनाभिः अपि दूरीभवितुमर्हति। तामेतां भारतस्य अत्यन्तमनिष्टकरीं ज्ञानदुर्भिक्षां अपाकृतवतां श्री अधमारुमठाधीशानां उपकारभरं प्रत्येकोऽपि भारतीयः प्रतिदिनं न केवलं प्रातः किन्तु त्रिकालं संस्मरेत्।

एतेषां च वेदोद्धारव्यापारस्य विवरवार्तां तेषां नवीनवेदविदुषां नव्यजीवनव्यस्थाप्रकारं श्रीस्वामिपादानां पुनरेकां नवीनवैज्ञानिकयोजनां च अग्रिमांके सुविशदं प्रकाशयिष्यामः येन वाचकानां महादाश्चर्यं आनन्दश्च महीयान् भूयात्

— सन्तुष्यतां सकलसन्निकरैः —



Regd. No. B. 7171

## मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पाद-
न्ति तेभ्यः विना मूल्यं मधुरवाणी
त्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राह-
त्वं स्वीकर्तुं शक्यते । यदा ग्राहकता
वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं
ादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न
हीयते । अवलोकनार्थं संचिका
पेक्षणे : अष्टाणक पोस्ट-टिकीट
पर्ण कार्यम् ।

पी. द्वारा पत्रिका नैव
प्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डर
ारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसा-
चेत् प्रकाश्येरन् । असुवाच्याक्षराः
ीरसाः दीर्घतराकाराः कठिणत-
रश्च लेखा नैव अवसरमासादयेयुः ।
रलतमानां लेखानां प्रथमप्राशस्त्यं
दीयते ।

**BOOK-POST**

To,
Shree 289. The Registrar
Gurukul University
post:- Gurukul Kangri
Dist:- Saharanpur

If addressee is not found
please return to sender.

**पंढरीनाथाचार्य गलगली**
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग. (कर्नाटक)

Printed at the New Gadag Printery Gadag.. by P. S. Hombali
and Published by Pandharinathacharya Galagali at Gadag.

उडुपी श्रीमदद्मारमठाधीशविबुधेशतीर्थस्वामिपादानां

... कृपापोषिता ...

# –× मधुरवाणी ×–

## संस्कृतमासपत्रिका



रुक्मिणीशविजयकर्तॄणां श्री वादिराजस्वामिनां ससन्तरं पुण्यनगरीयविद्वद्वृन्देन हस्तिस्कन्धमारोप्य सभाजिताः सत्कृताः जगद्गुरवः मधुरवाणी महासंरक्षकाः

### श्री सुयमीन्द्रतीर्थस्वामिपादाः

| प्रधानसम्पादकाः | | सम्पादकः |
|---|---|---|
| क वि कु ल ति ल क | ** | पण्ढरीनाथाचार्यः |
| राजा एस्. गुरुराजाचार्याः | | गलगली |

वार्षिकमूल्यम् ५—०—०

शके १८८० विलम्बिसं. वैशाख ई. १९५८ मे

# मधुरवाण्याः मुख्यसंचालकाः

श्री श्रीमद्राघवेन्द्रमठाधीशश्रीसुयमीन्द्रतीर्थस्वामिपादाः

## संचालकाः

| | |
|---|---|
| ... श्री विबुधेशतीर्थाः अधमारुमठ | प्रतिवर्षं ५०५ रू. प्रदा: |
| ...मन्तः पद्मनाभराव वैद्य महोदयाः | ,, ५०५ ,, |

प्रतिवर्षं १०१ रू. प्रदाः मधुरवाण्याः संरक्षकाः

... श्री भंडारगिरिमठाधीश-स्वामिपादाः

... श्री पेजावरमठाधीश-स्वामिपादाः

... श्री स्वादीमठाधीश-स्वामिपादाः

श्री श्री द्वारकामठाधीश-श्री शङ्कराचार्यस्वामिपादाः

श्री श्री शृंगेरीपीठाधीशश्रीमद्-अभिनवभारतीर्थस्वामिपादाः

श्री श्री कूडलीशृंगेरीमठाधीश-स्वामिपादाः

## ... विषयानुक्रमणिका ...

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया चिरावज्ञा मूर्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

वर्षः २४ ] बिलम्बि सं. वैशाखसञ्चिका [ अङ्कः २

बुद्धि प्रकाश

## मङ्गलाचरणम्

यद्राघिष्ठदृढिष्ठनिष्ठुरमहापृष्ठाद्रिकण्डूयने ।
मन्दीभूतरयो हि मन्दरगिरिबद्धः सुरैः शासकैः ॥
श्वासोच्छ्वासचलार्णवोर्मिलहरीलीलाप्तदोलोत्सवोऽ
सौ नर्मादृतकूर्मवर्मनृहरिः शर्माणि निर्मातु नः ॥

पीयूषाब्धिसमाहिते सुरगणे स्वस्वःस्थलं निर्गते ।
लीने मन्दरपर्वते निजतनोः कण्डूतिनिर्धूतये ॥
क्वाप्यप्राप्य च किंचनापि भुवनश्रेणीः स्वपृष्ठे भरन् ।
सिन्धूत्क्षोभभयान्नियन्त्रितनिजश्वासो मुदे कच्छपः ॥

ये सम्यग् विबुधैः कृतं च नियमं सत्सूत्रमार्गानुगम् ।
आदृत्यात्र हि 'मन्दराग' महिताश्वाश्रित्य तिष्ठन्ति माम् ॥
तान् संसारसमुद्रमग्नमनुजानप्युद्धरेयं त्विति ।
वन्दे मन्दरधारणेन जगतः सन्दर्शयत्कच्छपम् ॥

## मासावतरणिका

मन्दस्पन्दमरुत्स्तनन्धयहृतो गन्धो मनो नन्दयेत् ।
माकन्दद्रुमरन्दपल्लवरुचिः पुंस्कोकिलालित्रजः ॥
मञ्जीरध्वनिमञ्जुगुञ्जनकलैः पुञ्जं नृणां रञ्जयेत् ।
स्वादिष्ठाम्रफलैस्तु तर्पणमभूद् यद्राध! तन्नेतरैः ॥

# नवीनाः सम्पादकाः

विदितमेवेदं समेषामपि सुरवाणीप्रणयिनां यदियं मधुरवाणी निर्गताशालेशं निरंतरं सुरसरस्वतीसेवां वितन्वानैव आस्त इति। निष्कामबुध्द्या केवलं गीर्वाणगवीसमुद्दिधीर्षया आर्यविद्यायाः समुन्निनीषया च विनापि सर्वकारसाहाय्यं अद्ययावत् यथावत् प्रचलन्त्या अस्याः किल पत्रिकायाः व्यतीतप्रायः त्रयत्रिंशद्हायनात्मकः सुदीर्घतमः समयः। पत्रिकायाः अस्याः प्रारम्भे पं. श्री बुर्ली श्रीनिवासाचार्याः पं. श्री गलगलीरामाचार्यश्च 'सह वीर्यं करवावहै मा विद्विषावहै' इति प्रतिज्ञाय फलप्रत्याशालेशमन्तरा अति समर्थतया सम्पादकधुरां सौहार्देन समभ्यभाष्टाम्। ततः चिरं सहसम्पादकानां श्रीनिवासाचार्याणां आकस्मिकमरणेन श्रीरामाचार्याणां वार्धक्येन सर्वोऽपि पत्रिकाभारः असमर्थस्यापि ममोपरि अकस्मादापतितः। स च इयन्तं कालं यथाकथंचित् मया एकाकिनापि निर्व्यूढः।

परं पत्रिकाणां तत्रापि संस्कृतपत्रिकाणां प्रचालनं नाम न हि सुलभसाध्यं कर्म। द्वित्रचतुराः सकलविधकर्मचतुराः सुरभाषासमुत्कर्षैकातुराः विना लोभलेशं अन्तरा च लाभलवाशां सौहार्देन निरलसं च कर्म यदि कुर्युः तदा यशस्वीभवेदीदृशसंस्कृतपत्रिकासम्पादनरूपं महत्कर्म।

विरलाः किलास्माकं देशे ईदृशः निःस्वार्थसेवाकारिणः पंडिताः। सत्येवात्र रत्नगर्भायां भूयांस एव सर्वनिर्वहणपटीयांसः विद्वांसः विलक्षणकर्तृत्वशक्तिमंतः धीमंतः लेखनकलाकोविदाश्च। परं तेषु प्रायः सर्वेऽपि सेवाबुद्धयपेक्षया 'स्वाहा' बुद्धिरेव बलवत्तरा सती तेषां सद्गुणशालीन् सर्वानपि निगीर्य तान् फणींद्रप्रतिभाप्रभावितानपि पण्डितमुखरवृढान् फणिना भूषितान् सर्पानिव दूरत एव वंद्यानातनोति।

अत एव पत्रिकायाः शाश्वतकल्याणं शुभोदर्कमन्विच्छता मया त
विधनिस्वार्थकार्यकारि समर्थसहकारिण अलाभेन एकेनैव इयद
प्रचालितम् पत्रिकाकार्यम्। वस्तुतस्तु पंचषपूरुषप्रयत्नैकसाध्यानां न
विधानां पत्रिकाव्यापाराणां एकेनैव चिरं क्रियमाणत्वात् समघ
ष्टैव महती एव अव्यवस्था।

नियतप्रकाशनार्थं कृतास्वपि पदे पदे प्रतिज्ञासु समजाय
सुमहान् विलम्बः। प्रत्यङ्कं सम्पादकस्य रोदन-क्षमापण-प्रार्थना
शादिकं निरीक्ष्य सत्यं समुद्विग्ना एव महीयांसो वाचकाः। नि
मुच्चार्यमाणत्वात् तस्य विलापाक्षराणि स्वसत्वं महत्वं स्वस्व
विशेषमपि अपगमय्य निरर्थकाः क्वचिदनर्थका अपि समभवन्। 'f
मृत्युमुपेष्यन्तमनुशोचेन्नु कः पुमान्' इतिवत् दैनंदिनदीनध्वनिं रो
रामायणं संपादकस्य कौटुम्बिकसंकटपुराणं च कः श्रुणवीत।
वतोऽपि असकृत् श्रवणक्षीणसत्वानि भावजीर्णानि तानि परिदेवि
क्षराणि कीदृशं वा भावं परिणामं वा समुत्पादयेयुः! क्रमे
अस्मत्संपादकीयलेखो नाम, रजिस्टरनम्बर, पत्रिकानियमावली, प्र
शनस्थानादि नित्यविषयवत् उपेक्षणीयानीक्षणीयस्थावरविषय
समजनि। न केऽपि तत्र ध्यानं गमनं वा ददति।

अत एव अस्माभिः विगतवर्षे कृतेऽपि प्रकाशनकर्मणि
विलम्बे, अनाविष्कृतेष्वपि सप्ताष्टमासीयेषु पृथक् पृथग् अंके
विशेषतः क्षमायाचना वा वाचकदेवताप्रसादनप्रार्थना वा विहि
तत्र नास्माकं कृतापराधानभिज्ञत्वं अविधेयता वा कारणं किन्तु
मिव अस्माकं शब्दा अपि अर्थशून्या एव संवृत्ता इति मौनमे
लम्बितम्।

परं विगतवत्सरवृत्तया अव्यवस्थया अस्माकं अक्षुन्न
समभवत्। चिरविलम्बविलज्जितानां च नः लेखनी पुनर्वाच

: मधुरवाणीमवतारयितुमपि नितरां संकुचति, क्षमापणशब्दानु-
रतुमपि अपत्रपते, प्रार्थयितुमपि बिभेति ।

सुनिश्चितमिदानीं संप्रतिपद्यामहे यत् समर्थमेकम् अन्यं स्व-
न्यं संपादकमन्तरा मधुरवाणी सुव्यवस्थितरीत्या नैव नियतं
ायितुं शक्यत इति । तदर्थं योग्यमेकं संपादकभारनिर्वहणधुरन्धरं
मर्थं कमपि व्यक्तिविशेषं अन्वेषयन्नेवासम् । तावदेव मम मधुर-
श्च सुदैवेन कविकुलतिलक विद्यावैभवेत्यादि
रुदावलीभूषिताः नैकग्रन्थनिर्मातारः नैककाव्यग्रथयितारः नैक-
नग्रन्थानां परिशोधकाः प्रकाशकाः परिमळेति कर्नाटकभाषामय-
तिकपत्रिकासंचालकाः राजा एस्. गुरुराजाचार्यनामानः कर्म-
ाः ज्ञानशालिनः स्मरणसरणिमस्माकमध्यारुक्षन् ।

तत्क्षण एव च मंत्रालयमभिगत्य मधुरवाण्याः प्रधानसंपादक-
निर्वोढुं प्रार्थयम् । सत्कार्यकरणे महद्भारनिर्वहणे च कदाचिदपि
चादनवलोकमानाः ते कार्याचार्याः मां प्रति सस्नेहं सानुरागं च
'भवता समं मधुरवाणीकार्यभारं अहं वोढुं सदा सन्नद्ध एव
नाहं मधुरवाण्याः संपादकत्वसेवाप्रतिफलतया किंचिदप्य-
केवलं मित्रधर्मतया सुरभाषाशुश्रूषया आर्यधर्मप्रसारेच्छया च
ाणीकार्यं करिष्यामि । परं संपादक इति पत्रिकाया उपरि मम
लेखस्तु मास्तु । नाहं प्रतिष्ठार्थं प्रसिद्धेः कृते वा किमपि कार्य-
ठामि " इति ।

निसर्गभिन्नास्पदयोः लक्ष्मीसरस्वत्योः सन्ततसामानाधिकर-
दर्शनायमानानां तेषां सम्मतिं अधिगत्य निर्वृतं निश्चितं शांतं
ान्तम् । सरसलेखनपटूनां अत्युदाराणां श्रीमतां धीमतां च
ानसम्पादकत्वे मधुरवाण्याः लेखानां द्रव्यस्य वा अनुपपत्तिः

( शेषं २७ तमे पुटे )

# " नरबलिः "

पूर्वकाले सोमको नाम राजा बभूव । तस्य बहुकालपर्यंतं पुत्रसन्ततिः नैव अभवत् । ततः स राजा द्वितीयां एकां कन्याम् उपयेमे । तस्यामपि प्रजोत्पत्तिः नैव बभूव । ततः तृतीयं विवाहं अकरोत् । तस्यामपि सन्ततिः नासीत् । एवं पुत्रार्थं शतं कन्याः तेन महाराजेन परिणीताः । दुरदृष्टेन न एकस्यामपि प्रजोत्पत्तिः तस्य अभवत् ।

अन्ते च तस्य वार्धक्ये कस्यांचित् भार्यायां एकः पुत्रः बभूव । तस्य पुत्रस्य जन्तुः इति नाम चकार । तस्य शतसंख्याकाः सर्वा अपि भार्याः तं स्वपुत्र इत्येव मत्वा तस्मिन् अतितरां स्निह्यन्ति स्म । एवं सः जन्तुः शतमातृकः समभवत् ।

शतमातृप्रेमप्रवाहाणां एकमात्रकेंद्रीभूतः जंतुः शतलालनानि शतपालनानि च समनुविन्दन् नक्षत्रलक्षलाल्यमान इव चारुचन्द्रः सानंदं ववृधे ।

एकस्मिन् दिने शिशुं तं जन्तुं दोलामारोप्य शतं मातरः दोलागीतैः शाययन्ति स्म । परं तस्मिन्नपि हंसतूलिकातल्पे द्विशतदक्षदृष्टीः अपि वञ्चयित्वा काचन पिपीलिका प्रविश्य तं शिशुम् अदशत् । तदा शिशुः सहसा उच्चैः चीत्कारम् अकरोत् । तच्छ्रुत्वा शतमातरोऽपि सहस्रध्वनिमकुर्वन् । तद् दृष्ट्वा अन्तःपुरपरिवारवर्गः सर्वोऽपि सहसा चीत्कारं आक्रंदनं च कर्तुम् उपाक्रमत । तेन अन्तःपुरपरिवारस्य उच्चैरोदनध्वनिना सर्वा एव राजधानी प्रतिध्वनिता बभूव । सर्वेऽपि नागरिका रोदितुमुपाक्रमन्त ।

तदा आस्थानगतो महाराजः नागरिकान् पप्रच्छ " किं भो रुद्यते ? " इति । ते अकथयन् " राजपरिवारः रोदिति । तदनु वयमपि रुदिमः " इति । राजा स्वपरिवारजनान् रोदन-

कारणम् अपृच्छत् । ते तु 'अन्तःपुरपरिवारवर्गः अरोदीत्। तदनुसृत्य अस्माभिरपि रोरुद्यत' इति । राज्ञा पृष्टः अन्तःपुर-परिवारवर्गः अकथयत् "राज्ञीशतकस्य सकरुणविलापः सचीत्काराक्रन्दनं च अस्माकं रोदनस्य कारणमिति" ।

ततो भयसंभ्रान्तः महाराजः अन्तःपुरं समागतः । राजानं दृष्ट्वा तु राज्ञीनां शोकसागरः उद्वेलः समभवत् । राजा तासां शोककारणं पर्यपृच्छत् । तास्तु दुःखातिभारेण रुद्धकंठाः गलद्बाष्पाः किमपि उत्तरं दातुं न अशक्नुवन् । पुनःपुनः राज्ञा अनुरुध्यमानाः दीनदृष्ट्या एव शिशोः जन्तोः तल्पं प्रदर्श्य 'हा पुत्र' इति उच्चैरोदितुमुपाक्रमन्त । तदा राजा स्वपुत्रस्य आरोग्यविषये जीवनविषये एव अतीव सन्दिहानः ससंभ्रमं शिशोः तल्पमुपासदत् । शिशुस्तु पिपीलिकादंशनेन किञ्चिद् रुजं प्राप्य पंचषनिमिषानंतरं वेदनापगमे सुखं सुष्वाप । परं राज्ञीनां शोकभारस्तु समेधमान एवासीत् । तासां शोकाक्षराणि शृण्वन्नेव सः बालः निद्रामवाप ।

राजा तु सुखं प्रसुप्तं बालकं निरीक्ष्य निश्चिन्तः राज्ञीनां दुःखकारणं कञ्चुकिनं पप्रच्छ । तदा सः कञ्चुकी "द्वित्रघंटाभ्यः पूर्वं काचन पिपीलिका कुमारं तल्पे अदशत् । तदा सः किञ्चिद् रुरोद । तदा प्रारब्धं एतासां शतमातृणां रोदनं नाद्यापि विश्राम्यति । पट्टणेऽपि प्रसरन्नेव आस्ते । शिशुस्तु सुखं स्वपिती"-त्याह । तदा राजा तासां प्रेमान्ध्यं वात्सल्यातिरेकं च दृष्ट्वा जहास दुःखितश्च बभूव ।

ततो राजा स्वपुरोहितं आजुहाव । "ब्रह्मन्! मम भार्याशतस्य एक एव पुत्रः । तासां प्रेमभारं सोढुमपि एकस्य शक्तिर्नास्ति । पृथक् अतः मम शतभार्याणां एकैकः पुत्रः यथा उत्पद्येत तथा यत्किमपि यज्ञयागादिकं कारय" इति प्रार्थयामास । तदा पुरोहितः आह "राजन् एकस्मा जीवन्तं पुत्रं बलिं ददासि चेत् शत-

  

पुत्राः तव सम्भवेयुः" इति। तदा राजा "एकपुत्रबलिदानेन यदि पुत्रशतं उत्पद्येत तर्हि अहं ससंतोषं तं यज्ञं करिष्यामि। नरबलिं पुत्रबलिमेव दास्यामी"ति अकथयत्।

प्रारब्धो यज्ञः। तस्य पत्न्यः पुत्रबलिं दातुं नच्छंत। राज्ञा भर्त्सिता भीषिता अपि बलात्कृता अपि ताडिता अपि करस्थं सुतं नायच्छन्त। तदा राजा पुरोहितश्च बलादेव तस्य शिशोः वामकरं गृहीत्वा वेगादुद्धर्तुं आकर्षति स्म। शतपत्न्यः जन्तोः दक्षिणहस्तं गृहीत्वा समाकर्षन्। एवं उभयेषां आकर्षणविकर्षणाभ्यां जर्जरिताङ्गः समभवत् जन्तुः।

अन्ते च पीनाङ्गः पुरोहितः पराक्रमी महाराजश्च बलात् तं शिशुं जननीशताञ्जलिभ्य आच्छिद्य निर्दयं संहृत्य तद्वपां कुण्डे जुहुवतुः। ततः तद्गन्धाघ्राणेन तन्मंत्रप्रभावेण च ताः राजपत्न्यः सर्वा अपि गर्भवत्यः बभूवुः। नवमासानन्तरं एकैकं पुत्रं प्रसुषुविरे च।

तदा ज्येष्ठपुत्रस्य 'जंतुः' इत्येव राजा नाम चकार। ते सर्वेऽपि शतं राजकुमाराः अन्योन्यं अनुरागयुक्ताः सुशीलाः मातापितृसेवाकारिणः समभवन्। पृथक् पृथक् स्वस्वपुत्रलाभेन पूर्वकाले सर्वपुत्रं जन्तुं सर्वेऽपि व्यस्मरन्। राजा राज्ञ्यः राजकुमाराः पुरोहितः प्रजावर्गश्च सुखं समासन् शतसंवत्सरान्।

प्रबुद्धानां शतपुत्राणां सहायेन राजा नैकयज्ञयागान् चकार। ततः पुरोहितः मृतः बभूव। ततः कतिपयकालानन्तरं समर्थेभ्यः पुत्रेभ्यः राज्यभारं प्रदाय राजापि स्वर्गं जगाम।

तत्र पुण्यलोके नैकसत्कर्मकारिणः राज्ञः भोगाय सर्वा अपि सुखसामग्र्यः देवैरुपकल्पिता आसन्। परं तत्र स्वपुरोहितं अदृष्ट्वा राजा विस्मयाविष्टः देवदूतान् स्वगुरुं दर्शयितुं प्रार्थयत्। तदा देवदूताः तं नरकलोकमानाय्य तत्र घोरनरके पाच्यमानं तद्गुरुं प्रादर्शयन्।

तदा सम्भ्रांतः राजा "गुरो! भवादृशस्य ज्ञानिश्रेष्ठस्य नरकः मम तु अज्ञानिनः स्वर्गः! कथमिदम्? किं देवलोकेऽपि पक्षपातः?" इत्यप्राक्षीत्।

तदा गुरुः आह "राजन् मया ज्ञानिनापि नरबलिं दत्वा, हिंसां कृत्वा, तव पुत्रं जंतुं हत्वा, निष्पापं कमपि जन्तुं हुत्वा च अज्ञवद् यज्ञः कारितः। यज्ञेऽपि हिंसा, तत्रापि नरहिंसा सर्वथा न कार्या" इति शास्त्राणां आज्ञा। तां विदित्वापि बुद्धिपूर्वकं मया नरहिंसा आचरिता। तदर्थं उचितेव इयं मे घोरा नरक-यातना"

त्वं तु मम वचनमेव वेदवचनमिति श्रद्धया अज्ञानेन तं यज्ञं कृतवान्। नतु बुद्धिपूर्वकं। अतः न तव महान् पापलेपः। अहं तु विद्वानपि स्वयं पापकृत्यं विधाय, अन्यैरपि अकार्यमिति अधिकशिक्षापात्रमेव अस्मि। इतरनैक-सदुद्देशक-यज्ञ-यागादि-विधीनपि त्वं यावज्जन्म अकरोः इति त्वं स्वर्गयोग्य एव असि। सुखं जीव, चिरं भुंक्ष्व स्वर्गभाग्यम्" इति।

तदा राजा अतीव खिन्नः गुरुभक्तिनियन्त्रितः देवान् प्रार्थयामास "पूज्याः सुखं दुःखं वा अहं गुरुणा सहैव भुञ्जीय। अत इदानीं मम पुण्यसर्वस्वं मम गुरवे समर्पयिष्यामि। ततोऽप्युर्वरितं तदीयं पापं उभावपि सहैव भोक्ष्यावः। पुण्यमपि तथैवेति"।

देवाः तथास्त्विति अब्रुवन्। किञ्चित्कालं उभावपि गुरु-शिष्यौ पापमनुभूय ततः स्वर्गभागिनौ बभूवतुः।

मान्याः 'एतेन (कारणेन) यज्ञयागादिना येन केनापि वा प्राणिहिंसा पुरुषहिंसा वा सर्वथा न करणीया। "मा हिंस्यात् सर्वभूतानि" "अहिंसा परमोधर्मः" इत्यादीनि श्रौतवचनानि निरवकाशानि' इत्येव तात्पर्यं स्फुटमवसीयते।

# क्षेमेन्द्रः

लेखकः— श्री महादेव शर्मा साहित्यशिरोमणिः

## क्षेमेन्द्रस्य कालः—

अनन्तवर्मणो राज्यपालनकालः १०४०–१०८० खिस्ताब्दमिति चरि शोधकैर्निरणायि। १०५० खिस्ताब्दे क्षेमेन्द्रः समयमातृकां प्राबध्नादि "संवत्सरे पञ्चविंशे पौषशुक्लादिवासरे। श्रीमतां भूतिरक्षायै रचितो स्मितोत्सवः" इति समयमातृकांत्यश्लोकेन स्फुटमेव प्रतीयते। अत्र "सप्तर्षि वत्सरादि"नाम्ना काश्मीरादि पर्वतदेशेषु व्यवहार आसीत्। तदुक्त "कलेर्गतैस्सायकनेत्र वर्षैः सप्तर्षिवर्यास्त्रिदिवं प्रयाताः, लोके हि संवत्सरपत्रि कायां सप्तर्षिमानं प्रवदन्ति सन्तः" इति। गत कलिवर्षेषु पञ्चविंशति रहिते शतभक्तेषु यदवशिष्यते स एव लौकिकाब्दः.........कलिगताब्दगणः सप्त वत्सरो भवति। शतसंख्याभञ्जनं तु केवलमङ्कसंकोचार्थम्—अतोयं का १९५० खिस्ताब्द समः" इत्यादीनि गणकवचनानि प्रमाणानि। तस्मा १०१० खिस्ताब्दमारभ्य १०९० खिस्ताब्दपर्यंतं क्षेमेन्द्रो भुवमलंचकारे वक्तुं शक्यते।

## क्षेमेन्द्रस्य राजान्तरम् (कलशः)

अनंतवर्मणः काश्मीरमहाराजस्य पुत्रः कलशः। अयं सहजकविता कृतः कविपण्डितपोषणबद्धकङ्कणः सर्वसद्गुणगरिष्ठश्चासीत्। कुतश्चि कारणात् जीवत्येव स्वस्मिन् अनंतवर्मा सामोदम् राज्ये कलशमभिसिषेच स्वयं च "वार्धके मुनिवृत्तीनाम" इति न्यायेन मुनिचर्यामवालम्ब कलशकालेपि क्षेमेन्द्रः कानिचित् कृतिकुसुमानि विकासयामासेति वि शैकैरुक्तत्वात् कलशास्थानमण्डपमपि क्षेमेन्द्रभूषितमभवदिति वक्तव्य १०८० खिस्ताब्दात् प्रभृति १०८८ खिस्ताब्दपर्यंतं कलशो राज्यमचीकरदि ज्ञायते। अतः कलशराज्यपरिपालनसमये क्षेमेन्द्रः स्थाविरे अतिष्ठ लभ्यते।

तथा च, पूर्वोपदर्शितेन अभिनवगुप्तानन्तवर्मकलशानां समयनिर्ण "एते चत्वारः खिस्तशकस्य एकादशशताब्देष्ववर्तंत, तेष्वाद्योऽभिनव अंत्यः कलशः, सर्वथा समानकालिकौ क्षेमेन्द्रानन्तवर्माणौ" इति समुदाय फलति।

## क्षेमेन्द्रेण विरचिता ग्रन्थाः

क्षेमेन्द्रेण चत्वारिंशद्ग्रन्थाः प्रणीता इति औचित्यविचारचर्चांतिमश्लोके- ावगम्यते । किन्तु तेषु केचिन्नामरूपरहिताः, केचिद्रूपरहिताः केचि- ालभ्यमानाः । तत्र १. रामायणमञ्जरी, २. भारतमञ्जरी, ३. बृहत्कथा- ञ्जरी, ४. कविकण्ठाभरणम्, ५. सेव्यसेवकोपदेशः, ६. चतुर्वर्गसंग्रहः, सुवृत्ततिलकम्, ८. चारुचर्या, ९. समयमातृका, १०. औचित्यविचार- र्चा, ११. दर्पदलन, १२. दशावतारचरिताभिधाः, द्वादशग्रन्था उपलभ्यन्ते। ालब्धेषु ग्रन्थेषु विशेषतश्च कविकण्ठाभरणे प्रसङ्गवशात् तत्र तत्रोदाहृतैः ोकैः १. चित्रभारत, २. पद्यकादम्बरी, ३. कनकजानकी, ४. अमृत- ङ्ग, ५. देशोपदेश, ६. मुक्तावली, ७. शशिवंश, ८. क्षमोपदेश, लावण्यवती, १०. विनयवल्ली, ११. मुनिमतमीमांसा, १२. नीतिलता, . बौद्धवदानकल्पलतिका, १४. अवसरसार, १५. ललितरत्नमाला, . वात्स्यायनसूत्रसार, १७. पवनपञ्चाशिका, १८. नीतिकल्पतरुसमा- ानां ग्रन्थानां नामानि केवलमुपलभ्यन्ते । "कृत्वापि काव्यालङ्कारान् मेन्द्रः कविकर्णिकाम्' इत्यौचित्यविचारचर्चायाम् एकेनावतारिकाश्लो- कविकर्णिकाख्यो ग्रन्थोऽप्यनेन व्यरचीति प्रतीयते । परंत्वेतदादयोऽव- ष्टा ग्रन्थाः कुत्रापि न दृश्यन्ते । सर्गदशकात्मकः कलाविलासाख्यो ग्रन्थः ्त इति ज्ञायते । परन्त्वस्माभिर्नोपलब्धः । सर्वथा सहृदयानां विचार- मितदू यदमूल्यविषयरत्नमंजूषिकाप्राया: क्षेमेन्द्रीयाः प्रबन्धाः बहवो व्यलु- ाति। भूयस्तेषां प्राकट्यमचिरेणैव कालेन स्यात्। रसिकजनप्रार्थनाऽवर्जित- ताया वाग्देव्याः प्रसादेन उपलभ्यमानानां ग्रन्थानां विमर्शस्त्वग्रे क्षयिष्यते ।

आलंकारिकशेखरो राजशेखरः काव्यमीमांसायां कविं प्रथमं त्रेधा ाजते । "शास्त्रकविः काव्यकविरुभयकविश्चेति" । यश्शास्त्रं विधत्ते, यश्च त्र काव्यं विधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते स सर्वोऽपि शास्त्रकवि- ात इत्यर्थः । प्रकृते क्षेमेन्द्रेण साहित्यशास्त्रे औचित्यविचारचर्चा कवि- ाभरण कविकर्णिकादीनां अपूर्वविषयप्रतिपादकानां ग्रन्थानां निर्मितत्वात् न्द्रोऽपि शास्त्रकविरिति मुक्तकण्ठं वक्तव्यं भवति ।

काव्यकविरप्ययं क्षेमेन्द्रः । सरसानां बहूनां काव्यानां अनेन प्रणीत- ः । काव्यकविः पुनः रचनाकविः शब्दकविः अर्थकविः अलंकारकविः कविः मार्गकविः शास्त्रार्थकविरित्यष्टविधमपि कवित्वमस्य सहजसिद्ध- ा जोघुष्यते । तथाहि "पूजासज्जा भजन्ते जयनुतिषु नतिं दिक्षु कांभोज- ाः। सेवाशुष्काः स्तरुष्काः परिजनरचनामेव वीनाः प्रलीनाः ॥ उत्कण्ठा-

 

र्तास्त्रिगर्ताः परिचरणविधौ पीडयन्त्येव गौडाः । दम्भारम्भेण तस्या विदध कुसुमोत्सङ्गतामङ्गवङ्गाः" "उर्वश्यां गर्वखर्वीकृतसकलगुरुग्रामभक्त तयास्यामित्याख्यातेन नीताश्चरणतललिहष्टक्कुराः कुक्कुरत्वम्" इत्या समयमातृकापद्यैः, "जलकेलि कलालोलविद्याधरमृगीदृशां । कुचकुड्कु कर्पूर पिषङ्गपरिपांडुरम्" "एते गोदावरीतीर तारशीकरमारुताः" जग मञ्जरीकुञ्जे कलं भृंगस्तथातथा" इत्यादि रामायण मञ्जरीपद्यैश्चास्य रच कवित्वं स्फुटं भवति । "हिमासहत्वं रवितापभीतिः कथामति मार्गज प्रतीक्षा । लज्जाऽभिमानः क्षणसम्मुखत्वं नक्षत्रचर्चा च धनस्य विघ्नाः" " चतुर्वर्गसंग्रह श्लोकेन "सदाचारमिवावासं श्रियो गुणगणाश्रयम् । आ जातमिवासन्नजनतापक्रमापहम्" "दर्पणं गगनस्येव सागरस्येव सोदर कैलासस्येव हृदयं पूर्णेन्दोरिव मन्दिरम्" इत्यादि रामायणमञ्जरीश्लोकै नामकवित्वं प्रकटं भवति ।

ॐ नमः परब्रह्मणे

# वैदिक सौरविज्ञानम्

लेखकः— मल्लादि सूर्य्यनारायण शास्त्री

ध्यायामि ज्ञाननेत्रैकगोचरं सन्मयं महः ।
अनेककोटिब्रह्माण्ड भाण्डान्तर्गोलभासकम् ॥

"आरोगभ्राज पटर पतङ्ग स्वर्णज्योतिष्मद्विभासकश्यपेभ्यो नमः"

## सूर्यमण्डलानि

वेदाधिष्ठानस्य कर्मसाक्षिणो जगच्चक्षुषः प्रत्यक्षदैवतस्य भ वतस्सूर्यस्य विध्युक्त-नमस्कारपूर्वकं ध्यानमुपासकानां सर्वाभीष्ट प्र यकमिति महर्षिभिः कृतं सदुपदेशमवलम्ब्य सकलभक्तसाधारणं सू ष्टकं चिकीर्षुस्तदष्टसूर्यमहत्त्वमुपासक प्ररोचनमादौ वैदिकसूर्यवि नात्मकेन ग्रन्थेन प्रकाशयामि संग्रहेण—

त्रिलोकीविभासकास्सूर्याः संख्यातीतास्सन्तीति ज्योतिर्विज्ञ चक्षुषा जानन्तो महर्षयस्तेष्वष्टसूर्यान्नामग्रहणपूर्वकमस्तुवन् तैत्ति यारण्यकस्य प्रथमप्रपाठके सप्तमानुवाके साभिज्ञानमारोगाभ्र इत्यादिना यथा—

"आरोगभ्राजः पटरः पतङ्ग ।
स्वर्णरो ज्योतिषीमान् विभासः ॥"

आरोगादय इमे सप्तसूर्या दिवं सर्वतः प्रकाशयन्ति लोकपोष-
र्थं वृष्टिद्वारेण विविधसस्यलतौषधिफलादिमूलकं रसमुत्पादयंतः
प्राणिजातस्य प्रवर्द्धनानुकूलं प्रकाशनमनारतं कल्पयन्तश्च । अष्टम-
: कश्यपनामकः । तस्य जगत्प्रकाशनलक्षणं कर्माऽत्यद्भुतम् । तस्य
ाशनानुरोधेनैव, पूर्वोक्तास्सप्तसूर्यास्तत्र तत्र दिवि वर्तन्ते सकल
दुद्दीपनविधौ समर्थाश्च भवन्ति । यथा स्वर्णकारो धमनसाधनेन
ुमुत्पाद्य संज्वलितानि ज्वालया मालिन्यमपनीय सुवर्णं शोधयति
ा सोमनामकः परमेश्वरसङ्कल्पप्रभावः कश्यपस्य दिव्यं तेजः सर्वदा
ार्य सम्यक्परिशोध्य तान् सप्तसूर्यान्नित्यप्रकाशान्विदधातीति मह-
र्भिविज्ञातं सूर्यसृष्टिरहस्यं योगदृष्ट्या जगत्तत्वपरिशोधनदीक्षया
। उक्तार्थस्य प्रमाणवचनैर्निश्चितत्वादीश्वरेच्छामात्ररूप भौतिक-
र्महत्साधनं कश्यपसूर्य इति सिद्धमेतावता ।

"कश्यपादुदितास्सूर्याः । तान् त्सोमः कश्यपादधिनिर्धमति ।
पाज्ज्योतिर्लभन्ते ।"

इत्यादि श्रुतिप्रतिपादितेभ्यस्सप्तसूर्येभ्यस्समुत्पन्नास्सूर्यविशेषा
ख्याकास्सर्वतो रोदस्योरंतराले सृष्टिकारकस्येच्छया विहितं प्रकाश-
रकं स्वकीयं कर्माचरंतस्तिष्ठंतीति श्रुत्यंतरेभ्यः प्रतिपादितत्वादा-
ादि सप्तसूर्येभ्यः खगोले परिदृश्यमाना विविधग्रहतारकादयः सम-
न्तेति च ज्ञायते । एतेन सूर्यमण्डलान्यसंख्येयानीति सर्वाणि नक्ष-
ग सूर्यमण्डलान्येवेति च यदुच्यते नवीनखगोलपरिशोधकैस्तद्रहस्य
हस्रवत्सरेभ्यः प्रागेव वैदिकर्षिभिः प्रकाशितमिति च सिद्धम् ।

**कश्यपादीनामवस्थानम्**

उत्तरध्रुवाग्रभूमेर्मेरुः । मेरुगिरिः सुरगिरिरिति च व्यवहारोऽ-
। तं प्रकाशयन् सर्वदा कश्यपस्तत्रैव तिष्ठति । न चायं चलन-
:, न कदापि मेरुं जहाति । आजपतपटरपतङ्गनामकास्त्रयस्सूर्या

  

मेरुभागस्याधोभागे तिष्ठन्तस्तन्मार्गादधोवर्ति प्राणिजातं सर्वतः प्रका शयन्ति । तेषां त्रयाणां रश्मयोऽधोमुखा एव न तूर्ध्वमुखाः इतरे स्वर्णरज्योतिष्मद्विभासास्त्रयो मेरुमार्गादुपरि वर्तमाना ऊर्ध्वमुखै रश्मिभिरूर्ध्वलोकं समुद्दीपयन्ति । एषां रश्मयो नाधोमुखाः । तस्मा त्तेषामेषां च मध्यमार्गः शीतलतया गमनयोग्यतामायाति, इत्यादि मेरुमार्गश्चाभिवर्णितः । तिष्ठन्नातपंतीत्युक्तत्वादेतेऽपि न चलनशील इति स्पष्टम् । पूर्वोक्तसूर्येष्वारोगनामक एक एवास्माभिर्दृश्यते सन्नि हितत्वात्, नापरे सप्त, बहुव्यवहितत्वात् । आरोगोऽप्यचलनशील एव । स्थूलदृष्टेस्तस्योदयास्तमयौ प्रत्यहमस्माकं प्रत्यक्षावपि तौ न पारमार्थिकौ यथा नावि नद्यां पुरो गच्छंत्यां नदीतीरं पश्चाद्गच्छ दिव प्रतिभाति नौकास्थितस्य तद्वत् । भू भ्रमणमेव तद्भ्रांतेर्मूलमिति मंत्रद्रष्टृभिः खगोलशास्त्रविद्भिर्विज्ञातपूर्वमेवेति विदितमेव । अस्मि न्नर्थे प्रमाणवाक्यानि । "कश्यपोऽष्टमः स महामेरुं न जहाति । भ्राज पटरपतङ्गानिह ने तिष्ठन्नातपन्ति । तस्मादिह तत्त्रितयाः । अमुत्रैते सुभगो विश्वचक्षास्साधारणस्सूर्यो मानुषाणाम्" ।

यद्यप्युक्तमेव सूर्यस्य चलनं नास्तीति तथापि सर्वात्मना तन्ना स्तीति न मतव्यम् । नक्षत्रान्नक्षत्रमतिमंदं सूर्यो गच्छतीति तच्चलन मस्माकं नाक्षिगोचरमिति च ज्योतिर्गणितविदां विषुवन्निर्णयादवगतम् । तस्मादस्माभिर्दृश्यमानं सूर्यस्य नित्यचलनं न वास्तवमिति मंतव्यम् ।

## सूर्याणामभिज्ञानम

एषामष्टसूर्याणामभिज्ञातारः प्राचीनमहर्षयो बहवः सन्तु नाम तेषु पंचकर्णः प्लाक्षिः प्राणत्रातश्च प्रख्यापिताः श्रुत्या । अत्राद्यौ सप्तसूर्याणां द्रष्टारौ तृतीयस्तु तेषां कश्यपस्य च द्रष्टा मेरुमार्गोप देष्टा च । अत्रेदं श्रुतिभाषितम्—

"अपश्यमहमेतान् त्सप्तसूर्यानिति पंचकर्णो वात्स्यायनः सप्त कर्णश्च प्लाक्षिः आनुश्रविक एव नौ कश्यप इति अपश्यमहमेतत्सू

ण्डलं परिवर्तमानम् गार्ग्यः प्राणत्रातः गच्छन्तंमहामेरुम् एकंचा-
हतम् ।"

"यद्यपि बहवो द्युलोकाः बव्ह्यो भूमयो बहव सूर्याश्च संतीति
तिपादितम्" ।

"यद्याव इन्द्र ते शतशतं भूमीः । नानालिङ्गत्वादृतूनां नाना-
र्य्यत्वम् । आसहस्र सूर्यताया इति वैशम्पायनः" इत्यादि श्रुतिवचनैः
थापि पंचकर्णादिभिः प्रत्यक्षेण दृष्टत्वात् ते सूर्यनामभिस्साभिज्ञानं
निश्चिता इति तद्विशेषोऽत्रावगन्तव्यः—

तैत्तरीयोपनिषदि शिक्षावल्याम् "पृथिव्यन्तरिक्षं द्यौर्दिशोवा-
न्तरदिशः" इत्यादि वाक्यैर्यद् विभुत्वं प्रतिपादितं तस्मिन् पृथिव्यादि
लोकपंचकम्, अग्न्यादि देवतापंचकम्, अबादिभूतपंचकं च निर्दिष्टम्
त्र देवतापंचके त्वादित्यस्यैव प्राधान्यमुत्तरत्र निरूपितं नारायणीये
पि च त्रिप्रकारदेवतास्वग्नीन्द्रसूर्याणांप्रधानत्वं सामान्याकारेण
निर्दिष्टमपि, विशेषतश्च केचन ऋङमंत्राः सूर्य एक एव देवताकार्य
शात्ततदिन्द्रादिबहुरूपत्वेन वर्णित इति कथयन्ति, यथा—

"इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्ससुपर्णो गरुत्मान् । एकं
सद्विप्रा बहुधा वदंत्यग्निं यममातरिश्वानमाहुः ।"

इत्यादीनींद्राग्निस्तुतिपराणि सूक्तानि बहूनि सन्ति । तथापि
योस्सूर्यस्येव बहुरूपत्वं न वर्णितम् अमुमादित्यमेकमेव संतं मेधा-
विनो देवतातत्त्वविदस्तत्तत्कार्यानुरोधेनेन्द्राद्यात्मानमाहुः "एकैव महा-
त्मा देवता स सूर्य आचक्षते" इत्यादिना—एततसर्वं परिशील्य भाष्य-
कारः "सूर्य्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति" इति व्याख्या-
नात् । तत्सत्यम् । "सैषा त्रय्येव विद्या तपति य एषोंऽतरादित्ये हिर-
ण्मयः पुरुषः" इत्याद्युपनिषद्वाक्यैरादित्यस्य परमेश्वरस्याधिष्ठानत्वेन
वर्णितत्वात्तस्य सर्वदेवतात्मत्वकथने न कापि विप्रतिपत्तिः खलु ।
तावता पर्यालोचनेन सहस्रसंख्याकेषु सूर्येषु प्राचीनैरष्टावेव सूर्या
भिज्ञाता इति जगत्कारणस्य परमेश्वरस्य सर्वतेजोनिलयं सूर्यमण्ड-

लमधिष्ठानमिति चावगतम् । तस्मिन् सूर्याष्टकेऽस्माभिरेक एवारोग सूर्यो दृश्यते । स एव मंत्रेण वर्णितः सन्निहितत्वात् । आसमंताद् ज्यते तप्यते अनेनेत्यारोगः रोदोंतरालं सर्वं प्रकाशयतीत्यर्थः । अपि नास्ति रोगो यस्मात्सोऽरोगः अरोग एव आरोगः स्वार्थेऽण् । आत्म भक्तानां रोगं निवर्तयतीत्यर्थः । एवंगुणविशिष्टममुं पूर्वे त्रयीवि "उदुत्यं जातवेदसम्—उद्यन्नद्यमित्रमहः" इत्यादि महासौरमंत्रपठन पूर्वकमर्चयित्वा नमस्कृत्य निरामयास्सन्तः प्रत्यतिष्ठन् सूर्यनमस्कार चारम् । तदारभ्य तत्संप्रदायः श्रोत्रियपरम्परायत्तः सम्यग्व्याप्त चकास्ति भरतखण्डे । ततः प्रत्यक्षमारोगमिवाप्रत्यक्षान् भ्राजादीन ध्यात्वा भक्ता अभीष्टसिद्धिं प्राप्नुवन्त्विवतिमनीषया सूर्याष्टकस्तवो कारि सूर्यभक्तेन मया यथाश्रुति—

## सूर्याष्टक स्तवः—

आलोकनं दशदिशांचित जीवराशे-
रालोकितारमखिलग्रहमण्डलानाम् ।
आरोग्यभाग्यसवितारमुपासकाना-
मारोगमीश्वरचिदंशमहं नमामि ॥१॥

आमेरुमार्गनिहिताखिल भूतजात-
रक्षाविधायिनमधोमुखरश्मिजालैः ।
विभ्राजमानमुषसा निगम स्वरूपं
भ्राजं परात्पर कृपानयन नमामि ॥२॥

वृष्टि प्रसादन समुज्ज्वलितोषधीकं
वृष्टिप्रसारणविशोधित जीवलोकम् ।
†काल प्रवर्त्तकमगोचर कालकालं
विज्ञापकं पटरमूर्जदुहं नमामि ॥३॥

भूमण्डलानि सकलानि समानकाले
सन्दीपयन्तमभितः पतदात्मदीप्त्या ।
ज्योत्स्नातडित्प्रसरणाकरचित्रभानु
देवं पतङ्गमपवर्गपथं नमामि ॥

आमेरुमार्गमुपरि स्फुरदन्तरीक्षं
यां चोद्वहन्तमरुणोर्ध्वमुखांशुजालैः ।
स्वर्णप्रभाधगधगायितदिव्यमूर्ति
तं स्वर्णरं भवसरित्तरणिं नमामि ॥

ऊर्ध्वद्युलोकमभितः परिदृश्यमान-
ज्योतिर्गणस्य विमलद्युतिहेतुभूतम् ।
ज्योतिर्मयप्रभुकृपापरिलब्धदीप्ति
ज्योतिष्मदाख्यमखिलोकभरं नमामि ॥

---

† ज्ञः कालकालः इति श्रुतिः अधिसत्त्वनामकः व्यावहारिककालस्योत्पादकः परमा रूपः चैतन्यात्मकः कालकालः ।

सत्यलोकमुपरिस्थितलोकवासि
ु: प्रियङ्करमहःपरिभासमानम् ।
षा वशीकृतदिगन्तररोदसीकं
ेयं विभासमघनाशकरं नमामि ॥७॥

ानुशासनवशादखिलाण्ड कोटि-
ाण्डदीपनविधीन् परिकल्पसूर्यान् ।
श्रित्य मेरुमभितः परिशीलयन्तं
कश्यपं परमहस्सदनं नमामि ॥८॥

सूर्याष्टकस्तवममुं नियतः पठेद्यः
प्रातश्शुचिः प्रतिदिनं प्रणमन् सवित्रे ।
सूर्याष्टकस्य कृपया लभतेऽत्र पूर्ण-
मायुः श्रियं सुखममुत्र परां गतिं सः ॥९॥

मल्लादिवंशप्रभवेन सूर्य-
नारायण ध्यान परायणेन ।
श्रीसूर्यनारायणशास्त्रिणेदं
सूर्याष्टकस्तोत्रमभाणि भक्त्या ॥१०॥

ॐ तत्सत् ।



# पतञ्जलिचरितकाव्यम्

( श्रीरामभद्रदीक्षितविरचितम् )

पतंजलिचरितकाव्यमष्टसर्गात्मकमादिशेषावतारस्य पतंजलि-र्षेश्चरित्रं विस्तारयति । क्षीराब्धिमध्ये शेषतल्पमधिशयानस्य ष्णोः शरीरगरिमाणमपूर्वमनूभूय वहनासहिष्णुना अहिपतिना ाधिक्यहेतुं सविनयं पृष्टः 'शंभोरानन्दनटस्य नृत्तं यावद्द्रष्टम-ाभिस्तावदेव गौरवमभजत वपुरिति' मधुरां वाचमभिदधे विभु-रायणः । 'तन्नटनमहमपि कुतुकी द्रष्टुमनुजानन्तु मां भवन्त' इति दिनि नागराजे भगवान् सकरुणमित्थमाबभाषे । "महानटस्येशा-य डमरुप्रणादादभवंश्चतुर्दशादिमानि सूत्राणि । तान्यनुसृत्येश्वरानु-ाद् व्याकरणसूत्राणि न्यबध्नान्महर्षिः पाणिनिः । कात्यायनोप्यकरो-त्तिकम् । त्वमपि वार्तिकानां भाष्यं रचयेत्यादेक्ष्यति त्वामंबिका-निरिति ।"

तदा नियोगात्तरुणेन्दुमौलेर्धरातलेऽयं विहितावतारः ।
चिदम्बरक्षेत्रगतः पवित्रं नेत्रोत्सवं द्रक्ष्यसि नृत्तमैशम् ॥

 

स फणिपुंगवोऽन्तरन्नवन्यां संचरन्नुपशांते कस्मिन्नप्यरण्योद्देशेऽ त्यलाभार्थमतिकृच्छ्रम् तपश्चरंतीं निशम्य गोणिकां नाम कांच तापसीं मनसा तामेव मातरं निरणैषीत् । मध्याह्नसमये भगव भास्करं ध्यात्वा तं प्रति जलांजलिं यावदुत्क्षिपति सा साध्वी ता देवांजलिगर्भं प्रविश्याकस्मात् स्वीकृतर्षिकुमाराकृतिरपप्तद् भूमौ भु गेशः । तस्य 'पतंजलि'रित्यभिधां कृत्वा सा स्वमंदिरमेवांजसा निन पुत्रकम् । अनुज्ञातस्तया तपस्यन् पुण्ये वने तपोविघ्नार्थमिंद्रेण प्रे ताभिरप्सरोभिः क्रियमाणे केलीविलासे, समारब्धे विविधनाट्याभिन प्रवर्तितायां वीणावेणुमृदङ्गरवानुगुणगीतिविद्यायां, तमगणयन्, त नवलोकयन्, तामनाकर्णयन्नविकृतोऽनवरतं साम्बपदाहितमानस चचार तपो भृशम् । तोषयामास चन्द्रचूडमपि । तत्पुर आविरा त्प्रीतो भगवानुमानायकः । पतंजलिस्तु दण्डवत्प्रणम्य भूमौ कृतांज ययाचे प्रथमं पदवार्त्तिकभाष्यनिर्माणपटुत्वं, प्रभुनटनालोकनयोग्यत मभिक्षतैव पश्चात् । महेश्वरेण दत्तवर आदिष्टश्चिदंबरक्षेत्रगमना संचरन्मध्येमार्गमद्राक्षीत्तपस्यन्तं व्याघ्रपादं महामुनिम् । तेन संपाद्य मैत्रीं द्वावपि मुनिवरावचिरेणैवायातां चिदम्बरनगरम् । पुण क्षेत्रे तस्मिन् विश्वकर्मणा सुनिर्मितायां सुवर्णसभायां सुरसिद्धचार षिगणैर्मण्डितायां सोमशेखरः स्वयमाविर्भूयावतीर्य वृषवाहनादातन दानन्दनटनम् । नाट्यानन्तरं फणिपतिमित्थमशात् भगवान् पशुपति

"त्वं कृत्वा पदशास्त्रवार्तिकानां भाष्यं तद्विवृणु ततो वि व्रजेति ।"

भगवदाज्ञां शिरसि निधायाचिरेणैव भाष्यमारच्य शिष्या स्वस्य च मध्ये जवनिकां बध्वा 'न कोऽपि तिरस्करिणीमुदस्या पश्येदि'त्यादिश्य स्वयं चास्थायाहीन्द्ररूपमन्तेवासिभ्यः पतंजलौ वि ण्वति स्वभाष्यम्,

**प्रतिपुरुषमिहाननैः कियद्भिर्युगपदयं वदतीति विस्मयेन ।**
**अपहृतमनसोऽथ तेषु शिष्येषु ... दीक्षणाय ॥**

यदा ते गुरुवचनातिलंघनेनानन्तरूपमाचार्यमन्तरुदैक्षंन्त तत्क्षण-त्र भस्मीकृताश्छात्रास्सर्वेऽपि । शिष्य एको भाष्याध्ययनमध्ये गुर्व-नुज्ञातो जलमोचनार्थं बहिर्गत्वा पुनरुपयातोऽप्राक्षीदाचार्यं कथमिद-मिति । सोऽपि 'त्वं यदविहितोत्तरशांतिपाठो बहिर्गतवांस्तद्रक्षो भवेति' शशाप । तद्वंदनैः स्तुतिभिश्च प्रसन्नो मुनिः कृपयेदमुदीरयामास।

" निष्ठायां किं रूपं पचेरिति त्वं बुधान् पृच्छ । पक्वमिति इति यस्तं मम कृतिमध्याप्य मुच्यसे शापात् " इति ।

स राक्षसो महान्तं न्यग्रोधपादपमधिरुह्य

" पचिरूपं निष्ठायां पृच्छन् 'पचितमि'ति वादिनोऽखादत् "

अथातीतेष्वनेकेषु वत्सरेषु समीपमुपयांतं चंद्रगुप्ताभिधमुर्वीसुरं वमिति स्फुटमुत्तरं दत्तवन्तमवनीरुहादवरुह्याध्यापयामासाखिल-ष्यपंक्तीरप्राकृतरूपेणायासीच्चामरालयम् ।

सोऽपि विप्रस्त्वधीतपाठं सर्वं लिखित्वा नखराग्रेण, वटपत्रेषु ध्य तानि दलानि स्ववस्त्रे निधाय शिरसि कानने चरन् पिपासा-तो विमलजलाया नद्या निपीय स्वादुपयस्तत्परिसर एव निकुञ्जे धाय वासोबद्धं पर्णनिचयं श्रमेण किंचिदस्वाप्सीत् । अत्रान्तरे त्सो वटपलाशास्वादनलोलुपश्छदानाकृष्य चर्वितुमारेभे । तत्सं-ादुन्मीलितनयनस्तर्णकमुखात्पत्राण्याक्षिप्य पश्यंस्तद्दन्तक्षतलिपीनि तचिद्दलानि, विषण्णः पुनरपि छदनान्यानीय वस्त्रे बबंध । अस्मिन् ये, काचिदतिसुन्दराकृतिरतिमवर्णजा युवतिर्हैय्यंगवीनं वहंती कर-सिजे साक्षादादिमोहिनी हस्तधृतामृतेव तस्य पुरो बभासे । नव-स्वीकारार्थं प्रार्थयामास तमग्रजन्मानम् । तदास्वाद्य विगतश्रमो ाहार्थं तया पुनःपुनरनुरुध्यमानः "वर्णत्रयजाताः प्रथममुद्वह्य कन्य-पश्चात्वां परिणेष्यामीति" तां समाधाय, तया सार्धमगमन्निज-रीमुज्जयनीम् ।

  

तत्र च "वटद्रुपर्णस्थितवर्णमेलनादथैष भाष्यं निखिलं पतंजलेः लिलेख वत्सक्षतदुर्ग्रहाक्षरे स्थले क्वचित्कुण्डलनामकल्पयत्" ।। ततः तिस्रः कन्यकाः पूर्ववर्णसंभवा यथाक्रमं परिणीय तामप्यंत्यजां स्वीकृत प्रियासु सर्वासु तुल्यं स्थितः । कालक्रमेण च तिस्रोऽपि कांता अजी जनन् सुतवरान् । द्विजश्रीसंभवस्य पुत्रस्य वररुचिरिति, क्षत्रियकांत संजातस्यात्मजस्य विक्रमार्क इति, वैश्यभार्याप्रसूतस्य तनयस्य भट्टि रिति, अंत्यजासूनोर्भर्तृहरिरिति प्रत्येकं नामानि स्वयमेवाकरोत् तुरीयमंतरा त्रीन्नंदनान् विधिवदुपनीय श्रुतीरुपदिदेशापाठयच्च ता पतंजलिमहाभाष्यम् । अध्ययनोत्सुकोऽपि शूद्र इति निवारितो भर्तृ हरिरितरेष्वधीयमानेष्ववनौ गर्त्तं विधाय निलीनो गुरोरंतमधिज महाभाष्यम् । कृतदारकर्मसु तेषु स्वीकृत्य तुरीयाश्रमं गत्वा वारणास यात्वा बदरिकाश्रमपदं तदेवाध्यवात्सीच्चंद्रगुप्तो गोविंदस्वामीति नाम्ना ।

अग्रिमकुमारो वररुचिर्गणितशास्त्रे बहून् ग्रंथान्निबध्याकार्षी ल्लोकोपकारम् । द्वितीयस्तु विक्रमार्को राज्यमासाद्य प्रीतेन नरेंद्रे दत्तं वर्षसहस्रं स्वायुस्सचिवस्यावरजस्य भट्टे मनीषया द्विगुणितमेव कारोन्नरेंद्रः षण्मासानुषित्वा राज्ये षण्मासानध्यास्य च काननम् अन्तिमोऽपि ज्येष्ठभ्रातुर्नाम्ना भट्टिकाव्यमिति रमणीयमकवयन्मह काव्यम् । परं तु शृंगारनीतिवैराग्यानुबन्धं शतकत्रयमप्यातनोत् परमशिवस्यावतारा जगद्गुरवः श्रीमच्छङ्करभगवत्पादाः काशीं बद काश्रमं च गत्वा गोविन्दमुन्यनुग्रहादुपकल्प्याद्वैतभाष्यं विजित्य दि कांचीमयानित्यद्भुतं चरित्रं वर्णितमस्मिन् पतञ्जलिचरितकाव्ये मंजुलतरपद्यनिबद्धेऽस्मिन् ग्रन्थे समुद्रवर्णनमृतुवर्णनं क्षेत्रवर्णनं शि स्तोत्रं चातीव रञ्जयन्ति पठितृमनांसि । तद्ग्रन्थपठनसंभवानन्द स्वयमेवानुभूयते पठितृभिर्न शक्यते वर्णयितुमन्येभ्यः ।

# रतिविलापः

एवं मत्स्यकेतने गच्छति परलोकं, मूर्च्छामवापाच्छाच्छशरीरा द्रमणी रतिः। पुनस्संज्ञामवाप्य रुरोद मुहुर्मुहुः सोरस्ताडनं विल- ाप च बाष्पगद्गदया गिरा । "अयि, जगदेकवीर किं स्वपिषि? ालप मां सकृदप्यवलोकय दीनां । हा । क्व गतोसि नाथ ? कुतो न यसि मामपि तत्र । नाहं जीवितुमुत्सहे विना भवंतं । हा ! कष्टं!! ष्टं !! विषमदृष्टे! अतिरुष्टेन किमिदनुष्टितम् । नाभिष्टुवंति ाष्टाश्चैतत् । यत्त्वं पुरा निजरमणीमरणकारणदक्षजीवितहरणम- थाः तत्को नाम न श्लाघते । यतः प्राणापहारिणः प्राणांतको दंड ्धेय इति नीतिविदां न्यायः पंथाः । प्रकृते क्वाऽल्पीयान्समाधिभंग- पोऽपराधः ? क्व चायं दारुणो मरणरूपो दण्डः । महदिदमन्याय- न्यायं!!! भो, भवादृशा धर्मसेतुपालनहेतवोऽपि यदीदृशानुचित र्मं कुर्युः तदा हंत हंत ! हतमेव जगदिदं मन्ये । न्यायान्यायविचार- ाशारदा यदीदृशाऽन्यायकर्मकरणे बद्धादरास्तर्हि कुत्र निवेदनीयम्? त्र गंतव्यम् ? कश्च श्रोष्यति दीनानां दैन्यं लोके ? किं च भो ाणो, अस्थाने ते किल कोपः । यतो दैत्याऽधमेनानेन ध्वस्थस्व- ााना अस्वप्ना अस्वस्थत्मानस्सांप्रतं । येषां तोषणकृते विषपान- प्यकार्षीः तेषां त्रिदशानां श्रेयसे आस्थावान्किल मे वल्लभः। श्रेयो न ते गार्हस्थ्याश्रमं विना प्रभवति । ततस्तत्र स्थापनाय माधिभंगेनास्वस्थं त्वामकरोत् । न स्वार्थं । तदेतदविचार्य हा! हत ाणनाथस्त्वया । जायाजीवनत्यजनबीजजाल्मे दक्षप्रजेश्वरे यावान- र्षः, तावानेव रोषः पुष्पधनुष्याविष्कृतः सहधर्मिणीसाहचर्यप्रापण- ाहसिकेऽपि । तदेतदुचितं न वेति भवानेव विचारयतु । अथवा ोऽत्र उपकर्ता कश्चापकर्ता किमपि त्वं न जानीषे तत् । तदेतत्स्थाने ्राणुसदृशतया स्थाणुनाम्नो भवतः । भो भो धूर्जटे तव ललाट- ृकुटीरं चारुवचन... कृपाटयामि पुनरुद्घाटय ।

मामपि स कवलीकरोतु । यतस्सतीनां सहगमनमेकाग्नौ समाम्ना
मन्वादिभिः । भो दुश्च्यवन! कुत्सितोऽसि त्वम् । यतस्त्वत्प्रोत्साहि
एव भवभावानले शलभायितो मे वल्लभः । हा! वृद्धश्रवाः! सौंद
बद्धमत्सरेण भवता नूनं घातितो मत्पतिः । अहो ! कृतघ्नता यस्त्व
त्कृते जीवितमप्यविगणय्य मुनिगणं कदर्थीकृतवान् । किमेतत्तादृशोप
कारपारितोषिकमिदम् यद्घातयो मन्नाथम् । हा ! निर्लज
वज्रिन् । सर्वथा न स्मरस्युपकारं स्मरस्य । कुत इयं ईदृश
कृतघ्नताभ्यस्ता ? येन मित्रेऽपि मदने निष्ठुर एवमादिशः । हा
पाप, अनुभव तत्फलम् । पश्य पतिव्रताया बलम् । ममाप्रियमपि त्व
न भस्मसात्करोमि पत्युरतिप्रियमिति । यद् रूपासूयया शमनपुरं प्रापित
कंदर्पः तद् भवतु भवतोऽचिरेण सर्वांगे विरूपता रूपवतीप्रधर्षणात्
यच्छात्रो भवान् तं पृच्छामि सुराचार्यमिदमेव । धिषण! निपुणधिष
इति ते वृथा प्रवादः । कथमन्यथा मनोरथाप्तये प्रमथनाथं व्यथयि
कथयेद्भवान् । यस्मात्साधनीयोऽस्ति स्वीयोऽर्थः स च चेलं प्रस
प्रार्थनीयः न तु कदर्थनीयः । कथमीदृशी तव यशसश्चासदृशी समुन्
मेष शेमुषी मत्सौख्यमुषी दिविषन्मुखमषीलेपकुशला अनाकलितकुश
स्खलनशीला वैपरीत्यशालिनी । अविदग्धोऽपि समंततो दुःखदा
दग्धोऽपि न विदध्यादीदृशीं बुद्धिमात्मसुखसर्वध्वंसिनीम् । चित्रं चेद
कोऽयं द्राविडप्राणायामः । तारकासुरमथनसमर्थे भूतनाथे सत्य
परिहृत्य तं कुतस्तदर्थं तस्मात्तनयोत्पादनम् । कथमिदं न वेत्सि
नैवं जानास्येव मत्सरकुत्सितविचारेण दुश्च्यवनेन प्रचोदितः
बालिशाः! नायं समुचितः पंथाः । सत्वरं गच्छत शरणं करुणावरुण
करं समाधिनियमितकरणं सुरासुरकरसरोरुहसमाराधितपेशलता
सारितसारसचरणं रचितोग्रतपश्चरणं शरण्यं स्थाणुं दुःखपरम्पर
हरणम् । प्रयच्छति चिरवांछितं वः । नियच्छति भवत्सपत्नम् । वि
रति सुखसारम् । समुत्तारयति दुःखसरितः । न शिवाय शिव

लनमिति न ब्रूयास्तानमरान्। गुरो! तेन मे पतिघातहेतोर्विघटयितु-
पत्याभावस्य ते सुरगुरोः गुरुपयोधरभरभीरुपीवरतादरेतरानादर-
रितोदरान् दारुणतरस्मरशरप्रहारगोचररसिकसुरहृदयदारुणोदा-
न् दारान् हरतु, विहरतु च न चिरात्समारूढहरिणो नीहारकिरणः"।
ं रुषा परुषाक्षरकलापैः शपंती, मुहुरार्तविकृतस्वरेण विलपन्ती,
कसदरविंदाक्षपुटनिस्यन्दिबाष्पबिंदुसंदोहकलुषितकपोलमंडला मंदा-
क्षरहितनिदाक्षरैः सगद्गदकन्धरं दुःखबन्धुरं पुरा स्मरनामबन्धु-
ञ्जतं रोदनकर्मधुरन्धरं वृंदारकवृंदं क्रन्दन्ती ग्रहग्रस्तेव निरस्तम-
ष्केव मदमत्तेव ज्वरितेव प्रलपति स्म मुहुर्मुहुर्विसंज्ञा । पुनश्च
ब्धप्रबोधा सकरुणं परिदेवयन्ती हाहेति समाक्रोशन्ती पुनराचष्टा-
रतले समालम्बिताम्बकयुगला निजाम्बरगलद्बाष्पाम्बुकुलाकुला
बरारिकुटुम्बिनी ।

अयि नाथ किमर्थं भूतनाथो व्यथितो वृथा भवता । कथमिद-
नाज्ञासिष्ट भवान्देवाज्ञाविष्टिगृहीतः । "अविप्रकृष्टकोपा
कृष्टतापाः खलु तापसवरिष्ठाः । तेष्वपि दीर्घामर्षो दुर्धर्षो
शीर्षः । तस्य भवप्रभवतापहृतौ प्रभवतो विभवतोऽहृतस्य भवस्य
भवो नैव भावुकाय भवतीति"। ममैव दुरदृष्टप्रकृष्टतया शिवोऽ-
शिवः सहस्राक्षोऽप्यदूरदृष्टिर्धिषणोऽप्यधिषणः संवृत्तः । अलम-
नेन विफलेन विलपनेन । अयि श्रीकान्त,जन्मांतरेऽपि किलास्यैव
न्तसखस्य यथा भवेयं कांतामणिस्तथैव विधीयतां नितांतं कृपा-
मन्तरङ्गम् ।

इति सम्प्रार्थ्य भगवन्तं नरकान्तकं, चितारोहणेन मरणोन्मुखीं
खीं न्यवारयदशरीरवाणी ।

# प्रल्हादः

प्रल्हादो जन्म वैष्णवः ॥ ( नृसिंहपुराणे )

—*—

लेः— विद्यावैभव कवितिलक राजा एस्. गुरुराजाचार्याः,
मधुरवाणी, प्रधानसम्पादकाः

*‡*

दिशः प्रसेदुर्मरुतो ववुः सुखा निरभ्रमभ्रं विशदे च रोदसी ।
गन्धाढ्यमन्दारसुपुष्पवृष्टिः पपात वृन्दारकहस्तमुक्ता ॥

अहो अत्याश्चर्यम् ! हिरण्यकशिपोः पुत्रजनने पुष्पवृष्टिः साधु-सुर-वरादि पुण्यावतारे किल दृष्टचरी पुष्पवृष्टिः । राक्षसकु दैत्यजन्मसमयेषु धूमकेतुदर्शनं अग्निवर्षणं च प्रायो दृष्टचरम् । कुसु मावकिरणं तु नाद्यावधि दृष्टपूर्वं श्रुतचरं वा दानवलोके । परम किमिदम् ? कयाधुदेव्याः पुत्रप्रसवे विद्याधरोत्मुक्तं कल्पवृक्षकुसुम राशिं विलोक्य मुनिमनुजदनुजकुलानि विस्मयस्तिमितान्येव अभूवन् परं वस्तुतस्तु तदा कयाधुदेव्या हिरण्यकशिपुपुत्रत्वेन समुत्पन्नः शिशु न दुष्टदैत्यः किंतु परमभगवद्भक्तः शंकुकर्ण एव ।

अतः शुचिष्मती देवी सुषाव पुत्रमुत्तमम ।
वायुना च समाविष्टं हरिपादाब्जसम्भवम ॥

अत एव हि अमरावतीनागरिकाः कुसुमसम्पातेन स्वकीयमानन्दभ माविरकारयन् ।

सः प्रल्हादः बाल्येऽपि भगवद्भक्तः भूत्वा–

ब्रह्मण्यश्शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ।
आत्मनः सर्वभूतानामेकः प्रियसुहृत्तमः ॥

बभूव । तस्य हरिभक्तिं दृष्ट्वा भीतः हिरण्यकशिपुः तं विष्णुपूज पर्युपासनादिभिः परावर्तयितुं शंडामर्कटस्य गुरोः सविधे प्रेषयामास तत्रापि सः बालभक्तः प्रल्हादः केलीरसान् दैत्यबालकान् प्रति 'क्रीड वा मा प्रमाद्यते'त्युपदिश्य क्रीडाकलाकलापादि कौतुकेभ्यः तान् पर वर्त्य विष्णुभक्तिं शिक्षयामास । एवं गुरोरेव प्रतिमन्त्रमुपदिशन्तं स्व

नयं निरीक्ष्य कोपाटोपकाष्ठीभूतहृदयः हिरण्यकशिपुः तं येन केनापि कारेण निहन्तुमादिदेश । तदाज्ञानुसारं घातकाः तं घातयितुं निःपायितुं च बहुविधं प्रयत्यापि प्रयस्यापि विफलमनोरथा एव समभवन्। दा हि दैत्यबालकाः प्रल्हादस्य प्रभावं विष्णुभक्तेश्च महिमानं च, यक्षीचक्रुः । हिरण्यकशिपुरपि—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
नचैनं क्लेदयन्त्यापो न शोषयति मारुतः ।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥

ति निश्चित्य समधिकमेव सन्तप्तो भूत्वा "पुत्रापसद प्रल्हाद ! तव स्य वा बलं वर्तते येन मृत्युमपि अतीत्य मच्छासनमपि उल्लंघ्य ातुं धृष्णोसि?" इत्यप्राक्षीत् । तदा निर्विशङ्कः शंकुकर्णावतारः स यपोतः निस्सङ्कोचं समाचष्ट—

"न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम् ।
परावरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥" इति ।

तदा प्रस्फुरत्क्रोधस्फुलिंगभीकरः कशिपुः ज्वलदङ्गारखण्डानिव तुण्डादेवं वाक्कांडान् उद्ववाम—

यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्वत्र कस्मात् स्तम्भे न दृश्यते ? ॥

प्रल्हादः— स्तम्भे न दृश्यते कस्मात् ? दृश्यत एव ।

"तर्हि दृश्यताम्" इत्युक्त्वा स्तम्भं निष्ठुरं प्राहरत् हिरण्यकः।

तदा निजभृत्यस्य भाषितं ब्रह्मवरं च सत्यापयितुं 'न मृगं न नुषम्' ईदृशनारसिंहरूपमास्थाय स्तम्भादेव आविर्भूय हिरण्यकशिपुं ङ्कमारोप्य उरोविदारं प्रतिचस्करे नखैः । तदा तस्य रुद्ररूपं भीषणभङ्गभङ्गीं सिंहनादं शार्दूलविक्रीडितं च दृष्ट्वा भयभ्रांताः ब्रह्मादिाः ससंभ्रमं सश्रीकाः समुपगत्य स्तोतुमुपचक्रिरे । अथापि आखण्डरिपुखण्डवेतण्डघटाखण्डनपण्डितोद्दण्डप्रचण्डपुण्डरीकस्य तस्य नरहस्य मन्युः शांतिसीमानं नोपागमत् । तदा प्रल्हादस्य कीर्ति प्रथ-

यितुं जगज्जननी भार्गवी ब्रह्मादिलोकनायकाश्च प्रल्हादमेव आबद्ध भ्रुकुटीतटघटितविकटमुद्राभङ्गीभीषणताविद्रावितदृप्तनक्तंचरस्य नर हरेः सांत्वनाय प्रेषयामासुः। सोऽपि च श्रीहरिसाक्षात्कारेण समुपजात निरवधिकप्रमोदभरमेदुरः भक्त्युद्रेककंपमानकलेवरः गलद्बाष्पः स्खल द्वचाः स्फुटत्पुलकः भक्तिपारवश्येन परमात्मन एव पादमूले पपात तदा श्रीनृसिंहो महासिंहः–

**" स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः।**
**ततः क्षिताववे निविश्य नाथः कृत्वा तमंगे स्वजनैकबन्धुः॥**
**शनैर्विधुन्वन् करपल्लवेन स्पृशन्मुहुर्मातृवदालिलिङ्ग ॥"**

* * * *

**"वज्रादपि कठोराणि मृदूनि कुसुमादपि।**
**लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हसि ?"**

कोपाटोपजाज्वल्यमानोऽपि श्रीनरहरिः प्रल्हाददर्शनमात्रे शांतः समाहितः मृदुलांतःकरणो भूत्वा वात्सल्यातिशयेन तं बाल भक्तं उत्संगमारोप्य सर्वांगमपि प्रेम्णा परामृश्य "वत्स! मदर्थं किय श्रांतोऽसि क्लांतोऽसि च। मम व्याप्तिं विष्णुदीप्तिं च व्यवस्थाप यितुं च कियन्ति वा घोरदुःखानि सोढवानसि ? भवदिष्टं वरं दातु मुत्सुकोऽस्मि । वत्स वरं वृणीष्व" इति प्रणयपरिपाकपरिप्लुतांत करणः अभाणीत् नरकण्ठीरवः। तदा सः नरहरिः हिरण्यसंहा कालीनं क्रोधभावं सम्पूर्णं विस्मृत्य स्वगृहीतजातिसहजां परुषतां पु षतामपि विहाय स भक्तानुग्रहकांक्षया स्त्रीसहजमातृभावमादृत्य वत गाढमालिलिंग मुहुर्मुहुश्चुचुंब सांत्वयितुं च प्रारेभे। अहो, भक्तपराधी नता भगवतः। अहो कुसुमकोमलता नृसिंहहृदयस्य! चारुता चतुरत चमत्कारिता च प्रल्हादभक्तेः!

**शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः॥**
**जीवन्ति नात्मार्थम्...................**

अहो विचित्रा खलु भगवद्भक्तयोः आराध्याराधकभावः रुद्ररूपं उग्रचर्यं भीकराकारं च नरसिंहं सांत्वयितुं प्रल्हादः आगतः तथा नरसिंहोऽपि तं प्रल्हादं सांत्वयितुं प्रेम्णा पितेव परामर्शं, माते

ूर्ध्नि मुहुर्मुहुः अजिघ्रिपत्, प्रियसखेव प्रणयात्परिषस्वजे, प्रसादितो व इव अनुजग्राह, वरं वरीतुं आजग्राह च। परं निस्पृहशिखामणिः ल्हादः न किञ्चिदपि वरयामास। प्रत्युत पुनः शोचितुमेव उपाक्रमत। तदा भगवान् वत्स कुतो वा रोदिषि? कस्ते शोकः? इत्यवयुंक्त। तदा भक्ताग्रणीः आह स्म "भगवन्, नाहं मदर्थं शोचे, गवन्नामस्मरणमेव शरणीकुर्वतः मम आत्मनः चिंता नास्त्येव। परं सारेषु सरतां भवद्वैमुख्यं च भजतां पामराणां गतिः का इति चिन्त्य महान् मे शोको भविष्यति" इति। अहो जगदुद्धिधीर्षा ल्हादराजस्य। दृश्यतां पठ्यतां चेदं प्रल्हादेन स्वयं प्रोक्तं पद्यम्-

**"नैवोद्विजे भवदुरत्ययवैतरिण्याः त्वद्वीर्यगायनमहामृतमग्नचित्तः।**
**शोचे नु तान् विमुखचेतस इंद्रियार्थमायासुखाय भरमुद्वहतो विमूढान्॥**
**प्रायेण देवमुनयः स्वविमुक्तिकामाः मौनं चरंति विजयेन परार्थनिष्ठाः।**
**नैतान्विहाय कृपणान् विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये॥"**

संसारेषु भ्रमतः पामरजनान् परित्यज्य प्रल्हादः मोक्षमपिन्तुं नाचकांक्ष। अनयैव च लोकानुग्रहकांक्षया सर्वजनोद्दिधीर्षया च नःपुनः भुवमवतीर्य पाठ-प्रवचन-व्याख्यानोपदेशादिभिः असंख्यानेक नान् रामधामाभिमुखान् चकार चरीकरीति च अद्यापि सः भक्तासरः करुणाभासुरः सुरभूसुरादिरूपैः।

भगवता वरवरणाय पुनःपुनः प्रेरितः निर्बन्धितश्च सः भक्तवरः एवं वरं अवीवरत्-

**"..........देव जन्मान्तरेष्वपि,**
**दासस्तवाहं भूयासं गरुत्मानिव भक्तिमान्"**

जन्मजन्मांतरेष्वपि अहं तव दास एव यथा भूयासं तथाऽनुगृहाण। यमेव मे वरीयान् वरः" इति। तदा नरसिंहः "अहं तवात्मदाच्छुः त्वं तु दासत्वमिच्छसि"। "वत्स प्रीतः भक्तिक्रीतश्चाहं तव त्मानमेव प्रदित्सामि। त्वं तु दासत्वं वांछसि। कथमिदं घटेत ति साशङ्कमालप्य अन्यत्किमपि वा वरं वृणीष्व इति निजगाद। दा प्रल्हादः-

 

**"प्रसीद सास्तु मे नाथ त्वद्भक्तिः सात्विकी स्थिरा"**

तदा तस्य श्रद्धां बुद्धिं च विलोक्य प्रीतः प्रसन्नः परितुष्टश्च भगव करुणोन्मुखः हसन्मुखश्च भूत्वा अनिच्छतोऽपि तस्यैवं वरं प्रदाय–

**"भोगेन पुण्यं कुशलेन पापं कलेवरं कालबलेन हित्वा ।**
**कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥**
**त्वां च मां च स्मरन् काले कर्मबन्धात्प्रमुच्यते ।**

इति आशीराशिभिः अन्वग्रहीत् ।

ततो भगवदाज्ञानुसारं भगवान् विरिञ्चिः सुवर्णरचिते र खचिते मणिमाणिक्यनिचिते सौभाग्यसमुचिते च वरसिंहासने प्र ष्ठाप्य पट्टाभिषेकं विधाय प्रल्हादं अखण्डभूमण्डलसार्वभौमं चका ततः प्रल्हादराजः षट्त्रिंशत्सहस्रसंवत्सरान् चतुस्सागरपर्यन्तां म मनातङ्कं प्रशास्य विष्णुभक्तिं भागवतधर्मं च प्रसारयामास ।

---

# वैदिककथारहस्यम्

लेः— **कुरुक्षेत्रभूषण पं. छज्जूरामशास्त्री (विद्यासागरः)**

**मीमांसाशास्त्रतेजोभिर्विशेषेणोज्वलीकृते ।**
**वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥**

वेदस्य पुनः प्राणप्रतिष्ठा कृता श्रीमता भट्टपादकुमारिले अनेकवैदिककथारहस्योद्घाटनं कृतम् । तत्र ब्रह्मणः स्वपुत्र्या स स्वत्या सह बलात्कारकरणं वेदेषु प्रसिद्धम् । देवराजेंद्रकर्तृकोऽहल सतीत्वनाशोऽप्येका कथा वैदिक्यस्ति । तयोरेव द्वयोः कथयोर्भट्टप कुमारिलस्यानुसारेण सत्यार्थः प्रदर्श्यते–ऐतरेयब्राह्मणे लिखितमस्ति "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्" ऋक्संहितायां अपि ब मन्त्रेषु अस्याः कथाया वर्णनमुपलभ्यते । ऐतरेयब्राह्मणे त्विदम् लिखितमस्ति यद् ब्रह्मणा यदा रत्यर्थं तदनुगमनं कृतं तदा सा दे सरस्वती रागेणांधीभूय रक्तामाप । पुराणेषु महिम्नःस्तोत्रे चा स्याः कथाया उल्लेखो वर्तते । भट्टपादेन ब्रह्मणोऽस्य कलङ्कस आश्वलायनसूत्रटीकायां वार्तिके च युक्तियुक्तमर्थं कृत्वा परिमा

म् । तद्यथा–'प्रजापतिस्तावत्प्रजापालनाधिकारात्–आदित्य एवो- ते । स चारुणोदयवेलायामुषसमुद्यन्नभ्यैत, सा तदाऽऽगमनादेवोप- यते, इति तद्दुहितृत्वेन व्यपदिश्यते, तस्यां चारुणकिरणाख्यबीज- क्षेपात्स्त्रीपुरुषयोगवदुपचारः ।'

ऋक्संहितायाः–'उदीरय पितरा जायमाभगम्' ७।६।१९ इति त्रे इन्द्रस्य अहल्याजारत्वमुक्तम् । तैत्तरेयारण्यकेऽपि– "गौरास्क- न्, अहल्यायै जार" इत्युक्तम् । आदिकविना वाल्मीकिनापि वता-रामायणे अस्याः कथाया विस्तृतं वर्णनं विहितम् । भट्टपादे- तिसुन्दरतया अस्याः कथाया रहस्योद्घाटनमकारि । स लिखति- मस्ततेजाः परमैश्वर्यनिमित्तेन्द्रियशब्दवाच्यः सवितैव अहनि लीय- नतया रात्रेः, अहल्याशब्दवाच्यायाः क्षयात्मकजरायाः हेतुत्वाज्जीर्य- स्मादनेनैवोदितेनेति आदित्य' एवाऽहल्याजार इत्युच्यते, न तु स्त्रीव्यभिचारात् । 'अहनि लीयते इत्यहल्या' इति निरुक्त्या हल्या इति रात्रेर्नाम । तस्या अहल्याया रात्रेः सूर्यद्वारा जारणं यो भवति तस्मादहल्याजारः सूर्य एवेति ।

एवं द्रौपद्याः पञ्चपतित्वविषये इदमुक्तं भट्टपादेन "यद्- नदी लक्ष्म्या अवतार आसीत्– "लक्ष्मीस्तु बहुभुक्तापि नैव दुष्यति हचित्" इति । एवं यज्ञीयपशुहिंसाविषये बहुविचारं कृत्वा साधि- , यद्-यज्ञीयहिंसा-हिंसा नैव मन्यते । यतः–प्रत्येककर्मणः साध्य- धननामानौ द्वौ भागौ स्तः । साध्यविषये हिंसा निन्द्यते– यथा नयज्ञादे; शत्रुवधस्यैव तल्लक्ष्यत्वात् । साधनांशविषयिणी तु हिंसा दोषभाक् । यथान्धरोगिणः चिकित्साकरणे शस्त्रक्रिया वैद्यस्य नैव ाय, यथा वा आततायिनो वधे राज्ञो न दोषः । तथैव-यज्ञीयपशो- ा फलांशे यद्यपि निषिद्धा, तथापि पापजनकाऽपेक्षया पुण्यजनकता बह्वी वर्तते । महाभाष्येऽपि भगवता पतञ्जलिना 'कूपखानकन्या- दिदमेवोक्तम् । पंचशिखाचार्येणापि च– "स्वल्पः सङ्करः सपरिहारः त्यवमर्शः" इत्यत्रेदमेवाभिहितमिति शम् ।

सम्भवेदिति अश्रद्धेयतममेव वचः । तैः प्रचाल्यमाना
क्वचिद्दिनमात्रविलम्बेनापि प्रकाशिते नैव दृष्टा अस्मि
येयं मधुरवाणी प्रतिमासं क्लृप्तदिने सहृदेस्हृदयाल्हाद
रा नैकलोकंपृणश्लोकसम्भारसुरुचिरावयवा सुव्यवसि
पेण अवतरेत् परिमळपत्रिकावन्मधुरमधुरवाणीति
सिति नश्चेतः ।

सांप्रतं मधुरवाणीमुद्रापकैः सूक्ष्मतराणि अक्षराणि समानी तानि । तेन पुरस्तनाङ्कादारभ्य मुद्रणं मनोरमं भवेत्, लेखा अपि इयत्प्रमाणेऽपि गात्रे अधिकतया प्रकाशयितुं शक्येरन् । कर्गदानां तु महार्घता दुर्मिळता च भीषयति सर्वमपि पत्रिकाप्रपञ्चम् । यदि ग्राहकाः पूर्वं द्वित्रवर्षेषु अप्रदत्तं वार्षिकमूल्यं सद्यमनुप्रेषयेयुः तदा यथेष्टमपि धनं प्रदाय उत्तममसृणकारादान्यानीय यथासमयं आवि ष्कर्तुं शक्येत मधुरवाणी । नो चेदल्पमूल्यलभ्येषु कृष्णवर्णेषु पिशंग प्रभेषु वा कर्गदेषु अगत्या पत्रिका मुद्रणीया भवति । अतः इतस्सानु कम्पां दृष्टिं विकिरन्तु मुष्टिं च शिथिलयन्तु च इति अप्रेषितधनान् प्रति प्रार्थयामहे ।

श्री राजा एस्. गुरुराजाचार्यश्च आत्मनो निषेधवचनमपि सुहृ त्सहजप्रेम्णा अविगणय्य प्रधानसम्पादकेति निर्देशनं मे क्षन्तुं प्रार्थ्यते ईदृशीं इतरैर्दुर्धरसम्पादकत्वधुरं आत्मीयभावनया निर्वहतः तांश्च मित्रवर्यान् शतकृत्वः अभिनन्द्य प्रणम्य विरम्यते ।



Regd. No. B 7171



## मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

... कदाचिदपि वा ... स्वीकर्तु शक्यते । यदा त्रे इन्... ता स्वीक्रिते तद्दिनादार... वर्षपर्यन्तं द्वादशसञ्चिकाः ...यन्ते ।

विना मूल्यं आदर्शसंचिका न दीयते । अवलोकनार्थं संचिका पेक्षमाणैः अष्टाणकपोस्टकीटप्रेषणं कार्यम् ।

व्ही.पी. द्वारा पत्रिका नैव ...ष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डरद्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सर...श्चेत् प्रकाशयेरन् । असुवा...क्षराः नीरसाः दीर्घतराकाराः ...ठणतमाश्च लेखा नैव अवसर...सादयेयुः । सरलतमानां लघु...णां पद्यापेक्षया गद्यमयानां ...नां प्रथमप्राशस्त्यं प्रदीयते ।

BOOK-POST

To,

Sree 284. The Register Gurukul University

पत्रव्यवहारसंकेतः

From,

पंढरीनाथाचार्य गलगली

संपादक मधुरवाणी

मधुरवाणी कार्यालय, गदग

Printed at the Hombli Printery, Gadag by H. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

उडुपि श्री श्रीमदधमारुमठाधीश श्री विबुधेशतीर्थ स्वामिपादानां
कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर आषाढ़ीया १९५८ जुलै

प्रधान संपादकाः
कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार
राजा एस. गुरुराजाचार्याः



संपादकाः
गलगलीत्युपाव्हाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु० ५  एकाङ्कस्य ०-८-०

---

## विषयानुक्रमः





# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया चिरावज्ञामूर्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

२३ वर्षे । विलम्बि संम्वत्सर अषाढ मास सञ्चिका । अङ्कः ४


## दशावतार मङ्गलम्

अन्वेष्यान्वेष्टृतायां विहितविनिमयः स्वस्य च-प्रत्नवाचा-
माकृत्या रुच्यरुच्यांबुधिदुहितृदृशोर्गंधयन्त्वंधुभावं ।
दंष्ट्रायष्टिप्रभाभिर्मुखमखिलदिशामुत्थयन्नुत्थिताभि-
र्ध्येयो मीनो यमीनैः स भवतु भवतां चित्तकासारवासः ॥ १ ॥

विभ्रद्दूब भ्रम्यमाणं शतमखमुखया लेखया लेखमय्या
भोगाभोगेन भोगीशितुरभिवलितं मन्दरामन्दमन्थं ।
निर्यत्नं नूत्नरत्नाभरणमिव शिलानिष्ठुरे पृष्ठभागे
निर्माथे वर्ष्म वार्धेर्मम बहुलतमं शर्म निर्मातु कौर्मम् ॥ २ ॥

ग्रस्तामामीलमुस्तां कलयतु भवतां कोऽपि कूटस्थदंष्ट्री
दंष्ट्रादंडे यदीये वलयमविलयं विश्वविश्वंभरायाः ।
वारां राशेरपारैर्मणिगणकिरणैः कर्बुरीभूतशोभं
केतक्या बर्हलक्ष्म्यां प्रकटयतितरां भ्रामरीं, धामरीतिं ॥ ३ ॥

संगृह्हानस्य तस्याखिलमुनिसदसां तारवाचामनीचा-
माशंसामाततिंसोरमररिपुपतेर्वक्षसः चोदखेदं ।
कुर्वाणस्योग्रदंष्ट्राकिरणविकिरणैः कुंदनिंदां प्रमिता
मंहः सिंहस्य रंहो (ष्ट) जनित जनिभिदस्तंमृतो जृंभतो वः ॥ ४ ॥

सर्वं सर्वसंहाया बलिहृदि कलितं मानभंग्याभिमानं
कुर्वाणेनातिखर्वं चरणजलरुहा व्याप्तलोकेशलोकः ।
अंतर्वत्नीवितानैं रतनुतनुरुचां हासयन्भासमानैं
र्माला वालाहिकीः श्रीः कलयतु कमलाकामनो वामनो वः ॥ ५ ॥

भासामाशासु राशिं विकचनवजपाविद्रुमद्रोहिणीनां
तन्वन्राजन्यवन्यालवनमुकुलितां कीर्तिरेखामिव स्वां ।
पाणौ मुक्ताद्यमालां दधदखिलभुवा प्रीणितब्रह्मवर्यो
योगी भोगींद्रभासा दिशतु परशुना लांछितो वांछितं वः ॥ ६ ॥

उद्धराडं चरिडमानं भुजभुवि दधती ध्वस्तनक्तंचरस्त्री
गल्यामांगल्यभूषामणिगणलहरीधालधल्यापहंत्री ।
वक्रिम्णा शक्रवृत्तेः कुपितपतिधुतां तापसीं तापसीनां
प्रोध्दत्याशास्यकीर्तिः शमयतु भवतां छत्रचूडारिपीडां ॥ ७ ॥

चेलं नीलाब्जनीलं दधदधरसुधाबांधवोद्गन्धिहाला-
हेलासाहित्यरेवत्यधरदलपुटीचुम्बनाडम्बरैपी ।
वेलातीतारिहालाहलविलसितसद्वाडुवल्लीमतल्ली
भीमो रामोऽभिरामो जयति निजरुचा वैरदशशारदेन्दोः ॥ ८ ॥

उद्यत्सख्यामभिख्यां प्रविकसदतसीपिच्छतापिच्छभाभिः
बिभ्राणोदभ्रकुञ्चीकुरवककलिकासंचरच्चञ्चरीकः ।
ध्यच्चाणूरेरेणूकरणनिपुणताध्वंसिताशंसकंस
श्चित्ते नृत्तं विधत्तां विबुधविबुधितः पल्लवो बल्लवीनां ॥ ९ ॥

भूयाद्भूत्यै महत्यै परचुलकसटाकर्कशः कल्किवर्यो
हेषाघोषैर्विहायःकुहरविसमरैः भीषिताशेषलोकः ।
पराडं पापराडपुंसां कलिकलिततमोराशिकोशीकृतानां
खराडंखराडं प्रचंडैः प्रखरतरखुरै रचिता यः चितिं वः ॥ १० ॥

# भासावतरणिका

"मेघा आधुनिका युवान इव तन्वन्त्यम्बराडम्बरम्
शंपा भान्ति पयोधरोन्नतिमिवाद्यादर्शयन्त्योऽङ्गनाः ॥
गूढं विष्णुपदं, त्रयीमयतनुर्मन्दो, विलीना द्विजाः
आपाढः प्रतिबिम्बवन्नु कलेः कालस्य पङ्काधिकः ॥

# दूतकाव्यम् ❀

निबन्धकः—श्री चिन्ताहरणकाव्यतीर्थः एम्. ए. कलकत्ता

**दूतकाव्योत्पत्तिः**—उपलभ्यमानेषु दूतकाव्येषु कालिदासकृतं मेघदूतमेव प्राचीनतमं रचनापटुतया भावभाषासमावेशकुशलतया च प्रधानतममेव पदमध्यास्ते सुरभारत्याम् इति तु निर्विवादमेव वस्तु। महाकविना कालिदासेन चेदृशकाव्यनिर्माणकल्पना स्वयम् एव उद्भाविता पुराणादिषूपवर्णितादाख्यानाद् ग्रन्थान्तराद् वा समधिगता इत्यत्र विषये न किमपि पार्य्यते प्रतिपादयितुं निःसंशयम्। परं कालिदासात् प्राक्तनेऽपि काले अचेतनानां दूतत्वं कल्पितमेव। तथा च ऋग्वेदे पणीनां सविधे कुक्कुररूपायाः सरमाया दूतीरूपेण प्रेषणमुपनिबद्धम्। श्रूयते नागार्जुनग्रन्थस्य कस्यचित् चैनिक-भाषायामनुवादकर्त्ता Hsu Kan नामधेयः चैनिककविः खृष्टिय-द्वितीयशताब्द्यामेव मेघस्य दूतत्वं कल्पयामास। कामविलापसंज्ञके च बौद्धजातके कामिना केनचित् काकस्य चेतनावतोऽपि अज्ञानस्य दूतत्वम् अङ्गीकृतम्। वाचकानां सुखावबोधाय तज्जातकं निखिलमेवात्रोद्ध्रियते—

"कामविलापजातकम्"

तं पण पुरिसं जीवसूले उत्तासेसुं। सो तत्थ णिसिन्नो गच्छन्तं काकं दिस्वा ताव खरं पि तं वेदणं अगणेत्वा पियभरियाय सासणं पेसेतुं काकं आमन्तेन्तो इमा गाथा आहा—

"उच्चे सकुण ओमाण पत्तयाण विहङ्गम।
बज्जसि खो त्वं वामुरुं चिरं खो सा करिस्सति॥
इदं खो सा न जाणाति असिं सत्तिञ्च ओड्डितं।
सां चण्डी काहति कोधं तम्मे तपति नो इध॥
एस उप्पलसस्माहो णिक्खं उस्सीसके कतं।
कासियञ्च मुदुं वत्थं तप्पतु धणकामिया॥"

महाभारते च नलसकाशादागतं राजहंसं दमयन्ती पुनरपि नलस्य सविधे प्रेषितवतीति उपवर्णितम्। रामायणे च रामेण सीतान्तिके दूतस्य हनुमतः प्रेषणं समुपनिबद्धम्। एतावता प्रतिभाति यथा कालिदासात् पूर्वमपि केचन चेतनावतां जन्तूनाम् अचेतनानां वा वस्तूनां दूतत्वं कल्पितवन्तः। एतेभ्य एव कालिदासेन दूतकाव्य-प्रणयनप्रवृत्तिरासादिता न वेति न प्रतिपादयितुमीशाः केऽपि। परं 'सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् इत्याहुः' इति मल्लिनाथेन मेघदूताद्यश्लोकीयटीकाया-मुपन्यस्तमिति हनुमतो दौत्यमेव मेघदूतत्वकल्पने निदानमिति प्राचीनानां मतमिति स्फुटम्। 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा' इति मेघदूतवचनमप्येतदेव मतमनुकूलयतीवेति प्रतीयते। परम् अत्र हनुमतो मानवस्येव ज्ञानवत्तादीनाम् उपवर्णनात् महाभारते च हंसस्य तथात्वप्रतिपादनात् काव्यरसासद्भावतया जातक-वृत्तान्ततः चैनिककविकृतितोऽपि वा कालिदासेनेदृशकाव्यनिर्म्माण-धारणाधिगता भवेदिति प्रतिभाति। परमेतदपि नासम्भवि यथा—कविवरेण स्वत एव समुद्भावितम् एतदिति। यथा तथा वा भवतु कालिदासीयमेव वस्तु सर्वेभ्योऽपि रामायणादिगतेदृशवस्तुभ्यः रामणीयकत्वादिना परमं स्थानमधिकुर्वत् विराजते इत्यत्र न संशयो लेशतोऽपि पदं करोति। श्रीमद्भागवते दशमस्कन्धे सप्तचत्वारिंश-त्तमेऽध्याये समुपवर्णितमुद्धवस्य दौत्यं द्विपञ्चाशत्तमे चाध्याये समुप-न्यस्तस्य वृद्धद्विजस्य दौत्यं शृङ्गाररसविषयकमपि कालिदासकाव्यात् प्राचीनं कालिदासानुकरणजन्यं वेत्यत्र महानेव समुल्लसति संशयः सुमनसां मानसपटे। एतच्चात्रावधेयं यथा दूतकाव्यमूलभूताना-मिव प्राचीनप्राचीनानां रामायणमहाभारतोपवर्णितानां रामदम-यन्तीप्रेषितानां हनुमद्धंसानां दौत्यमुपाश्रित्य न केनाप्यर्वाचीनेन कविना दूतकाव्यं किञ्चिदपि ग्रथितमस्माभिरिदानीमप्युपलब्धम्। विषयान्तराणाम् इतरेषां बहूनामपि दूतकाव्यावलम्बनभूतत्वे ईदृशानां रमणीयविषयाणामुपेक्षणीयत्वे न कारणं किमप्युपलभ्यते।

**कालिदासानुकृतिः**—यथा तथा वा भवतु एतत्तु निश्चिततयैव प्रतीयते यथा कालिदासेनैव महाकविचूडामणिना सुरभारत्यां दूतकाव्यप्रणयनं प्रवर्त्तितमादाविति। एतदपि च निर्विवादं यथा कालिदासादनन्तरं बहुभिरेव सुरसरस्वतीनन्दनैः कविवरैरीदृशकाव्यस्य चमत्कारित्वातिरेकमुपलभमानैरनेकधा कालिदासानुकृतिमुखेन दूतकाव्यानि विविधानि विरचितानीति। तेषु चार्वाचीनेषु वस्तुषु कालिदासानुकरणस्यानुभूयमानत्वेऽपि बहुत्रैव कवित्वमाधुर्य्यं महदेव विलसतीति निःशङ्कं वचः। कालिदासानुकृतिषु चोपलभ्यमानेषु धोयीकविराजविरचितं पवनदूतम् एव प्राचीनतममिति प्रतिभाति। परमासाद्यमानानाम् अपि बहूनामेव दूतकाव्यानां कालस्यानिर्णीतत्वान्नैतत् दार्ढ्येन प्रतिपादयितुमीशा वयम्।

सुप्राचीनालङ्कारिकभामहकृते च ग्रन्थे भ्रमरादीनामचेतनानां दूतत्वकल्पनम् अयुक्तमिति समुल्लिखितत्वात् धोयितः प्राक्तनेऽपि काले कालिदासानुकृतिरूपाणि दूतकाव्यान्यासन् इति निश्चितमनुमातुं प्रभवामः। तथा च भामहवाक्यम्—

"अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः।
अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यंप्रपद्येरन्निति युक्त्या न युज्यते॥
यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते॥

(भामहालङ्कारे १।४२—४४)

यत्तूक्तं पण्डितवर्य्येण कीथ्महोदयेन * यथा—वत्सभट्टिनेवादावनुकृतं मेघदूतमिति तत्तु भ्रमविजृम्भितमित्यनुमीयते वत्सभट्टिरचिते केवलकृतौ दशपुरशासने ऋतुसंहारस्यैव सादृश्योपलम्भात्।

* Classical Sanskrit Literature p. 36

चित्रमेतद्द्रष्टव्यं यथार्वाचीनैः कविभिर्न केवलं कालिदासभावभाषा विषयाणामेवानुकरणं कृतम्। परं कालिदासप्रयुक्तं छन्दोऽपि तैः परिगृहीतम्। तथा च दूतकाव्येषु प्रायेण सर्वेष्वेव कालिदासमेघदूते इव मन्दाक्रान्ताच्छन्द एव प्रयुज्यते।

**दूतकाव्य परिणतिः**—निखिलमेव वस्तुजातमिह जगत्यां कालसहकारेण यथाकथञ्चित् परिवर्तनादिकं भजत्येवेति सामान्यो नियमः। न चास्य नियमस्य व्यतिक्रमो लेशतोऽपि कश्चित् दूतकाव्यविषयेऽनुभूयते। तथा च कालक्रमेण कालिदासानुकृतिष्वपि दूतकाव्येषु परिवर्तनादिकं पदं कृतवदेव। एतच्च दूतकाव्यगतरसविषयादिषु सर्वत्रैव समुपलभ्यते। एवञ्च प्राचीनेषु दूतकाव्येषु मेघपवनादीनामचेतनानामपि गतिमतां वस्तूनां दूतत्वपरिकल्पनं—ततश्च चेतनावतामप्यविज्ञानमानवभावानां शुकचातकादीनां दूतत्वनिरूपणमनन्तरञ्च दौत्यकर्म्मकुशलस्य मानुषस्यैव दूतरूपेण दयितानामन्तिके प्रेषणम् (यथोद्धवदूतादौ)—क्रमेण च भक्तिप्रभृतीनां गुणानामपि दूतत्वं सम्पादितं भक्तिदूतादौ इत्येवं दूतनिश्चयविधौ कालेन दूतकाव्यकृतां कविवराणाम् साधारणानामुपयोगितया धर्म्ममतप्रकटनरूपाभिलाष विशेषः काव्यपरिणतिविधौ महत् साहायकं समपादयत्। अपरञ्च प्राचीनेषु दूतकाव्येषु प्रधानतया विलसतो विप्रलम्भश्रृङ्गारस्य स्थले दूत-काव्यद्वारा 'शिवेतरक्षतिं' सम्पादयितुकामैर्जनानां धर्म्मोत्कर्षं विधातु-मनोभिश्च कविमुख्यैः क्रमेण शान्तस्यैव रसस्य प्राधान्यमुपपादितम्। एतस्य च सूचनं अदूतकाव्येऽपि जिनसेनकृतौ पार्श्वाभ्युदये आदावुपलभामहे। मनोदूतभक्तिदूतादौ चैतस्य दरीदृश्यते पूर्णा परिणतिः। तथा च क्रमेण भक्तिदूतादौ दूतकाव्यव्याजेन मानसौत्कर्षविधायकानां गुणविशेषाणा-मेवालोचनं कृतम् इत्यहो चित्रा परिणतिः श्रृङ्गाररसात्मकस्य श्रृङ्गाराङ्गीभूतदूतप्रेषणप्रधानस्य दूतकाव्यस्य।

एवं दूतकाव्यपरिणतिविधौ अनेकधा साहायकं सर्वथैवाङ्गी-

कर्त्तव्यम्। दूतकाव्यद्वारा धर्म्मोत्कर्षसम्पादनवासना तेषामेव ग्रन्थेषु पार्श्वाभ्युदय-नेमिदूतादिषु प्रथमतः प्रकटीभवति। अपरञ्च दूतकाव्य-प्रणयनविधौ यन्नाम रचनापाटवं तैः प्रदर्शितं तत्तु नितरामेव विस्मय-पदम्। प्रथमतस्तावत् यथा पार्श्वाभ्युदये पार्श्वनाथचरित्रोप-वर्णनात्मके ग्रन्थे निखिलमेव मेघदूतमन्तर्भवति तत्तु उक्तपूर्वमेव।

नेमिदूताख्ये च नेमिनाथचरित्रोपवर्णनात्मके जैनकविप्रणीते दूत-काव्यान्तरे प्रतिश्लोकं मेघदूतगतप्रतिश्लोकान्तिमपाद एवान्तिमपाद-रूपेण प्रयुक्त इति यत् सत्यम् अनन्यसामान्यं पाटवं विक्रमाख्यस्य कविमहत्तमस्य। विषयस्य चास्य नेमिदूतश्लोकात् कञ्चिदुद्धृत्य स्फुटतां विधास्यामः। तद् यथा—

प्राणित्राणप्रवणहृदयो बन्धुवर्गं समग्रं
हित्वा भोगान् सहपरिजनैरुग्रसेनात्मजां च।
श्रीमान् नेमिर्विषयविमुखो मोक्षकामश्चकार
**स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु॥**

अन्येषु च द्वित्रेषु जैनकाव्येषु एषैव रीतिरनुसृतोपलभ्यते।

**दूतकाव्यवैशिष्ट्यम्**—सम्यगालोचितेषु समुपलभ्यमानेषु दूतकाव्येष प्रतिभायाद् यथा—एतेष्वधिकान्येव रामकृष्णराधाप्रभृतीनि हिन्दुपुराणोपवर्णितचरित्राणि नेमिप्रभृतीनि जिनपुराणोपवर्णितचरि त्राणि चालम्ब्यैपवोपनिबद्धानि। ऐतिहासिकं काल्पनिकं वा पुरुष-विशेषमालम्ब्य विरचितानीदृशकाव्यानि अल्पीयांसि एव पवनदूता-दीनि समुपलब्धानि। विप्रलम्भश्रृङ्गार एव चैतेषु प्रायेण सर्वेष्वेवाङ्गी रसः। केवलं नेमिदूतादिषु केषुचित् अर्वाचीनेषु शान्त एव रसः प्राधान्येन प्रविलसति। श्रृङ्गाररसस्य च आदितः प्राधान्यात् ईदृशेषु

काव्येषु, नैतच्चित्रं यथा कृष्णगोपीलीलामधिकृत्यैव बहुभिरीदृशकाव्य निर्माणप्रवृत्तिः सफलतां गमिता। वैशिष्ट्यञ्चैतत् दूतकाव्यगतम् अवधेयं यथा छन्दोऽन्तरं विहाय प्रायेण सर्वैरव दूतकाव्यविरचकै-र्मन्दाक्रान्ता एव समाश्रिता। इदञ्च नाम छन्दः विषयाणामीदृशाना मुपवर्णने परमोपयोगीति आदौ प्रयुक्तं कालिदासेन अर्वाचीनैः श्चापि स्व स्व दूतगीतिषु प्रायश्च इद मेव प्रायोजि परं। केचिदन्यान्य पि शिखरिण्यादि वृत्तानि अवालबन्त। तद्विषये, लेखान्तरे कांश्चन अस्मदीय विचारान् प्रकाशयिष्यामः।



# महाकवि-मयूरः

लेखक :—श्रीकेदारनाथशर्मा सारस्वतः न्यू दिल्ली कमलानगर

"तावत् कविविहङ्गानां ध्वनिर्लोकेषु शस्यते।"
यावन्नो विशति श्रोत्रे मयूर-मधुरध्वनिः ॥ ( सूक्तिमुक्तावलिः )

भगवतो भट्टबाणस्य समकालीनः श्रीमयूरकविर्भारतस्यान्तिम-सम्राजः श्रीहर्षवर्धनमहीपतेः सभायां स्थितिमलभतेति नैकप्रमाणैः स्फुटमवसीयते। तत्सभायाश्चासोत् बाण-मयूरयोः पाण्डित्यप्रतिद्वन्द्वितेत्यपि प्रामाणिकैरितिहासैरवगम्यते। यथा—

"अहो प्रभावो वाग्देव्या यन्मातङ्ग-दिवाकरः।
श्रीहर्षस्याभवत् सभ्यः समो बाण-मयूरयोः" ॥

इति सूक्तिमुक्तावल्यां विशिष्ट कवि-प्रशस्ति-प्रकरणे कविशेखर-राजशेखरः बाण-मयूरयोः श्री हर्षसभायां सहस्थितिं सूचयति। एवमेव 'नवसाहसाङ्कचरित'-प्रणेता 'परिमल-कालिदासा' परनामा पद्मगुप्त-महाकविभोज-पितुः सिन्धुराजस्य मृगयावर्णनापदेशेन श्रीहर्ष-सभायां बाण-मयूरयोः शास्त्र-सङ्घर्षं सूचयति।

"स चित्रवर्ण-विच्छित्ति-शालिनोरवनीपतिः
श्रीहर्ष इव सङ्घर्षं चक्रे बाण मयूरयोः" ॥

स च सम्राट् हर्षवर्द्धनः विक्रमादित्यात् ६६४ वर्षानन्तरं ६००-तमे ख्रिस्ताब्दे राजासनमारुरोह ६२६ तमे वत्सरे च परलोकमुपागमदिति तत्कालीनः श्रीहर्षसभासभ्यः इयशुंग ( ह्वेनसांग ) नामा चीनप्रवासी स्वीये यात्रावर्णने स्फुटं व्याहरतीति स एव समयो मयूर-महाकवेरिति वादि-प्रतिवादिनिर्णीतोऽयं सिद्धान्तः। हर्षवर्द्धनालोचने बाण सङ्कीर्तने चास्मिन् विषये विशदं व्याहरिष्यामः। भोजराजश्च मयूरात् ४०० वर्षानन्तरं १०५० तमे ख्रिस्ताब्दे स्थितिं लेभे। तद्दानपत्र—शिलालेख-दर्शनेनैतत् स्फुटी-भविष्यति।

यद्यपि काव्य प्रकाश-टीकाकारैः कैश्चिदपि "आदित्यादेर्मयूरादीनामिवानर्थ निवारणम्" इत्यादिग्रन्थस्य टीकायाम् लिखितम् यत्—

कदाचित् प्रत्यूषे प्रणयकुपितां प्रियां प्रार्थयमाने बाणे तस्यश्वशुरः मयूरः स्वकविता-सन्दर्शनाय बाणद्वारि समागत एव तेन प्रियां प्रति पठ्यमानं श्लोकस्य पादत्रयमाकर्णयाम्बभूव। यथा—

"गतप्राया रात्रिः कृशतनु ! शशी शीर्यत इव,
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो !"

इति पादत्रयं समाकर्णयन् सहृदयतापरवशो मयूरः स्वदुहितरं जामातरञ्चानवेक्ष्यावेगवशात् चतुर्थपादमपठत्। यथा—

"कुचप्रत्यासत्त्या हृदयमपि ते चण्डि ! कठिनम्" इति।

रसभङ्गजनितेन महता रोषेण लज्जया च दन्दह्यमाना बाणपत्नी स्वपितरं मयूरं शापेन कुष्ठिनं चकार। दुःखितो महाकवि-मयूरः प्रयागत्याक्षयवटे शिक्यशतं बध्वा क्रमश एकैकस्मिन् शिक्ये स्थित एकैकेन श्लोकेन सूर्यं स्तुवन् शिक्यच्छेदनमकरोत्। एवमेव क्रमशो नवनवति-शिक्यच्छेदनं कृत्वा शततमं शिक्यं छेत्तुमुद्यतः सूर्येणाविर्भूय साक्षाद्दत्तवरः कुष्ठरहितोऽभूदित्यादि"।

केचन किंवदन्तीप्रियास्तु वदन्ति यत्—"मयूरस्य तत्प्रभाव-मालोक्य बाणः मात्सर्य्यभग्नमनाश्चण्डिकाग्रे स्वजिह्वां चिच्छेद, ततश्च चण्डीशतकेन तां प्रसादयन् जिह्वां लेभे। एवं कूरनारायणकविः सुदर्शनशतकेन' कश्चन जैनः 'भक्तामरस्तोत्रेण' च स्वाराध्यदेवताप्रभावं प्रदर्शयामासतुः।"

परन्तु सर्वथाऽतथ्यकल्पनाविजृम्भितमेतत् माहात्म्यविशेष-सूचनाय प्रचारितम्। एवमेव 'गङ्गालहरीं' विरचयन् जगन्नाथो गङ्गया तत्समीपमागतया गृहीत इति वदन्ति बहवोऽन्धभक्ताः श्रद्धालवः।

मम्मटप्रामाण्यादेतत्तु श्रद्धेयमेव यत् मयूरकविः सूर्यं स्तुवन् केनाप्यनर्थकारिणा रोगेण निर्मुक्त इति।

अभियुक्तैर्यः श्लोकः कल्पितेऽस्मिन् कथानके प्रमाणीक्रियते 'गतप्राया रात्रि' रित्यादि ; स च समस्यापूरणरूपः केनापि कविना कृतः। वस्तुतः—"कुच-प्रत्यासत्त्या हृदयमपि ते चण्डि ! कठिनम् ।" इतीयं समस्या विद्यते। सूक्ष्मविचारतः स्फुटमेवाभाति। एतस्य पूरणं बहुभिः कृतम्। कदाचित् मयूरेणापि कृतं भवेत्तथैव। सुभाषितावल्यामेतस्यैवापरा पूर्तिः कस्यापि कवेरुद्धृतेति किंवदन्ती सर्वथाऽनर्थमेव करोति। सा च—

दृशा सार्धं दन्तच्छदपरिचयाद्वक्त्रमरुणम्
कचभ्रूकौटिल्यान्मतिरपि न मुञ्चत्यवनतिम्।
अहो दीर्घः कोपो मम नयनयोगात् किमपरम्
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि ! कठिनम् ॥"

---

मयूरमहाकविः संस्कृतसाहित्ये प्रथमश्रेण्यां स्थानमर्हति। तस्य एकैव रचना 'सूर्य्यशतकम्' समुपलभ्यते। तस्य च कविता नितान्तप्रौढ़ा, परिष्कृता रसभावालङ्कार-ध्वनिसंवलिता संस्कृतकाव्येषूच्चतरं स्थानमधिकरोति। राजशेखर-मम्मटाभिनवगुप्तानन्दवर्धन-भट्टकुनाकप्रभृतयो महाविद्वांसः समालोचनधुरीणाः मयूरमहाकविं सबहुमानमालोचयाञ्चक्रुः। सूर्य्यशतकं स्रग्धरावृत्तबद्धं प्रतिपद्यं विचित्रतरैः शब्दानुप्रासैः परिस्फुरत् मेघदूतमिव प्राचीनैर्महाकविभिः सादरमनुकृतम्। एतदनुकरणेन एव 'सुदर्शनशतकम्' 'चण्डीशतकम्' 'भक्तामरस्तोत्र' ञ्चेत्यादि-तदनुकरणकाव्यानि प्रणीतानि। तदनुकरणेन एव श्रद्धास्पदैः पूज्यपादैः श्रीमद्भिः रामावतारशर्मभिरपि दर्शनीयं विचित्रतरं 'मारुतिशतक' मपि निर्मितम्। एतेषां विवेचनं यथावसरं पुनः करिष्यामः।



ऐतिहासिक कथा

# महाराजस्य अग्निप्रवेशः

गोवा प्रान्तस्य राजधान्यां गोपकपत्तने महान् कोलाहलः। कर्णाटकसम्राट् जयकेशिमहाराजः अग्निप्रवेशं कर्तुं उद्यतः आसीत्। इयं वार्ता क्षणार्धे एव राज्यभरं प्रसृताऽभवत्। राजनिष्ठाः सर्वेऽपि प्रजाः आश्चर्येण उद्वेगेन च स्तम्भिता अभूवन्। समग्र एव साम्राज्ये वज्रपाताहता इव सर्वेऽपि जनाः अग्निप्रवेशाद् विरन्तुं प्रार्थयन्ते स्म महाराजम्।

"मृते भर्तरि पत्न्याः सहगमनं-पावकप्रवेशः शास्त्रसम्मतः संप्रदायप्राप्तश्च। परं पुरुषस्य स्वयं पावकप्रवेशः न क्वापि विहितः न दृष्टपूर्वः नापि श्रुतचरः। तत्रापि प्रजारञ्जनेन 'राजा' इति यथार्थनाम्नः अस्माकं राजर्षेः जयकेशिनः जीवत्सु पत्नीपुत्रादिषु कुतो वा अग्निप्रवेशः? आत्महत्या महापापसाधनं। वयं संप्रार्थ्य तं निवर्तयामः तस्माद् व्यापाराद्' इति संकल्प्य परःसहस्राः एव हि जनाः राजधानीं आगत्य महाराजं विज्ञापितवन्तः। परं राजा तु स्वनिर्णये अचल एवासीत्।

राजमहिषी हेमाञ्जलीदेवी तु बाष्परुद्धकंठा महाराजस्य पादयोः निपत्य लुठन्ती मांगल्यभिक्षां याचते स्म।

महाराजस्य जामाता बादामीराज्यस्य चक्राधिपतिः चालुक्य विक्रमादित्यः तथा तस्य पत्नी—अर्थात् जयकेशिनः प्रेमपुत्री नीलाम्बिका च अञ्जलिं बध्वा "तात मा मां अनाथां कृथाः" इति अनुनाथते स्म।

कर्णाटक राज्ये विद्यमानः अरब राजदूतः 'साधनो' महाराजस्य पुरतः वस्त्रं प्रसार्य "प्रभो! हिन्दू राजाः प्रजापरतन्त्राः। इयतां प्रजाजनानां इच्छाविरुद्धं मरणमपि कथम् वा भवद्भिः अंगीक्रियते?" इति सयुक्तिकं अपृच्छत्।

तदा तु तत्र गोवागतस्य गोपकपत्तनस्य पुरतः प्रवहन्त्याः 'जूरिम' नद्याः तीरे देशविदेशेभ्य आगत्य मिलिताः असंख्या जनाः अरबराजदूतस्य युक्तियुक्तं वचनं श्रुत्वा प्रोत्साहिताः भूत्वा उच्चैः जगर्जुः "यदि महाराजः अग्निं प्रविशेत् तदा वयमपि अनुपदमेव भस्मीभवेम" इति।

प्रजानां तं अनुरागं राजनिष्ठां च निरीक्ष्य जयकेशिनोऽपि क्षणम् उत्फुल्लं नयनं, उल्लसितं वदनं, आनन्दितं हृदयं, अभिमानेन स्फीत इव च आत्मा अन्वलक्ष्यत।

तदा महराज्ञी हेमाञ्जलिः सानुरागं प्रजाः, कृतज्ञतापूर्णदृष्ट्या अरबराजदूतं च अपश्यत्।

ततोऽसौ अरबराज्य प्रतिनिधिः 'साधनो' विनयेन मस्तकं अवनमय्य अञ्जलिं बध्द्वा मृदुमधुरस्वरेण अवोचत् "महाप्रभो! किं श्रुतो भवतां प्रजानां संकल्पः? इयतां जनानां मरणाय कारणीभवति तव अग्निप्रवेशः। किमिदानीं एतान् प्रजाजनान् उज्जीवयसि उत आत्मन एव तं हठं साधयसि?"

'साधनो' विहितं आव्हानं इदं श्रुत्वा राजापि क्षणं अवाक् भूत्वा गम्भीरमुद्रः निर्निमेषं अतिष्ठत्।

तदा आशाभरविकसितानना राज्ञी राजकुमारी सचिवाः प्रजाजनाश्च किं कथयिष्यति महाराजः? इति तरलतारकम् उत्प्रेक्षन्ते स्म निरुध्य श्वासं!

पश्चिमसमुद्रतीरे नौकायानस्य केन्द्रस्थानायमाने गोपकनगरे सागरोत्तरव्यापारार्थं अंग वंग कलिंग सिंहलद्वीप स्वर्णद्वीप पांड्य केरल लाट कर्णाटादि देशेभ्यः समागता नाविकाः वणिजः यांत्रिकाश्च विस्मयकरीमिमां घटनां अवलोकयितुं परिणामं च ज्ञातुं उत्कण्ठातिरेकेण एकपद एव स्थिता आसन्।

तदा मेघगंभीरेण स्वरेण तं प्रचंडं जनस्तोमम् उद्दिश्य महाराजः आबभाषे—

"अयि प्राणप्रियाः मम प्रजाः, बान्धवाः, तथा अव्याजस्नेहशीलाः परदेश सुहृदश्च ! अद्य युष्माकं सर्वेषां ईदृशप्रेमप्रवाहं राजभक्तिं च दृष्ट्वा सत्यं सन्तोषेण नृत्यति मम हृदयम्। मदर्थे प्राणानपि परित्यक्तुं सन्नद्धतः ईदृशान् बहिश्चरप्राणायमानान् प्रजा-बन्धु-सुहृदरान् त्यक्त्वा मृत्युम् आलिङ्गितुं अग्निं प्रवेष्टुं च नोत्सहते मनः, नोच्चलतः पादौ, न पुरः प्रसरति च मम शरीरं। प्रजानां ईदृशं प्रेमरसायनं पातुं शतसंवत्सपर्यन्तं जीवितुमुत्सुकते च मम चेतः..."

'चिरं जीवतु महाराजः "शतं जीव शरदः समाः" 'हन्त महान् सन्तोषः' 'जीवति महाराजः' जीवामो वयमपि 'जीवेम शरदः शतंमोदेम शरदः शतम्....जीयाज्जयकेशी, चिरं जीवेच्च महाराजः, जयतु जयतु महाराजः" इति तद्वचनमध्य एव उच्चैः घोषयितुं उपाक्रमन्त हर्षपरवशाः जनाः।

तदा पुनः महाराजः उभौ अपि बाहू उध्दृत्य शांतरीत्या स्वस्य भाषणं संपूर्णं श्रोतुं जनान् प्रार्थयामास। शान्ते च कोलाहले पुनः प्रवक्तुं प्रारभत—

"सत्यं मम चिरञ्जीवनापेक्षा वर्तत एव। परं तु मनुष्येण तत्रापि राज्ञा 'सत्यान्न प्रमदितव्यम्' "सत्यं तु न त्यजेद् राजा प्राणापायेऽपि धीरधीः" इत्यादि वचनैः राज्ञां सत्यनिष्ठत्वं मुख्यो धर्मः। शिवि-चक्रवर्ति बलिराज रन्तिदेव श्रीराम धर्मराज दधीचि प्रभृतयः भारतीयाः प्राचीनाः राज महाराजाः ऋषिपुंगवाश्च सत्यस्य अर्थे राज्यं कोशं परीवारं प्राणांश्चापि पर्यत्यजन्। तथाविधानां भारतीयराजर्षीणां उन्नतममेव आदर्शं पुरोनिधाय यावज्जन्म इयदवधि राज्यं अनुशास्य 'राजर्षिः' इति पदवीं प्राप्तवतः मम अद्य सत्यं त्यक्तुं आत्मानं कलङ्कयितुं वंशकीर्ति मलिनयितुं च किमुपदिशन्ति भवन्तः ?

जना :—नहि नहि। परं महाराजेन सत्यस्य परित्यागः कुत्र"

राजा—श्रूयतां। स्पष्टं कथयिष्ये तावत् सर्वामपि संवृत्तां घटनां। इयं च बहूनामेव दृष्टौ अतीव क्षुद्रतमा घटनेति प्रतीयेत। केचिच्च

मूर्खतायाः पराकाष्ठा इति माम् उपहसेयुरपि । परं सत्यस्य पुरतः नाहं किमपि गणयामि । अवधीयतां सर्वैः ।

इतः पञ्चषदिनेभ्यः प्राक् अस्माकं गृहे इयं काचन दुर्घटना समघटिष्ट । तस्मिन् दिने अहं भोजनार्थं उदतिष्ठम् । भोजनात्पूर्वं मयाप्रियः कश्चन शुकः प्रतिदिनं सस्नेहं भोज्यते स्म । तस्य शुकस्य अन्नपानादिदानं विना मया न कदाचिदपि भुज्यते स्म । तस्मिन्नपि दिने अहं सुवर्णशरावे फलपानीयादिकं निक्षिप्य तस्य शुकस्य समीपं अगच्छम् । परं तस्मिन् दिने सः पञ्जराद बहिरेव न आगच्छत् । प्रतिदिनं मां दृष्ट्वा अपावृत एव पञ्जरकवाटे सः शुकः सलीलं आगत्य, विलोलं उत्प्लुत्य, मम अंसे कराग्रे अंकपर्यङ्के वा उपविश्य फलाहारं कृत्वा जलं पीत्वा मया सह किञ्चिदिव किमपि आलप्य 'गच्छाछ-गच्छेति द्वित्रवारं कथनानन्तरं पञ्जरं प्रविशति स्म ।

परं तस्मिन् दिने आनीतेऽपि फलाहारे विवृतेऽपि पञ्जरे सः बहिरागन्तुं नैच्छत् । कस्यापि वैरिणः दर्शनादिव भीतभीतः संकुचिताङ्गः तत्रैव पञ्जरकोण एव लीयते स्म पुनः पुनः । तदा अहमपि परितः आलोकयम् । परं तत्र न कोऽपि दृष्टो मया । तदा तस्य भयं विना कारणं मन्वानेन मया "सर्वसमर्थे पुरतः एव वर्तमाने महाराजे मयि का भीतिः तव इति" सङ्केतेन सूचयित्वा आश्वास्य च बलाद् बहिर्निष्कासितः सः वराकः शुकः । सोऽपि मम विस्रम्भवचने विश्वस्य बहिरागत्य मदंसं उत्सङ्गरङ्गम् अलंकृत्य यावत्फलभक्षणम् आरभत तावदेव तत्रैव मदधिष्ठितचतुष्पादपीठिकाया अधस्तात् विलीनः कोऽपि मार्जारः रभसाद् आगत्य मदङ्कात् शुकशिशुम् अपाहरत् । किं कथं जातमिदमिति परामृशत्येव मयि क्रूरमार्जारस्य प्रखरनखमुखादाहतस्य तस्य कीरवरस्य दीनध्वनिः अश्रूयत । सवेगं यावदहमधावम् तदा मार्जारः तं तत्रैव त्यक्त्वा पलायत । परं तदा सः शुकपाकः आसन्नमरण एवाभूत् । समीपमागतं च मां दृष्ट्वैव सः मूकपक्षी दीनदीनं मां विलोकयामास । सा तस्य मुग्धप्राणिनः कातरदृष्टिः

अद्यापि मम हृदये कर्तरीं चालयति। तं च गृहीतुं यावदहं तत्समीपमुपासदं तावदेव सः कीरकुमारः उच्चैः चीत्कृत्य त्रेधा विलुठ्य मम पादयोः निपत्य गतप्राणो बभूव।

एवं सर्वात्मना मय्यैव विश्वस्तं तं शुकसुकुमारं मार्जारमुखेन घातयित्वा कथमहं जीवेयम्? भवद्भिरपि मम सत्यव्रतपालनाय अनुमतिः प्रदेया। मद्‌गता प्रीतिः मम पुत्रे भाविनि महाराजे गुलमदेवे सर्वैरपि स्थिरीकरणीया" इति उक्त्वा तत्रैव जुरिमनदी तटाके जाज्वल्यमानं भयंकरं चिताग्निं सरभसं प्राविशत्। तत्क्षण एव च राजमहिषी हेमाञ्जलिः अपि ससंभ्रमम् उत्थाय "नाथ मां विहाय कथं एक एव त्वं ज्वालाप्रसादं स्वीकरिष्यसि। तिष्ठ इयमहम् आगतैव" इति वदन्ती एव पावकचितामारुह्य पतिमालिङ्ग्यैव स्फुलिङ्गरंगे निरातङ्कमुपाविशत्। वैश्वानर वेदिकायां अविचलमुपविश्य 'अनुजानन्तु नौ अग्निस्नानाय' इति उच्चैः उच्चार्य बद्धाञ्जलिपुटं प्रजा आमन्त्रयन्तौ करालज्वालावलीढौ तौ राजदम्पती दृष्ट्वा जनाः गौरवेण साष्टांगं दूरादेव प्रणिपेतुः। तं च अग्नितांडवं शमयितुमिव तेषां नयनपुटेभ्यः धाराकारम् अश्रुबिन्दवः अधोभुवि निपेतुः। अहो सत्यनिष्ठता कर्णाटकप्राचीनराजर्षीणाम्!



# प्राच्य प्रतीच्य सम्बन्धः

## परस्परं भावयन्तः श्रेयः परमवाप्रवन्

स्मरणातीतप्राचीनकालतो वर्तमानसमयपर्य्यन्तं भारतीयार्य्याणां कोऽपीतिहासो न वर्तते। तथापि प्राक्तनैः सञ्चितेषु ज्ञानराशिषु मुखपरम्परयागतत्वान्नष्टावशिष्टेषु तेषामितिवृत्तं कथञ्चिन्निर्णेतुं शक्यते। शर्मण्यदेशीया (Germans) इंलण्डीयादयश्च ज्ञानान्वेषिणो भाषातत्त्वविज्ञानोद्भावनेन (Comparative Philology) प्राचीन भाषासमालोचनविश्लेषणतत्परा नानादेशीयभाषाभिरार्य्यभाषाया-स्तुलनां विदधतो बहूनि खलु ऐतिहासिकतथ्यान्याविष्कृतवन्तः। ते चेदानीन्तनानां मार्गप्रदर्शकाः। अद्यत्वे तु बहुविधा उपाया उद्भाविताः सन्तः सुगममिमं मार्गं विदधति तेषामेव कानिचित्त-थ्यान्यत्र सम्बन्धनिर्णये वक्ष्यामः।

तत्र प्रथमं तावदार्य्या "एशिया" महादेशस्य मध्यदेशमधिवसन्त एकभाषाभाषिण आसन्नित्येव तेषां मतम्। ततः प्रजननबाहुल्येन स्थानाभावाद्वासयोग्यभूम्यन्वेषणतत्परा इतस्ततो विकीर्णाः प्राक् समीपवर्तिदेशान् पश्चाच्च दूरदेशानपि भ्रमन्तः केचन इतः केचन वा ततः स्थानान्यायत्तीकृत्य तेषु वसतिं स्थापयामासुः। अनया खलु रीत्या पञ्चैव महादेशा आर्यकरायत्तास्तैश्चाध्युषिता वर्त्तन्ते। तत्र ये खलु प्राचीनाधिवासिन आसन् ते शूद्रादयो विजिता वा पलायिता वा आर्य्यैर्गृहीता वा यथाकथञ्चित् पर्वतादीनधिवसन्त इदानीमपि सन्तत्या वर्त्तन्ते। तथा सति एकमूलोद्भूतानामार्य्याणां प्राच्यां प्रतीच्याञ्च विस्तीर्णानां मौलिकोऽस्ति सम्बन्धः। परन्तु दीर्घकाल-विभक्तत्वाद् दूरदेशस्थितत्वाच्च परस्परमजानन्तो बहुशताब्दीकालं व्याप्य निद्रिता इवावतस्थिरे।

खिष्टात् प्राक् पञ्चमशताब्द्यां षष्ठशताब्द्यन्तिमभागे वा

ग्रोसीया भारतीयान् प्रथमं ज्ञातुमारेभिरे। तत्र प्रमाणन्तु अशीत्यधिक चतुःशततमे ( ४८०, खीः पूः ) वर्षे जारक्षमहीपतिना ( xerxes) समाक्रान्ते ग्रीसे भारतीयास्तेषां साहायकं चक्र रित्यस्ति तद्युद्धेतिवृत्तेषु प्रसिद्धिरिति । तथा एशियामाइनराख्यदेशीयसत्रपाधिकारस्था ( Satraps ) ग्रीसीयवैद्या भारतीयान् 'ज्ञानिन" इति समाचख्युरिति च। तत ऊर्ध्वं सप्तविंशत्यधिकत्रिशततमे खोष्टपूर्व्वे वर्षे अलक्षेन्द्र ( Alexander ) महीपतिना समाक्रान्ते भारतवर्षे अंशतो विजिते च भारतीयानां तैर्निकटतरः सम्बन्धो जातः। अलक्षेन्द्रप्रतिनिधिर्मेघास्थी नि ( Megasthenes ) स्तत्रभवतो भारताधिपस्य चन्द्रगुप्तस्य राजधान्यां प्रवसन् भारतीयानां सामाजिकानां राजनैति कानां तथान्येषाञ्च वृत्तान्तजातानां यदितिबृत्तं लिलेख, तदस्माकं प्राचीनैतिहासिकघटनाजातस्य कियतः समयनिर्णये स्वरूपनिर्णये च महत् साहायकं सम्प्राप्तम्। इत्थमलक्षेन्द्रदर्शितमार्गाः पारसिकाश्च राजानस्ततः परं भारताक्रमणे बहुशो यतमानाः कतिपयैरेव वर्षैर्भारतीयानां विशेषेण परिचिताः सन्तो बहून् खल्वार्य्यज्ञानराशीनधिजग्मुः। इतः परावर्त्तमानाश्च स्वदेशे तान् ज्ञानराशीन् बाहुल्येन प्रचारयामासुः। एतेन समग्राणामेव यूरोपीयानां महानुपकारः सञ्जातः। एवञ्च भारतीयज्ञानस्य विदेशप्रचारे पारसिका ग्रीसीयाश्च प्रचारका आसन्। ततः परं यूरोपीयानां भारतीयानाञ्चाभीक्ष्ण्येन समागमात् परस्परज्ञानराशयः परस्परदेशेषु समानीता बभूवुः। एते ज्ञानविनिमयसम्बन्धाः केचित् प्रदर्श्यन्ते :—

१। नाटके—भारतीयनृपतीनां परिचरणार्थं यवनस्त्रियो (Greek girls) भारते प्रेर्य्यन्त इति बहुष्वनुशासनादिषु प्राचुर्य्येण ज्ञायते। तथैव कालिदासादीनां महाकवीनां नाटकेष्वपि समुपलभ्यते। तथा रङ्गशालाद्वारावरणं पटखण्डं ( drop scene ) यवनिकेति समाख्यायते। अत एव वेबार (Weber) प्रमुखा मनीषिणः संस्कृतनाटकं पाश्चात्त्यनाटकानुकृतिरित्याहुः। तदसत्। अभिनेयस्य कोऽप्यंशविशेषो यद्यनुक्रियेत, तेनैव समुदायोऽनुकृत इत्यनुपपन्नम्।

संस्कृतनाटकस्य भारतमेव जन्मस्थानमित्यस्माभिर्वेद एव प्रदर्शयितुं शक्यते, अस्तु कोऽप्यंशविशेषः परदेशानुकृतिः। श्रीमतां म्याक्-डोन्यालमतिमतामप्येतदेव मतम्। भारतीयानि पुनर्नाटकान्यभिज्ञानशाकुन्तलप्रभृतीन्यधुना नाना भाषाभिरनूदितानि अभिनीयमानानि च दृश्यन्ते। तथैवेतरपक्षेऽपि।

२। आख्यायिकादिषु,—भारतीय-बौद्धैः संगृहीतः पञ्चतन्त्रं नामोपाख्यानग्रन्थः केनचित् पारसिकेन वारजइनाम्ना पारसिकभाषयानूदितः। द्वावपरावनुवादग्रन्थौ "कलिलग्दमनग्" इति,—"कलिलादमना" इति च स्तः। तयोराद्यः सीरीयभाषया, द्वितीयश्चारबीयभाषया लिखितो बह्वीभिः पाश्चात्यभाषाभिरनूदितश्च। तथाहि—आरबीयभाषातो ग्रीक्-हिब्रु-लाटिनभाषाभिः; लाटिनभाषातः जार्म्माणभाषया इतालीयभाषया च, एष पुनः सर् तमसनर्त ( Sir Thomas Noath ) नामकेन विदुषा इंलण्डीयभाषयानूदितः। ईदृश्या प्रक्रियया ग्रन्थाभिधेयानां बाहुल्येन क्रमविपर्य्ययस्तथा वस्तुपरिवर्त्तनञ्च साधितम्। बोधिसत्त्वं "योसाफत्" इति नाम्ना विकृत्य "the Story of Barlam and Josaphat" इति ग्रन्थो ग्रीसीयभाषया लिखित इति भाषातत्त्वसमालोचनेन सम्यग् ज्ञायते। कुतः,—एतद्ग्रन्थनिबद्धं वस्तु बुद्धस्य जीवनचरितमित्यव्यामोहमेव विद्वद्भिः प्रमाणितम्। तथा च पञ्चतन्त्रस्थानां बहूनामेवोपाख्यानानाम् "ईशपम् फेबल्" नामकग्रन्थस्थैर्बहुभिरुपाख्यानैरत्यन्तं सादृश्यमस्ति। तुलनामूलकविचारेण पुनः पञ्चतन्त्रस्य प्राचीनतरत्वमुपपद्यते। तस्मात् यूरोपीयमध्ययुगोपाख्यानादि भारतीयसाहित्यपरिपुष्टमिति नास्त्यत्र कोऽपि संशयावकाशः।

३। दर्शने—ग्रीसीयदर्शनानां भारतीयदर्शनैः सादृश्यमस्तीति प्रसिद्धमेव। तत्र उपनिषत्सु वेदान्ते च यानि प्रधानतत्त्वानि वर्तन्ते तानि ग्रीसीयदर्शनेष्वपि केषुचिद्दृश्यन्ते। तथा ग्रीसीयदार्शनिकस्य एम्पिदोक्लमतं (the Doctrine of Empedocles) सांख्यदर्शनमतानुवाद इति विद्वद्भिर्निर्धारितम्। (थेलस्-अनक्षाग्र-

दमक्रीतादयश्च (Thales, Anaxagrous, Democritus) विद्वांसो दर्शनाध्ययनार्थं भारतप्रवासिन आसन्नित्यस्ति तत्रत्या जनश्रुतिः। भारतीयदर्शने विज्ञाने च पृथ्वीगुरोः ( Pythagorus ) सख्यगाथा केनाप्यपलपितुं न शक्यते। दर्शन-गणित-धर्मेषु यानि पृथ्वीगुरोर्मतानि तान्येव खिष्टात् प्राक् षष्ठशताब्द्यामपि भारतीयानि संजज्ञिरे इत्यत्र प्रमाणं श्रुतिरेव। भारतीयाध्यापकाश्च पारस्ये सत्रपाधिकारे निवसन्तः पारसिकान् ग्रीसीयांश्चाध्यापयामासुरिति विदितमस्तीतिहासादिषु। तत् सर्व्वथैव भारतीयदर्शनात् पाश्चात्त्यदर्शनोपकृतिरिति सिद्धम्।

४। विज्ञानेषु—विज्ञानस्याधुना बहुधा विभागा दृश्यन्ते। परन्तु प्राचीनभारते प्रधानतः कतिपये एव विभागा आसन्। इतरेषामवान्तराणां सर्व्वेषामेव सर्व्वस्मिन् प्रसङ्गतोऽन्तर्भावः। अपि च तेभ्य एव विज्ञानबीजेभ्यः शाखापत्रादयः सर्व्वदेशेषु गवेषणानुकूल्येन विस्तृतिं गताः। परन्त्वाधुनिकानां भारतीयानामालस्यादिभिर्वा ब्रह्मचर्य्यादिनियमाभावेन वा ज्ञानलाभासमर्थानां दुर्ग्रहास्ते विज्ञानग्रन्था विदेशीयानां करायत्ताः कृतोन्नतय इदानीं भारतीयैरपि गृह्यन्ते इति अहो पैत्रिकसम्पत्तिः परायत्ता परानुग्रहात् पुनर्लभ्यते इति किमतः परमाश्चर्य्यम् ?

( क ) गणिते—दशमिकापरनाम्नो दशघातगणितस्य भारतमेव जन्मस्थानम्। तदधुना पृथिव्यां सर्व्वत्र गणनसौकर्य्याय व्यवह्रियते। अष्टम्यां नवम्याञ्च खीष्टीयशताब्द्यां भारतीयाः पारसिकानारबीयांश्च गणितमध्यापयामासुः। ते पुनर्यूरोपीयानिति पारम्पर्य्येण दशमिक प्रक्रिया-बीजगणित-ज्यामित्यादयः प्रतीच्यां नीताः।

( ख ) वैद्यके—अतिप्राचीनेऽपि चरकसुश्रुतसंहिते यवनवैद्यकानुयायिन्यौ वा यवनवैद्यकमूलभूते वेति निश्चयेनानुमातुं न शक्यते। परन्तु खीष्टीय-नवम शताब्दीतः पञ्चदशशताब्दीं यावद् ये वैद्यकग्रन्थाः प्रतीच्यां समुत्पन्नास्तेषामध्ययनात् स्फुटमेव प्रतीयते यत् तदानीं ततः परिस्मिन्नागार्जुनसमये वा नासीत् [illegible] वैद्यकप्रक्रिया येन

यवनवैद्यकस्य प्राचीनतरत्वं भारतवैद्यकनियामकत्वञ्चानुमातुं शक्यत इति। तस्मात् चरकसुश्रुतसंहिते यवननिरपेक्षे इति निश्चयेनैव वक्तुं शक्यते। ततोपि प्राचीनतरे वैदिके युगे वैद्यकबीजमथर्व्ववेदे निहितम्; तेन भारतीयवैद्यकात् पाश्चात्त्यानां ग्रहणमस्तु वा मा वा सर्व्वथा वैद्यकं भारतस्यैव स्वमासीत्। अद्यत्वे तु भारतवैद्यकस्य याथार्थ्यं पश्यद्भिः पाश्चात्यै ग्रंहणमपि क्रियत इति प्रत्यक्षमेव दृश्यते।

(ग) रसायने—रसायनस्यापि भारतेऽन्यनिरपेक्षोत्पत्तिरासीत्। वैदिके युगे सोमाभिषवादिप्रक्रियाभिर्मद्यस्यातिबाहुल्येनैवोन्नतिः समजायत। ततःपरं दर्शनेषु परमाणुवादः ( Atomic Theory ), ततश्च रञ्जनविद्यायामातिशय्येन कौशलोद्भावनादयः, लौहविद्या, धातुशोधनमिश्रणादयः, ततः परश्चान्यासामपि रसायनप्रक्रियाणां तथैवोन्नतिः सञ्जाता येनेदं शास्त्रं पाश्चात्त्यरसायनोन्नतेः प्रागेव भारते साङ्गतां गतम्। आरबे मिशरे चास्मिन्नेव काले ( खीः पूः ८०० ) जीवार ( Geber ) प्रमुखैर्विज्ञानविद्भी रसायनस्योन्नतिः साधिता। एतेभ्यश्च यूरोपीया रसायनमधीत्य स्वदेशेषु विस्तारयामासुः। एतेन भारतीय-रसायनेन पाश्चात्त्यस्य कोऽपि सम्बन्धो नास्तीति प्रतीयते; परन्तु तत्र किमपि निश्चिततरं प्रमाणं नास्ति। अतो रसायने प्राचीप्रतीच्योः परस्पर सम्बन्धो नासीदिति केनापि निश्चयेन वक्तुमशक्यम्।

(घ) ज्योतिषे—अस्याप्यन्यनिरपेक्षा भारत एवोत्पत्तिरिति प्राचीनसंहिताग्रन्थादौ सिद्धान्तादौ च समुपलभ्यते। मध्ययुगे तु यवनतः ( Greeks ) काश्चिद्गणित प्रक्रिया गृहीता इति वराहमिहिरादीनां रोमकसिद्धान्तादयस्तथा यामित्रादियवन शब्द व्यहारादयस्ताजिकादि होरा शास्त्रव्यहारश्च प्रमाणम्।

(ङ) क्रीड़ाकौतुकादौ—खीष्टीयैकदशशताब्दीप्रारम्भत एव भारतीयानां चतुरङ्गक्रीड़ा ( Chess) आरबीयमाध्यस्थ्येन यूरोपे प्रवर्त्तिता। इतः प्राक् इतः परश्च कञ्चित्कालं व्याप्य विदेशीयक्रीड़ा भारतीयानामज्ञातासीत्। अधुना तु भारतीयैर्बहुविधाः पाश्चात्त्यक्रीड़ाः पाश्चात्यैश्च बहुविधाः प्राच्य क्रीड़ाः परिगृहीताः। तथैव व्यायामादिकम्। अतः कलायां विज्ञाने च प्राचीप्रतीच्योर्निकटः सम्बन्धो वर्त्तते।

( सावशेषः )

# मेघसन्देशश्लोकार्थविमर्शः

[श्रीक्षितीशचन्द्रचट्टोपाध्यायः एम् ए०डी०लिट् मञ्जूषासंपादकः कलकत्ता]

कस्य वा न विदितो मेघ सन्देशगतः श्लोकः—

"तां चावश्यं दिवसगणनातत्परामेकपत्नीमव्यापन्नामविहतगति र्द्रक्ष्यसि भ्रातृजायाम् ।"



"आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपातिप्रणयि हृदयं विप्रयोगे रुणद्धि ।" इति ।

शाकुन्तलेऽप्यनुरूपा गाथा दृश्यते—

"ऽटसा वि पिएण विणा गमेइ रऽणिं बिसाददीह अरं ।
गरुअं वि विरह दुक्खं आसावन्धो सहावेदि ॥" [ ४।२५ ] इति ।

विक्रमोर्वशीये वर्तते—"किन्तु तादृशमनुरागं दृष्ट्वा शक्यमाशाबन्धेनात्मानं धारयितुम्" [ ३ ] इति।

भवभूतिविरचिते मालतीमाधवेऽप्यनुरूपोक्तिरुपलक्ष्यते—

"आशातन्तु र्नच कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः॥" [ ६।२६ ] इति।

मेघसन्देशगतपद्यस्य द्वितीयमर्धं बहुधा व्याख्यातं टीकाकृद्भिः। केषाञ्चन मतान्यत्रोद्भ्रियन्ते।

दक्षिणावर्तः। आशाबन्धः प्रियतमश्चेज्जीवति कालान्तरे तत्समागमो भविष्यतीत्यभिलाषः। आशाबन्धशब्देन निगलसमाधिर्विवक्षितः निगलकार्यस्य वक्ष्यमाणत्वात्। कुसुमसदृशप्राणं कुसुमसदृशबलम्। [ "आशाबन्धः कुसुमसदृप्राणमप्यङ्गनानाम्" इति दक्षिणावर्तस्य पाठः। ]

वल्लभः। नारीणां प्रियविरहे हृदयमाशाबन्धः प्रायेण रुणद्ध्य बलम्बते। यतः कुसुमसदृशम्। अत एव सद्यः पातप्रणयि तत्क्षणविनाशोन्मुखम्। एवंविधमप्याशया धार्यते—नूनमस्माकं पुनः प्रियेण संयोगो भावीति। आशाबन्ध आशाबन्ध इव। यथाशाबन्धो जालकारकृततन्तुनिकरः। कुसुममपि शुष्कं वातेरितं रुन्धे। प्रणयः प्रीतिरुन्मुखता।

मल्लिनाथः। आशातितृष्णा। आशा दिगतितृष्णयोरिति यादवः। बध्यतेऽनेनेति बन्धो बन्धनम्। वृन्तमिति यावत्। आशैव बन्ध आशाबन्धः कर्ता। प्रणयि प्रेमयुक्तमत एव कुसुमसदृशं सुकुमारमित्यर्थः। अत एव विप्रयोगे विरहे सद्यःपाति सद्योभ्रंशनशीलमङ्गनानां हृदयं जीवितं प्रायशः प्रायेण रुणद्धि प्रतिबध्नाति।

चारित्रवर्धनः। हि यतः प्रायशो बाहुल्येनाशाबन्धो विप्रयोगे वियोगे विश्लेषे सद्यःपाति तत्क्षणादेव पतनशीलमङ्गनानां हृदयं

रुणद्धि। किंविधम्? कुसुमसदृशं पुष्पवत्सुकुमारम्। पुनः किंविधम्? प्रणयि प्रणययुक्तम्। अथ चोक्तिः—यथाशाबन्धो मर्कटवासकः सद्यःपाति कुसुमं रुणद्धि। आशाबन्धः समाश्वासे तथा मर्कटवासक इति मेदिनीकरः।

विद्युल्लता। कालेनायं भविष्यतीत्यभिमतविषये लिप्साया अविच्छेद आशा, सैव बन्धो निगलः, अथवा तस्या बन्धनम्। कुसुमसदृशप्राणम्...पुष्पतुल्यबलम् अतिसुकुमारम्। अपि विरोधे। अङ्गनानां मृदुप्रकृतीनां स्त्रीविशेषाणाम्। सद्यःपातप्रणयि यस्मिन् क्षणे दुःखप्राप्तिस्तत्क्षण एव पाते नाशे प्रणयि बद्धोद्योगम्। हृदयं मनसोऽधिष्ठानभूतं हृत्पुण्डरीकम्। रुणद्धि निवारयति। स्फुटनादिति शेषः। अन्यथा स्फुटत्येव। यथा कादम्बर्याम्—चन्द्रापीडस्य स्वभाव-सरसं हृदयमस्फुटदिति। यदि निधिपतिरवधिं न व्यधास्यत, तदावयोस्तदानीमेव हृदयं स्फुटितम् भविष्यत्। नातिदीर्घस्यावधेः सम्भवात् समागमाशातन्तुसन्दानितहृदयतयाहमेव तस्या अव्यापत्तिं निश्चिनोमीत्यर्थः।

सारोद्धारिणी। हि यस्मात्कारणादाशाबन्धः कर्ता प्रायशो बाहुल्येन विप्रयोगे सत्यङ्गनानां हृदयं रुणद्धि। अवलम्बते धारयति। कथम्भूतं हृदयम्? कुसुमसदृशम्। पुष्पमिव पुनः कथम्भूतम्? सद्यःपातप्रणयि विप्रयोगसमकालमेव पतनतत्परम्। विरहदुःखितं मरणाध्यवसायान्निवारयति। अन्यदपि पतद्रज्ज्वादिबन्धेन बध्यते।

स्थिरदेवः। यथा पातोन्मुखं कुसुममाशासु दिक्षु बन्धो वृन्तमावृणोति तथा प्रियावियोगे मदनदहनदग्धं पुरन्ध्रीणां हृदयं पत्या सह पुनः समागमो भविष्यतीति याशा सा ध्वंसाद्धारयिष्यति मनसः प्रणाशश्च पञ्चत्वमुच्यते।

सर्वासां टीकानां पर्यालोचनेन आशाबन्ध शब्दस्य मर्कटवासक इत्यर्थः सर्वथा-कवेरनभिप्रेत इति विस्पष्टमेव प्रतीयते। किञ्च तथा

विधोऽर्थः [illegible]ष्वभिधानकोषेषु विचित्यापि नोपलभ्यते। भवभूतेर्वचसे [illegible] तादृशस्यार्थस्यानुपादेयत्वं स्फुटीभवति। कविर्हि कवेर्हृदयं वेत्ति। निगलसमाधिरपि नास्मभ्यं स्वदते, तन्तुबन्धनस्यैव प्रतीयमानत्वात्। अतएव सहृदयशिरोमणिभिर्मल्लिनाथ पूर्णसरस्वति-प्रभृतिभिर्नतावर्थौ समादृताविति शिवम्।



Regd. No. B. 7171

## मधुरवाणी नियमावली

ये पंच नवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते।

वर्षे यदाकदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते। यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते।

विना मूल्यं आदर्शसंचिका न प्रहीयते। अवलोकनार्थं संचिकां अपेक्षमाणैः अष्टाणक पोष्टटिकीट प्रेषणं कार्यम्।

व्हि० पी० द्वारा पत्रिका नैव प्रेष्यते। प्रतिवर्ष वर्षारंभे मनिऑर्डर द्वारा एव शुल्कं प्रेषणीयम्।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन्। अशुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः। सरलतमानां लेखानां प्रथमप्राशस्त्यं प्रदीयते।

Book-Post

To,

Shree

If adpressee is not found please return to sender.

पंढरीनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणीकार्यालय, गदग (कर्नाटक)

Printed at the New Gadag Printery Gadag, by P. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

जगद्गुरुश्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर श्रावणाङ्क १९५८ अगस्ट

प्रधान संपादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार

राजा एस. गुरुराजाचार्याः



संपादकाः

गलगलीत्युपाव्हाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु० ५  एकाङ्कस्य ०-८-०

---

## विषयानुक्रमः





# मधुरवाणी

२३ वर्षे । विलम्बि संम्वत्सर श्रावण मास सच्चिका । अङ्कः ५

## गुरुवराणां स्तवस्तवकम्

विश्वानन्दन—नन्द-नन्दन-हरिर्बालो मुकुन्दो मुदा
श्रीवृन्दावननामसाम्यवशतः प्रीतोऽभियातस्स्वयम् ॥
यद्वृन्दावनसन्निधौ नु मुरलीं संवादयन् संस्थितः
तं सङ्गीतवशीकृतेश-वशिनं श्री राघवेन्द्रं स्तुमः ॥

कुन्द-श्री—यशसा च यन्महिमभिर्मन्दात्मसंपावनैः
मन्दाक्षोदितचिन्तया धवलिता मन्दाकिनी पावनी ॥
सन्दानै र्भुवि यस्य सर्वमनुजा मन्दादराः सांप्रतम्
मन्दारोपलकामधेनुषु गुरुं वन्दे परं दैवतम् ॥ २ ॥

"मद्भिन्नो ननु को भुवीश्वर" इति प्रष्टैक एवासुरो—
ह्यासीत् प्राक् स हिरण्यकोऽद्य तु परं लक्षाधिकास्तादृशाः
तेषूत्पादयितुं सुभक्तिममलां चास्तिक्यभावं पुन—
र्जातं श्री गुरू राघवेन्द्रवपुषा प्रल्हादराजं नुमः ॥ ३ ॥

मन्दानां गुडजिह्विकाख्यनयतः सन्दाय तद्वाञ्छितं
गोविन्दाभिमुखीकरोति परमानन्दाप्तियोग्यांस्ततः ॥
तं दीनातुर - रोगि - पापि-पततां वृन्दावनेनार्थवत्—
तद्वृन्दावननामधामनि समाधिस्थं हि वन्दे गुरुम् ॥ ४ ॥

सन्देहान्महतां निवार्य हि मुनेर्नन्देतिपूर्वस्य स—
त्सन्देशेन समुद्दधार ननु यः स्वंदेशसंस्थं जनम्
विन्देद्यत्कृपया च मोक्षमपि ना नन्देन्मुकुन्देक्षितो
वन्दे तद्गुरुराघवेन्द्रचरणद्वन्द्वारविन्दे सदा

## भासावतरणिका

सस्यैः श्यामल कोमलैः पुलकिता स्नाता हरिद्राम्बरा
भूः, सौन्दर्यमयूरनाट्यमधुना चेतो हरेच्छाद्वले
दिव्याखण्डलचापमण्डलरुचां रत्नप्रभामेलनं
सर्वं चाक्षुषमेव सौभगमिदं किं श्रावणाख्या तव

---

## एभ्यो महद्भ्यो नमः

मधुरवाणीसंपादकः संस्कृतप्रसारोद्देशेन कलकत्तानगरीं प्रयात इति अयमङ्को विलम्बेन वाचकानुपसर्पतीति क्षन्तव्योऽयं मन्तुः शान्तप्रकृतिभिः कृतिभिरिति विज्ञप्यते सविनयम्। विरलवाचकता तरलसहायकता च न सरलतामाकलयन्ति पत्रिकाजीवनाय। दूरस्थे च संपादके, मौनिषु दानिषु, निग्राहकेषु ग्राहकेषु पत्रिकाप्रतिबन्धन प्रसङ्ग एव परापतन्नासीत्।

परंतु श्रीराजेन्द्रप्रसादस्य अमृतहस्तेन समुद्घाटितस्य अखिलभारत माध्वमहामण्डलस्य तुरीयाधिवेशनं समुपस्थितेन संपादकेन पण्ढरी नाथाचार्येण सकृदेव संप्रार्थिताः श्री भीमसेतु मुनिवृन्द मठाधीश्वराः संस्कृतसमुद्धारबद्धादराः पण्डितपक्षपातिनः आर्यविद्याप्रसरणैकलाल-समानसाः श्री रघुवल्लभतीर्थस्वामिपादाः संरक्षकत्वं स्वीकृत्य सद्य एव १०१ रूप्यकानि प्रदाय प्रतिवर्षमेवमेव रूप्यकशतं प्रदास्याम इति समाश्वासनपुरस्सरमन्वगृण्हन्।

तथा ज्ञानवृद्धास्तपोवृद्धाः वयोवृद्धा स्वमंत्रशक्तिपरिहृत नैक जनसांसारिकसमस्याः लोकोद्धारार्थं विनियोजितदिव्यतपस्याः सर्वदा समाकलितसंपुटनरसिंहवरिवस्या निखिलजननमस्याः अवगत तत्वार्थरहस्याः बुधजनप्रशस्याः श्री सुब्रह्मण्य मठाधीश स्वामि-

पादाः स्वयमेव संपादकं वात्सल्यातिशयेन आहूय अनुगृह्य एक-पञ्चाशद्रूप्यकाणि प्रदाय प्रतिवत्सरं तावत्सहायदानप्रतिश्रवेण समाश्वासयन्।

तथा पञ्चषमासेभ्यः प्रागेव शताधिकरूप्यकानि वितीर्णवन्तोऽपि दयापरतन्त्राः नववैदिकमन्वन्तरमेव प्रवर्तयितुमुद्यताः मेरुधीराः सागरगभीराः हृदि कुसुमकोमलाः श्री श्री पेजावर मठाधीश्वर स्वामिपादाः मधुरवाण्या आर्थिकविपत्तिं दूरादेव श्रुत्वा तत्क्षण एव १०१ रूप्यकान् प्रेषयामासुः। आर्यविद्यापुनरुज्जीवनस्य एकमात्रा-शातन्तुभूता इमे स्वामिपादाः यदायदा मधुरवाण्या विपत्तिमार्थिक संकटं शृण्वन्ति तदा तत्क्षणमेव शताधिकरूप्यकान् संप्रेष्य अनेकशः अहोऽन्वगृह्णन् अनुगृण्हन्ति अनुगृहीष्यन्ति च। किमेते सामान्य मानवाः ?

विविध-विद्या-वैशारद्य-विस्मापित—वाचस्पतीनां वैराग्यभाग्य विस्मारितवशिष्ठवामदेवानां ज्ञान - भक्ति - विरक्ति-वदान्यतादिगुण मणिखणीनां श्री भंडारगिरिपीठमण्डनमणीनां श्री विद्यमान्यतीर्थ स्वामिनामौदार्यं तु विदूर एव मादृशां कृशजनगलद्गिराम्। गदगपट्टणे हैदराबादनगरे कलकत्तापट्टणे च संपादकदर्शं शतं शतं रुप्यकानि वितरतां संपादकस्य मधुरवाण्याश्च आर्थिकसमस्यां परिहरतां, कलियुगेऽपि बलिरन्तिशिबिशीलितदानसरणिमनुसरतां एतेषां स्वामिपादानां उपकृतिभरं कैर्वा शब्दैरुपवर्णयामः ?'

एतेषां महनीयानां पदपुण्डरीकेषु पातं पातं नामं नामं उपकारं चस्मारं स्मारं सहस्रशो धन्यवादान्वितीर्य प्रणामं करिष्यामः। एतेषां सकालसहायप्राप्तिमन्तरा एतदङ्कप्रकाशनं दुश्शकमेवाभविष्यत्। सहस्राधिकरूप्यकात्मक वार्षिक सहायकारिणां मधुरवाण्याः मुख्यसंर-क्षकसंचालकधुरामाबिभ्रतां जगद्गुरुपीठाधिपतीनां सानन्दमभिनन्दनं अनन्यसामान्यवदान्यतापरिचयं च अत्र अवकाशाभावादङ्कान्तरे करिष्याम इत्यलं पल्लवितेन।

# भावुककविः

अपराजितेति राजदुहितुरभिधानम्। उदयनारायणस्य सभाकविः "शेखरः" न कदापीक्षणगोचरमप्यकार्षीदेनाम्। किन्तु स यदैव किञ्चित् नूतनं काव्यं विरचय्य सभातलमलंकृत्य राजानं श्रावयति, तदा कण्ठस्वरमेतावन्तमुच्चैःकृत्य पाठमारभते, येन तत् कण्ठस्वरं समुच्चप्रासादस्य तस्य द्वितलवातायनसमासीनानामपि श्रोत्रीणां श्रोत्रपथमासादयितुं समर्थं स्यात्।

स कञ्चिदगम्यनक्षत्रालोकमुद्दिश्यैव कण्ठस्वरं प्रैषयत्—तत्र ज्योतिर्मण्डलान्यन्तरा तस्य जीवनगगनस्य सुप्तैको ग्रहः अदृश्य-महिम्ना विराजते।

नवयौवनपथपथिकोऽयं यदा किमपि काव्यं पठति राजसभायां, तदा हृदयावेगेन सुतरामारक्तकपोलयुगलस्य केनाप्यनिर्व्वचनीयेन सौन्दर्य्येण सुन्दरतरमलक्ष्यत। मुग्धमुग्धाश्च जनगणा मूर्त्तिमन्तं रागमिव तस्य वदनकमलमालोक्यालोक्य मनोमुग्धकरं श्रुत्वा श्रुत्वा च तस्य गीतसार्थं अनिर्व्वचनीयां कामपि भावविह्वलतामापद्यन्त।

राजापि अल्पे वयसि स्थितस्यापि कवेरस्य भावप्रवणतामालोक्य स्निग्धेनैव चक्षुषा तमलोकयत्। राजकीयपुष्पोद्यानाभ्यास एवास्य कवेरावासभूमिः। राजभवनान्नदीतो जलानयनविधौ गन्तुमयमेव पन्थाः। अपराजितासखी मालती नदीगमनावसरे प्रत्यहं एव कवेरस्यास्थानमास्थाय सुचिरं आलप्य च तेन पश्चात् जलमानेतुं गच्छति। कवेरपि इदमागमनं अत्र चोपवेशनं इत्यादि किमपि अन्याय्यमिव नाभान्मनसि।

किन्तु दोषैकदर्शिनो जनगणा अनयोरीदृशं व्यवहारं दोषरहितेन चक्षुषा समवलोकयितुं नाभवन् समर्थाः।

केनापि पृष्टस्य कवेरपि अस्य गोपनविधौ नालोक्यते बलवान् कश्चिदाग्रहः कैरपि ।

एवमतिक्रामति कतिकाले पुण्डरीकनामधेयः कश्चिद्दिग्विजयी विचक्षणः सर्व्वान् देशान् विजित्य अस्यैवोदयनारायणस्य सभाकविमुपलक्ष्यीकृत्य राजसभामनुप्राप्तः ।

राजापि तं सादरसम्भाषणेनाप्यायितं कृत्वा तस्य वासोऽपयोगि वासभवनादिकं निदर्शयन् आगामिनं दिवसं विचाराय निर्णयामास ।

( ३ )

अद्य वासीन्नूतना परिषत् सम्मिलिता । पुण्डरीको दिग्गज इव दण्डायमानः सभामध्ये शार्दूलविक्रीड़ितमालिनीप्रभृतिभिश्छन्दोभिः अनुप्रासश्लेषबहुलैश्चालङ्कारैः बिन्दुमतीप्रभृतिभिश्च प्रहेलिकाभिर्नितरां अरञ्जयत् राजानं सभ्यांश्च समवेतान् सभासौष्ठवसंवर्द्धकान् । निस्तब्धा सभा, सभास्तारोऽपि तथैव, परं बभूवुर्विस्मयविस्फारितेक्षणाः क्षणम् ।

अनुमितसूचिपातशब्दायामित्थं निस्तब्धतामुपगतायां सभायां विस्मयविह्वला जनाः मुहुः शेखरमालोकयन्ति, मुहुः साधु साध्विति वदन्ति, मुहुः पुण्डरीकोऽपरि प्रशंसमानां दृष्टिं पातयन्ति, मुहुः शेखरं विगर्हयन्ति, मुहुश्च दत्तकरतालशब्दैः सशब्दाः सभामण्डपं विकम्पयन्ति ।

किन्तु न कथमपि शेखरः तस्मादासनात् पदमप्युपाचलत् । परञ्च स्थाणुरिव मूक इव विस्मित इव स्तम्भित इव पतनभयेनैव तदासनं दृढ़तरमवलम्ब्य वज्राहत इव तस्थौ ।

अथ पुण्डरीकः पुनरुत्थाय स्वकीयजनवदनमालोकयन् विहस्य नानाविधकाव्यकौशलं प्रदर्श्य पुनरपि विस्मितानकरोत् सभास्थान् । ततश्च विरतिमाश्रयामास परिषत् ।

( ४ )

अथाद्य द्वितीय सभा । प्रक्रान्ता नृपतेरस्य पूर्व्वपुरुषाणां वीरकथासंवलिता गीतिः शेखरेण । प्रथमं नीचैरारभ्य क्रमश एव कण्ठस्वर-

मुच्चैरुच्चतरं कृत्वा केन प्रकारेण ते पूर्व्वपुरुषा राज्यमिदं नानादेशीय-विपक्षहस्तात् संरक्षन्तः विश्वासभूमौ अस्य भित्तिदृढतामकार्षुः, केन प्रकारेण तैः आत्मनो हृदयशोणितेन सिंहासनस्यास्य प्रक्षालिता सर्व्वा विपत्, नानाविधभावाभियोगमन्तरा च ते केन प्रकारेण सिंहासनमिदं अक्षुण्णमरक्षन्। शेखरस्तदेव गायति, भक्तिमता कविना तदेवैतादृशं सुन्दरात् सुन्दरतरं गीतं, येन सर्व्व एव राजभक्ताः सभ्या आत्मानं विस्मृत्य सभां विस्मृत्य राजानमपि विस्मृत्य तन्मया इव साश्रुनेत्राः बाष्पगद्गदकण्ठाः क्षणममुञ्चन्नेत्रसलिलानि।

(५)

अथापरदिने समागत्य शेखरेण पुनरपि समारब्धं गानं सभायाम् "—यमुनोपकण्ठे ध्वनिता वंशिः प्रथमा, तदानीमपि न जानन्तिस्म गोपरमण्यः यत् कुतोऽयमायाति शब्दः।

क्रमेणायं ध्वनिराप्लाव्य सर्व्वस्थानानि विस्माय्य सर्व्वान् भावान् मोहयन् गोपीनां मानसानि जले स्थलेऽन्तरिक्षे सर्व्वत्रोदचरत्।

मधुरं यमेव शब्दमाकर्ण्य विस्मृतसर्व्वकृत्या गोपयुवत्य उन्मत्ता इव तं सरसं शब्दमन्वगच्छन्।"

अहो मधुरता गीतशब्दस्य! यया मधुरतया दृष्टपुण्डरीकसम्पदः सभासदो वीतश्रद्धाः अपि शेखरे सुतरां नालमभवन् बाष्पजलं निरोद्धुमतिमहता यत्नेनापि।

शेषमुपगते च गीते शेखरः समुपाविशत्, तदानीमपि गीते मूर्च्छना स्थित्वा स्थित्वा सभ्यानां कर्णविवरे तस्य एकस्यैव ध्वनेरनुवादविधावासीन्नियुक्ता, भ्रमतीव च पवनेन सह तदानीमपि सभामण्डपाभ्यन्तरे।

ईदृशे समये पुनरुत्थाय पुण्डरीकः "कोऽसौ कृष्णः, का वा राधे"-त्यपृच्छत्। येन सर्व्वैरेव सभासद्भिः गोमयलेप इव सुधामयमधारि तद्वचनम्।

अविलम्बेन च तूष्णीभावमवलम्बिरे राजप्रमुखाः सभासदः।

अप्राप्ततदुत्तरश्च पुण्डरीकः प्रकाश्य पाण्डित्यमसाधारणमवधारयामास स्वयमेव तस्य यथायथमुत्तरम्।

( ६ )

इत्थं दिनत्रयं यावदेव पुण्डरीकस्यासाधारणं पाण्डित्यं प्रत्यक्षीकुर्व्वन् ऊर्व्वीपतिः स्वकीयक्षुद्रातिक्षुद्रं कवयितारं न गण्यमिव सम्भावयामास।

मत्स्यबहुले सरसि जलोर्ध्वस्थितकमलकुलमिव मत्स्यविलोड़नं मर्मणि सभ्यमनोभावमनुभवन्नपि शेखरो न किमपि प्रत्यपद्यत। स आत्मन्येव नितरां वीतश्रद्धः समजनि। किमेषैव तस्य समग्रजीवनस्य विद्याशिक्षा। किमनयैव विद्यया स एतावन्तं कालं वसुपाधिपस्यास्य राजकविकार्य्यं निरवाह्यत्।

पुण्डरीकश्चापि कविः, सोऽपि कविः, रात्रिदिनयोरिवानयोः कियान् भेदः।

अहो पाण्डित्यमसाधारणं पुण्डरीकस्य! अतीव सरलसंस्कृतेन काव्यनिर्मातायं शेखरः। सर्व्व एव जनसार्थाः समर्थाः स्युरस्य काव्यस्य भावग्रहणे, कविवरः तेनैवापराधेनाद्य राजसभायामेतावन्तं अपमानं नीरवमेव विसेहे।

पुण्डरीकस्य वचनानि यावत् कठिनात् कठिनतरं भावमवलम्बन्ते, यावच्च स अभिधानं निःशेषीकृत्य पूरयति स्वकीयप्रबन्धम् मूर्खा अपि पण्डितम्मन्या जनगणाः तस्य कवित्वं प्राशंसन्त तावदेव।

( ७ )

अद्य शेषवासरो जयपराजयनिर्देशस्य। राजा नयनभङ्ग्या पूर्व्वमेव स्वं कविमरोधयत् यथा—"अद्य पूर्व्ववत् भवति तूष्णीम्भावमवलम्बमाने वयं नितरामेव दुःखमनुभविष्यामः।

"अद्य वाच्यमेव त्वया किमपि।" तदुत्तरे च शेखरः राजनि केवलं सकरुणां सोद्वेगां सजलां दृष्टिमपातयत्। ततश्चोत्थाय भगवतीं वाणीं प्रणम्य तदुद्देश्ये च 'मातः कमलदलवासिनि! यदि

भगवती स्वावासं शून्यीकृत्य सभायामुपतिष्ठेत्, तदा तव पदसेविनो भक्तवृन्दाः कुत्र स्थास्यन्ति" इत्युक्त्वा समुपाविशत्।

उत्थाय पुण्डरीको नयनहुताशनेन्धनीकृतशेखरवचनः "केयं सरस्वती" त्युक्त्वा एवञ्च शेखरशब्दस्य शेषाक्षरद्वयमवलम्ब्य अनर्गलं श्लोकचयमारचयामास। यथा—"सत्यामपि सङ्गीतादिबहुविद्याचर्य्यायामुक्तो जन्तुः कीदृशस्तत्र फलवान् तत् को न जानाति, को वा सम्बन्धस्तेन सह सरस्वत्याः।

सर्व्वा एव जानन्ति यत् पुण्डरीक एव वासस्थानं सरस्वत्याः। किन्तु महाराज! त्वदीयाधिकारे क इवापराधः समाचरितः सरस्वत्या, येनेयं गर्दभवाहिनीकृता महाराजेन?

तत् श्रुत्वा च सर्व्वे एव जनाः परिषदं अट्टहास्यमुखरितामकार्षुः, राजापि किञ्चिदिव विलम्ब्य स्वयमेवोत्थाय स्वकीयकण्ठादुन्मुच्य मुक्ताहारं पुण्डरीककण्ठदेशे परिधापयामास। सर्वे च सभ्या राजानं धन्यवादं ज्ञापयामासुः। द्वितलेऽपि अस्फुटभूषणशिञ्जितमिवोदचरत सहसा।

(८)

श्रुत्वा च तं भूषणशब्दं शेखरः आसनं परित्यज्य स्वावासाभिमुखमभिप्रतस्थे। गच्छतश्च तस्य शून्येव प्रतिभासते मेदिनी। भार इव सुतरां क्लेशं जनयति शरीरं, शून्यमिवाभवज्जीवनम्।

पतितकल्पमपि बलात् स्थिरीकृत्य शरीरं कथं कथमपि गृहमुपययौ सः। आगत्य स्वालयं अवतार्य्य गृहमञ्चात् पुस्तकानि ज्वलदग्निकुण्डमेकं सम्मुखीकृत्य एकैकं पुस्तकं पश्यति, पश्यंश्च अग्नौ क्षिपति। आसीच्च तस्य मनसि—किमयमेव ते समग्रजीवनस्य काव्यसंग्रहः? अस्य सकाशे सर्व्वमेव पुस्तकमकिञ्चित्करं प्रतिभाति, एकदा इदमेव जगतां संसाराणाञ्च सारममन्यत। अद्यातीता एव ते दिवसाः। अस्तमुपगतः चिराय शेखरभाग्यगगनात् सुखसूर्य्यः। पुण्डरीकसम्पदमवलोक्येव प्रमुदितमासीत् शेखरमानसकैरवम्।

एतेषां एकमपि पुस्तकं किमपि कर्म कर्त्तुं प्रभवतीति नाभूत्तस्य मनसि।

पुस्तकमिदं शेखरो बहुदिवसात् प्रभृति नालोकयत् विस्मृतवांश्च स्वयमेव तस्य श्लोकचयम्। हा कतिक्लेशान् स्वीकृत्य शेखरः पुस्तकमिदं प्राणैषीत्। किन्तु नास्त्यद्यास्य वराटकमात्रमपि मूल्यम् तत्सकाशे प्रतिभाति।

अपाङ्गदेशादस्य वहति स्म अश्रुप्रपातमातप्तम्। यावन्ति नेत्रजलानि स अपसारयति हस्ताभ्यां, अनिरुद्धवेगेन तावन्त्येव जलानि तस्य वक्षःस्थलं प्लावयन्ति जलप्रस्रवणमेकमसृजन्।

इत्थं स हृत्पिण्डमिवाहृत्य पुस्तकचयं भस्मावशेषमकरोत् ज्वलदग्नौ।- अवलोक्य च भस्ममात्रशेषं ज्वलदग्निकुण्डं मर्म्मभेदिनं दीर्घश्वासमेकमसृजत्।

तत आहृत्य पुष्पोद्यानात् कुसुमानि विरचय्य शय्यां गृहान्तरालात् काचकुपिकाभाण्डात् तीव्रं विषमेकं निपीय शय्यामधिचकार।

अब्रवीच्चास्फुटस्वरं—"देवि नालमस्मि इह जन्मनि तव कृपा मासादयितुम् समर्थः। नापश्यंश्च त्वां कदापि, केवलं चिन्तितमेव हृदये जन्मनः प्रभृति।

क्रमेणास्य वदनकमलं शुष्कमभवत्, अन्धकार इव न प्रसरति दृष्टिर्बहुदूरम्। कालिमानमाततान मृत्युः सर्व्वशरीरे। ईदृशे काले मुक्तद्वारेण पवनः असंयतस्य केशपाशस्य तीव्रैकं गन्धमनयत् गृहाभ्यन्तरे।

सहैव च तेन पूर्व्वानुभूतं भूषण-शब्दमेकमशृणोत् शेखरः। ततः शयानः एव शय्यायामकथयत्—"देवि! मृत्युसमये दयापरवशया त्वया स्मृतोऽस्मि किं मन्दभाग्यः"क इवाकथयत् "बाढं एषास्मि, कुबे समवलोकय।"

वक्रीकृत्य शिरोधरां परमसुन्दरीं अमानुषलोकोचितां कामपि रमणीमलोकयत् शेखरः।

अथ साकथयत्—"कवे! अहमस्मि राजदुहितापराजिता नाम। सभायां त्वामेव समाश्रयत् विजयलक्ष्मीः। किन्तु अविचारमेवाचरत् महाराजः सभायामित्येवाहमागता तव कण्ठे विजयमाल्यं समर्पयितुम्।" इत्युक्त्वा सा स्वकण्ठादुन्मोच्य पुष्पमालिकां शेखरकण्ठे समर्पितवती।

शय्यायामेव पतित आसीन्मरणाहतः सः कविः।



# श्री राघवेन्द्र तीर्थ स्वामिनां सन्यासाश्रम स्वीकरणम्

आसीत् किल पुरा तञ्जावूर प्रान्ते अनन्त-सामन्त-महीकान्त-मुकुट-मणि-मरीचिका-चर्चित-चारु-चरणः विविध-विद्या-वरवर्णिनी-स्वयंगृह-परिष्वङ्ग - मङ्गलमूर्तिः हार-नीहार-घनसारविशदयशःपूर-पाण्डुरिताखण्ड-ब्रह्माण्डमण्डलः मेदिनीतलाखण्डलः श्रीमान् रघुनाथरायो नाम प्रचण्डपराक्रमी राजा। यस्य हि पुण्डरीकवन विहारव्यसनमपहाय प्रशंसनीयमंसदेशमेवावतंसयति तूत्प्रेमानुराग-कामा रामेव रमापि, यद्वदन सदनसुखासिका मुपसद्य तथा सन्तृप्तेव भगवती विधिसती प्रयाण व्यस्मरदेव ब्रह्मलोक सरस्वती प्रसङ्गम्। यस्य किल सरसिजासन-सीमन्तिनी-हंसी-संसेव्यमान-वदन-पुण्डरीक निरर्गल-निर्गलत्फणिति-परम्परा-मधु-धारा- पारण - परायण - रसिक कदम्ब-रोलम्ब-निकुरम्बस्य परिपोषितनैक-कवि-कुटुम्बस्य निखिल कलाकलापैकावलम्बस्य वसुमतीपतेः शाताधिका रससुन्दरा भाव बन्धुराः प्रबन्धाः अद्यापि विद्योतयन्ति हृद्यानवद्य-गद्य-पद्य-प्रणयन-विद्यावैशारद्यमदसीयम्। यस्य हि कम्बरामायण-पारिजातापहरण संगीतसुधादिग्रन्थाः विस्मारयन्ति वाचस्पतिं विस्मापयन्ति विद्वत्ततिं विस्तारयन्ति च विश्वंभराभरमस्य सुविशदं यशोराशिम्।

उद्दण्ड-भुजदण्ड-चण्ड-विक्रम-खण्डित - पोर्तगीज - रिपुमण्डलोऽयं भूमण्डलाखण्डलः कदाचित् श्रीमदानन्दतीर्थमहासंस्थानाधिपतीन् परमहंसवंशावतंसायमानान् कृतियुगीकृतकलिकालान् तुङ्ग-प्रज्ञा पहसितांगिरसो यतिपुङ्गवान् श्री सुधीन्द्रतीर्थाभिधान् सबहुमानं स्वास्थानमानाय्य ससंभ्रमं कनकाभिषेकमकार्षीत्। तेन च बहूनामेव विपक्षीयपण्डितानां मात्सर्या[illegible] आचार्य एव स[illegible]ष्ठितोऽभवत्।

तदा तत्प्रान्तीयाः क्रकचकर्कश-तर्क-प्रक्रिया-वक्रिमक्रम-विक्रम-विजित शुक्र-शक्राचार्याः केचन नैय्यायिकाः, शब्दाब्धिलब्ध-वैदग्धी-समारब्ध-वाक्यार्थ-विचार-विस्फुटीभवद्वावदूकता-वैचक्षणी - स्तम्भीकृतवादिनः कतिपये व्याकरणवेदिनः, मीमांसामांसल-मति-प्रशंसनीयाः भूयांसः केऽपि विद्वांसः करतलामलकीकृतवेदोपनिषत्सूत्रगीता-शास्त्र-वैदुषी-विक्रांतानन्तविद्वद्दिग्दन्तिनो नानावेदान्तिनश्च समागत्य सुधीन्द्रतीर्थस्वामिपादानां पाण्डित्यसौवर्णसौभगं स्वीय-सुमेधः-शाण-संकर्षणेन-परीक्षितुमुपागमन्। तदा च तत् पण्डित-वेतण्ड-मण्डलं पुरस्तात् परापतत केसरिकिशोरक इव सवैलक्ष्यमभिलक्ष्य प्रतिभा-प्रकर्षपारवश्येनान्तरुद्रिच्यमान-विवदिषा-विजिगीषाभारमसहमानः विद्यया असमानः श्री सुधीन्द्रान्तेवासिधुरीणः वेङ्कण्णाचार्यनामा गुरुचरणमुपस्पृश्य प्रश्रयावनतमस्तकं प्रणम्य गुरुवरं व्यजिज्ञिपत्। "स्वामिन् श्रीमतां परमानुग्रहेणैव संपादित-सरस्वती-प्रसादस्य अस्य शिष्यपरमाणोः अद्य उपस्थितैः पण्डितप्रकाण्डैः सह वाक्यार्थं कर्तु ं अनुमतिः प्रदेया" इति। शिष्यस्य वादकुतूहलं सिद्धान्त-प्रस्थापन-बद्धदीक्षां च दृष्ट्वा हृष्ट हृदयाः यतिमहोदया अधरतलोन्मीलन्मदहास-मल्लिका-मरीचिकानुमितानुमतिं स्फुरन्मतिं तं वेंकण्णार्यं वादिविजयाय सन्दिदिशुः। तदा गुर्वाज्ञाप्रोत्साहितः वेंकणभट्टः तस्यां राजसभायां प्रथमतःस्वसिद्धान्तमेवमाह्वानगर्भमाघोषयद यत् "युक्तियुक्तो मुक्तिदायी निर्दुष्टो हरि तोषदः। श्रुति-स्मृतिपुराणोक्तो मध्वसिद्धान्त एवहि। अन्ये त्ववैदिकाः सर्वे दूष्या दुस्समया इति। संस्थापयितुमुद्यु क्ताः सिद्धा बद्धादरा वयम्" इति।

स्वशिष्यद्वारा निनादितां धनंजय-दुन्दुभि-ध्वानमिव कर्णारुन्तुदां नामेतां यतिमार्तण्डै प्रचण्डां आह्वानघोषणां श्रुत्वा दर्वीकरसार्वभौमा इव फटाटोपपुरस्सरं फूत्कुर्वन्तः सुविमल समीरागममुत्कवलयितुमुत्सुकिताः, अपरागस्त्या इव एकापोशनीकृत-सकल-सारस्वतवैभवाः, पशुपतिप्रतिमा इव सर्वज्ञ-चूडामणयः वामाक्षीवक्र कटाक्षा इव श्रुतिपारदृश्वानः धूमकेतव इव दुस्समयविवरदर्शनस्पृहः द्रोणशिष्याः इव

सर्वविधशास्त्रप्रसङ्गपटीयांसः चतुर्मुख-भ्रूभङ्ग-विक्षेपा इव सलीलं च भगवतीं सरस्वतीं लासयन्तः भूयांस एव विजिगीषु विद्वांसः अंग-वंग-कलिंग-काश्मीर-केरल-कर्णाट-लाट-आंध्र-गुर्जरादिदेशेभ्यः समागताः संघीभूय श्री वेंकणभट्टं विजेतुमहमहमिकया पुरः प्रासर्पन्।

तदा कुशाग्र–कुशल-शेमुषी - विशेष-परिमुषित-विद्वद्धौरेय-धैर्यः वावदूकधुर्यः वेंकणसूरिवर्यः एकाकी अपि बालवीरेश्वरोऽभिमन्युरिव सर्वानपि दुर्वारगर्वान्धानुर्वीपतीन् वादपथ-पथिकान् प्रतिपक्षि-प्रेक्षावतः वदनकार्मुकनिर्मुक्तैः युक्ति युक्तैः उक्तिविशिखैः एकैकशः खण्डयामास। स्वपक्षसमर्थनाय प्रतिवादि प्रदर्शितानि सर्वाण्यपि प्रमाण-वाक्यानि उपक्रमोपसंहारादिषड्विध - तात्पर्यलिंग - परामर्शपूर्वकं द्वैतवादसाधकतयैव सयुक्तिकं प्रतिपाद्य, स्वोक्तार्थे च निरवकाश-प्रमाणसहस्राणि कण्ठतः समुदाहरति अनन्य-सामान्य-प्रतिभाजुषि दुःसमयसुधीस्तोमधैर्यमुषि वेदवादपुषि संप्रतिपन्न-विदुषि वेंकणभट्टे खिन्नेन मनसा स्वेदक्लिन्नेन वपुषा विषण्णेन वदनेन अवसन्नेन च कण्ठेण निरुत्तरीकृताः सर्वेऽपि वादिविद्वांसः। ऋग्वेद-यजुर्वेद-सामवेदादिश्रौतत्रयी ब्रह्मसूत्र - गीतोपनिषदादि - प्रस्थानत्रयी प्रत्यक्षानुमानागमादिप्रमाणत्रयी चेतीयं सर्वैरपि सत्सिद्धान्त-साधकतया प्रमाणमूर्धन्यायमानेति निर्विवादमंगीकृता साधकप्रमाणत्रयीत्रयी श्री मन्मध्वोदितमेव मतं मण्डयति सिद्धान्तयति च। तत्र श्रौतत्रय्यां प्रस्थानत्रय्यां प्रमाणत्रय्यां वा एकमपि वा प्रमाणं युक्तिःउक्तिर्वा माध्वेतर-मतस्य साधकं चेत् सूचयन्तु, विवेचयन्तु च पूर्वमीमांसाशास्त्रोदित प्रणाल्या प्रमाणवचनानि "इत्याहूय मूकीभूतेषु वादिषु"इदं प्रमाणनवकं श्रीमदानन्दतीर्थमतीयनवतत्वानां निस्सन्दिग्ध - संसाधकं प्रधान-प्रस्थापकं च भवतीति सोदाहरणं सप्रमाणव्याहरणं समाकर्षित सभिकान्तःकरणं च साधु प्रत्यपीपदत्। एवं स्निग्ध गम्भीरध्वनिना श्रीमदाचार्यमतस्य वैशिष्ट्यं वैदिकत्वं अत्युपादेयत्वं मोक्षैकसाधनत्वं च साधु समर्थयमाने बुध्द्याऽसमाने विगलित-वाचस्पतिमाने वेंकणाभिधाने सुधीमणौ।

केषाञ्चित् वचनैः सह धैर्यमपि स्खलितमभूत्। कतिपयानां वदनेन सह अहं-कारोपि, अशुष्यत्। अन्येषां स्वेदाम्बुना सह उत्साहोऽप्यगलत्, अपरेषां कण्ठेन सह विजिगीषापि अवासदत्। इतरेषां बाष्पैःसह लज्जापि उदपद्यत। परेषां स्वदेहेन सह स्वमतश्रध्दैव अकम्पत च।

तदा विनयावनतकन्धरः आनन्दतीर्थमतप्रसारणधुरन्धरः स्वजनुषा पावितवसुन्धरः विद्वद्वृन्द पुरन्दरः वेंकणभट्टः पराजितानपि पण्डितान् प्रीतिस्निग्धया सुधासंमुग्धया दृष्ट्या सौहार्दभावनया निरीक्ष्य अयि "पण्डिताः सत्यमेव यूयमुद्दामपण्डिताः। भवतां अन्यादृशं पाण्डित्यं प्रतिभाप्रकर्षं चाहं सम्यगभिजानाम्येव। युष्माकं मतमेव दुर्बलं न मतिः। अतएव अयं इदंप्रथमः पराभवपरिचयः श्रीमतां। मूलत एव दुर्बलं मतं पण्डितपरिषदि साक्षात्सुरगुरुरपि साधयितुं न शक्नोति। किं पुनर्यूयम्। भवतां च वादवैदुष्यं दृष्ट्वा तुष्यन्ति मम गुरवः हृष्यति चायं तादृशज्ञानसिन्धोः समासादितकतिपयज्ञानबिन्दुः मादृगन्तेवासी। यदि इतः परं अस्मद्गुरुभिः सह वाक्यार्थं कर्तुमुत्साहःस्तदा सिद्धा एव नोगुरवः उपसीन्दन्तु" श्रीमन्त इति। तदा ते वादिनः सर्वेऽपि समुत्थाय शिष्यसहितं गुरुवरं प्रणिपत्य "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्युतक्त्वा साष्टाङ्गं प्रणम्य "अस्मभ्यं वैष्णवदीक्षा प्रदेया" इति श्री सुधीन्द्रगुरुं प्रार्थयन्त।

तदेतत्सर्वमपि दृश्यं स्वचक्षुषा एव पश्यन् रघुनाथभूपालः मनसा आश्चर्यं, वपुषा रोमाञ्चं, शिरसा श्लाघाकम्पं, चक्षुषा बाष्पं, वक्षसा विश्वासं हस्ताभ्यामञ्जलिं, वाचा प्रशंसां, हृदयेन भक्तिं च यौगपद्येन बिभ्राणः श्री सुधीन्द्रगुरुं वेंकणार्यं च सानन्दं ववन्दे। ततः पश्यत्स्वेव प्रत्यर्थिविद्वत्सु नरनारायणयोरिव असाधारणतया शक्तियुक्तयोः शुकव्यासयोरिव ज्ञानप्रसारबद्धदीक्षयोः गुरुशिष्ययोः उत्कृष्यमाणभक्तिचर्यः साश्चर्यानन्दानुभवः राजवर्यः पर्यायेण सपर्यां चकार। तयोश्च निस्पृहयोरपि महानुभावयोः प्रभापुञ्जपिञ्जरित

दिगन्तराणि बालारुणकान्तिदन्तुराणि अनर्घ्याणि प्रत्नानि नूत्नानि च रत्नानि, पयोनिधिपयःफेनपटलपरिपाण्डुराणि सूक्ष्मवस्त्राणि सौवर्णतन्तुस्यूतप्रोतप्रान्तमनोहराणि ऊर्णवस्त्राणि, नदीमातृकायमाण-नाना-केदार-दीर्घिकोदार-चारु - चत्वराट्टालिका - गोपुरोपवनाभिरामान् अनेकानेव ग्रामान्, भूसुरकुल-पारम्पर्यागत-दारिद्र्यविद्रावणोन्निद्राः सहस्रशः स्वर्णमुद्राश्च सभक्तिभरानतमस्तकं प्रादात्। महाराज-निर्वर्तित-समुचित-सपर्या-प्रमुदित मानसाः श्री सुधीन्द्रतीर्थ महोदयाः श्री रघुनाथ लोकनाथस्य गुणपक्षपातं विद्याभिमानं वदान्यतां च प्रशस्य समन्वगृण्हन् सप्रमोदातिशयमदसीयोदर्कभूतिभव्य प्रकाशिभिराशीराशिभिः।

तदनु च गृहमागत्य परिसमापितमूलरामपूजने निर्वर्तितदशसहस्राधिकब्राह्मणसुवासिनीभोजने भूरिदक्षिणा-संतर्पित-सुधीजने सर्वप्रणयभाजने सुधीन्द्रयोगिनि सन्ध्याराग-समेधित-पर्ण-वर्ण-सुषुमासन्दर्शनीयस्य कस्यचन आश्रमोपान्ताश्वत्थवृक्षस्य मूलवेदिकायां आयत-कृष्णिका-भङ्गिशत-कल्माषित - सारङ्ग - तारक्षव - चर्मवर्मिते मृदुलदलसन्दर्भिते दर्भासने समुपविष्टे, प्रियशिष्यः श्री वेंकण भट्टः सभक्तिभरमुपसद्य साष्टाङ्गं प्रणिपत्य आचष्ट "स्वामिन् भवदनुग्रहभूम्ना भवल्लब्धविद्यामहिम्ना वाक्यार्थपटिम्ना च अद्य सभायां लब्धो मया पामरेणापि वादिविजयः। तदेतत्सर्वमपि श्रेयः सर्वज्ञ पीठमलङ्कुर्वतः अत्रभवतो भवत एव करुणापारम्यम् अन्वायतते। सर्वोऽप्ययं विजयः न मम किन्तु श्रीमतां तथा श्री मदाचार्याणां मुख्य पीठस्य च। अत इदं सर्वं महाराजेन मह्यमद्यतनवादविजयोपलक्ष्ये प्रदत्तं प्रभूतं धनकनकरत्नाभरणपीताम्बरोर्णवस्त्रसुवर्णमुद्रादिकं श्रीमठस्यैव। तदेतत्सर्वं स्वीक्रियतामिति" राजदत्तं विपुलैश्वर्यसर्वस्वमपि गुरुपदयोरुपाजहार। तदा अमन्दानन्दभरनिर्यद्बाष्पधारासंस्नापितवक्षस्थलाः श्री सुधीन्द्रगुरुत्तमाः तमेनं शिष्यतल्लजं समुच्छलद्वात्सल्यभावायताभ्यां बाहुभ्यां संपरिष्वज्य रुद्धकण्ठाः आर्द्रनेत्राः

पुलकितगात्राः क्षणमतिष्ठन् ।

ततः श्रद्धातिशयसङ्कुचत्सर्वाङ्गे शिष्यपुङ्गवे वेङ्कण्णे अतिपवित्र गुरुगात्रपीडनेन अपराद्धमिव आत्मानं मत्वा क्षमापयितुमिव पादतलं मृदु मौनं मृदुगति गुरुवरोऽपि गम्भीरिमावधीरताम्भोधरेण धीरेण स्वरेण अगादीत् 'वेंकण्ण श्रूयताम्' !

वेंकण्णः—यदाज्ञापयति गुरुदेवः

स्वामिनः—अस्माभिः लब्धविद्योदयेन भवता कापि गुरुदक्षिणा प्रदेया

वेङ्कण्णः—मदीयं सर्वमपि भावत्कमेव। भवदपेक्षितां दक्षिणां दातुं एकपद एव अहं सिद्धोऽस्मि। आज्ञाप्यताम् किं मया दातव्यम्?

स्वामिनः—आत्मा एव प्रदेयः

वेंकण्णः—श्री मठस्यार्थे प्राणानपि दातुमुत्सहे। यदि तादृशःप्रसंग परापतेत्तदा धन्यमात्मानं मन्ये

स्वामिनः—प्राणपरित्यागस्य नावश्यकता। किन्तु श्री मूलरामस्य पूजाभारः वोढव्यः

वेंकण्णः—कथं मया गृहस्थाश्रमिणा....

स्वामिनः—तुरीयाश्रमः स्वीकर्तव्यः

वेंकण्णः—आ! किमिदं? मया? यत्याश्रमः? स्वामिन्! 'बाला भार्या बालको नोपनीतः"

स्वामिनः—वेंकण्ण श्री मूलरामः भवतः सेवां स्वीकर्तुं कृतसंकल्पः। श्रीमदाचार्याणां महासंस्थानारोहणं कर्तुं भवादृशा एव ज्ञान-भक्ति-वैराग्य-संपन्नाः पण्डितप्रकाण्डा अर्हतमाः। अद्य च वाद विवाद प्रतियोगितायां विविध-वचन-रचना-चतुरिम-चारिम-चमत्कार जडीकृत-प्राज्ञ-परिषदः तव अदूष्यं-नैपुण्यं प्रकटित-सर्वज्ञ-शास्त्र-चातुरी वाग्वैखरीं, वादिवैतण्डिक-वेतण्ड-षण्ड - मद-चिण्डिमोत्खण्डनचणं पाण्डित्यं योग्यैकयोग्यं वैराग्यं नरमात्रतमस्यां तपस्यां, विश्वत्राणदक्षां

वैष्णवदीक्षां, पराकाष्ठारोपितमठमहत्तां अतुल्यविद्वत्तां च निरीक्ष्य भवानेव सर्वज्ञसंस्थानस्य धुरां वोढुं वरो व्रतिप्रवर इति मया निरधारि। अत इयं स्वीक्रियतां गुर्वाज्ञा, अलंक्रियतां गुरुपीठः, परिपाल्यतां, वेदान्तसाम्राज्यम् निराक्रियतां वैषयिकव्यामोहः, व्याक्रियन्तां सर्वज्ञग्रन्थाः, उत्सार्यतां नास्तिकवादः, प्रसार्यतां मध्वसिद्धान्तः अनुस्मियतां सर्वज्ञाचार्यसन्देशः, अनुक्रियंतां टीकाकृत्पाद व्यासतीर्थ विजयीन्द्रादिकर्मन्दिनां आदर्शचरितानि संरक्ष्यतां च गुरुगौरवम् इति।

तदा साक्षाद्, गुरुमुखादीदृशमात्मस्तुतिमाकर्ण्य लज्जितः, श्री राम पूजासौभाग्यं लभ्येतेति प्रीतस्फीतः, तादृशी योग्यता मम अस्ति वा नवेति सन्देहेन किञ्चिदिव संकुचितांगः, "सर्वज्ञकल्पाः सुधीन्द्रगुरव एव यदा मह्यं स्वयं प्रव्रज्यां प्रदिच्छन्ति तदा कुतो वा मम सा स्वरूपयोग्यताचिन्ता? सर्वथा स्वीकर्तव्यैव संस्थानधूः" इति क्षणं कृतप्रतिज्ञः, परक्षण एव च "यत्याश्रमस्वीकारे मदेकप्राणा प्राणसखी चन्द्रमुखी सरस्वती, अनुपनीतः मुग्धमुखो दुग्धमुखश्च पुत्रः लक्ष्मी नारायणः, मम सर्वोऽपि परिवारः निराधारो भवेत्। सरस्वती च मद्विरहिता क्षणमपि नजीवेत् म्रियेतैव, मृतायां च तस्यां मम ममतामूर्तिः मोहनाङ्गः लक्ष्मीनारायणः लालनपालनपोषणाद्यभावेन म्रियतैव एव मेव मम वंशनाश एव कदाचिन्मम यत्याश्रमस्वीकारेण संभवेदिति" विविध विचारैःक्षणमकम्पत वेंकण्णः, पर्यशुष्यत्तस्य मुखम्, उद्भ्रान्ते च लोचने। शिष्यस्य इमां दशां निरीक्ष्य गुरवः प्रभूतं धनं मन्त्राक्षताश्च प्रदाय "वेंकण्ण! गृहाणेदं धनं, निर्वर्तय पुत्रस्य उपनयनम् किञ्चित्कालं विचारय मत्कथितं सर्वज्ञाचार्यसिंहासनारोहणविषयम्। यदा भगवान् प्रेरयिष्यति तदा आगच्छ" इति आज्ञाप्य अन्वगृण्हन्।

वेंकण्णसूरिः अपि स्वग्राममासाद्य निवर्तितपुत्रोपनयनः समुपजातवैराग्यः कियतश्चिदनेहसः समनन्तरं स्वयं गत्वा श्री सुधीन्द्र तीर्थस्वामिपादान् तुरीयाश्रमदानाय संप्रार्थयामास। तदा श्री सुधीन्द्रतीर्थाः अपि "यदा विरक्तः पुरुषः प्रजायते तदैव संन्यासविधिः

श्रुतौ श्रुतः" इति वचनस्य सत्यतां प्रतीयन्तः सानन्दमेनं वेङ्कण्णसूरिं वेदान्तविद्यासाम्राज्यसिंहासने उपवेश्य पट्टाभिषेकं विधाय श्री राघवेन्द्र इति नाम दत्वा सन्यासाश्रमप्रदानेन अन्वगृण्हन्।

एत एव खलु श्री राघवेन्द्रतीर्थ स्वामिपादाः येषां बृन्दावनमद्य तुङ्गातीरविराजमाने मंत्रालयक्षेत्रे विद्योतमानं भूलोककल्पद्रुमायते। एतेषामेव च श्री राघवेन्द्र तीर्थस्वामिपादानां दिव्यपीठ परम्परायां अद्य श्री सुयमीन्द्र तीर्था नाम स्वयशोधन्याः विश्वमान्याः असामान्याः अतीव वदान्याः स्वामिपादाः विभ्राजन्ते येषां करुणा कटाक्षलहरीलाल्यमानैर्णेयं मधुरवाणी सर्वतः प्रसारमधिगच्छति विद्वन्मान्यतां चोपगच्छति। ★

## हिन्दोलोत्सव सङ्गीतम्

अहो अद्य

पूर्ण—चन्द्र—त्रय—युगपत्—प्रकाशः।
नीलनभः—क्रोडाश्रय—हिन्दोलाङ्क—शोभिद्वय—
त्रितय—मिलित—स्मित—विपुल—बिलासः॥
भावकम्र—कुमुदिनी — दिवाभ्रान्त— कमलिनी—
बन्धुजीव—सूर्यमुखी—हितमितहासः।
हारीतसारसपिक — पारावत—चक्रवाक—
भागवतप्रेमवश—मधुर—संभाषः॥
कालशुभशृंगध्वनि विश्वमातृकागमनी—
शरदुपयानवाणी— मिलनसरसः।
कोटितारकाविलोक—पुलकस्नात भूलोककः—
विकच कुसुमकोटि—मोहनसुहासः॥
महाभाव प्रेमधन — वृन्दावनप्राणधन —
हिन्दोलदुलन सुख चरम विलासः।
दीनयतीन्द्र हृद्देश — तमोराशिचिरनाशः —
प्रियंकर, [illegible] सुविमल भासः॥ ★

# संस्कृतभाषाया महत्वम्

कर्मभूमेः भारतवर्षस्य अस्य का वा राष्ट्रभाषा भवेदिति विषये अद्य विचारः सर्वत्र प्रचलति। तत्र देवभाषा इयं संस्कृतगीःएव राष्ट्र-भाषा भवितुं योग्यतमा इत्यास्माकीनोऽभिप्रायः। तत्र कारणं तु संस्कृतभाषया न केवलं सर्वविधव्यवहारः सम्यक्तया निर्वाह्यते किन्तु पुण्य सम्पादनमपि भवति। इतरया कयापि भाषया व्यवहारे पुण्यं नैव भवेदेव। गीर्वाणगिरा व्यवहारे क्रियमा णेए 'का क्रिया द्व्यर्थकरी बभूवेति' न्यायेन पुण्य साधनं व्यवहारनिर्वहणमुभयमपि सुष्ठु सुसंपन्नं स्यात्। यतो हि 'एकः शब्दः सुष्ठु प्रयुक्तः स्वर्गलोके कामधुग् भवति' इति प्रमाणनिर्देशपुरस्सरं महाभाष्यकृत् पतञ्जलिः संस्कृतशब्दोच्चारणस्य पारत्रिकसुखविशेषावाप्तिसाधनत्वम् आमनुते।

श्रीमदानन्दतीर्थभगवत्पादाचार्या अपि छान्दोग्योपनिषद्-भाष्ये संस्कृतस्य महतीं प्रतिपादयन्तः "विद्वानित्युच्यते बुधैः" इति प्रमाणमुदाहृत्य संस्कृतज्ञ एव 'विद्वान्' इति पदवीम् अर्हति न इतरलौकिकभाषाभिज्ञ इति स्पष्टमेव प्रत्यपीपदन्।

सर्व एव हि भारतीयाः प्रायः स्वर्गापवर्गाकांक्षिणः एव। दिव्य-लोकाधिगमार्थमेव हि तैः नानाविधानि पुण्यकर्माणि अनुष्ठीयन्ते। तेषु च दैविकेषु लोकेषु देवभाषा संस्कृतमेव एकमात्रभाषा भूत्वा अनादि-कालतो राराजते। ये खलु स्वर्गं अपवर्गं वा कदाचिद् जिगमिषन्ति तैः तल्लोकोपयुक्ता भाषा खलु अभ्यसनीयैव। इदानीं इंग्लण्ड अमेरिकादि देशान् यियासुभिः यथा बहुना परिश्रमेण कठिणापि आंग्लभाषा अधी-यते, रष्यादेशं प्रस्थास्नुभिश्च रष्यन्भाषा यथा वा आत्मसात्क्रियते तद्व देव देवलोकप्रेप्सुभिः देवभाषा अवश्यमभ्यसनीयैवेत्यायातम्।

तथा मोक्षाकांक्षिभिरपि भावुकैर्जनैः इयमेव सौपर्वाणी वाणी शरणीकरणीया। तथाहि— नावेदविन्मनुते तं बृहन्तं सर्वानुभूं आत्मानं

सांपराये" इत्यादीनि नैक प्रमाणवचनानि वेदजन्यस्य ब्रह्मज्ञानस्यैव मोक्षकारणतां स्पष्टं प्रतिपादयन्ति। स च समस्तोऽपि साङ्गोपाङ्गो वेदराशिः संस्कृतमय एवेति मोक्षजनक-वेदज्ञान - कारणीभूततया, मोक्षाकांक्षिभिः सर्वैरपि प्रथमतः संस्कृत भाषा अध्ययनीया। ततो वेदार्थज्ञानं संपादनीयम्। अर्थज्ञानाभावे केवल वेदाध्ययनेन न किञ्चिदपि फलं प्रयोजनं वा, तदुक्तम्—

वेदः कृत्स्नोऽधिन्तव्यः सरहस्यो द्विजन्मना
एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः॥
चतुर्वेद्यपि यो विप्रः वासुदेवं न विन्दति
वेदवादभराक्रान्तः स वै ब्राह्मणगर्दभः॥

इत्यादिभिः नैकाभिः मुक्ताफलोपमोक्तिभिः अर्थज्ञानशून्यवेदपाठस्य नैरर्थ्यं प्रतिपाद्य अर्थज्ञानार्थं प्रयतनीयमिति आदिष्टं। तच्च वेदार्थज्ञानं संस्कृतव्युत्पत्तिमन्तरा दुस्संपादमिति प्रथमतो देव वाणी समासेवनीया सर्वैरपि।

न च 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा' इत्यादि वचनैः प्रयागादि मरणादपि मोक्षलब्धिर्भवेदेवेति चेत् मैवं तत्र 'मुक्ति' शब्दस्य पापान्मुक्तिः इत्येव अर्थःनतु मोक्ष इति। यतोहि "ॐविद्यैव तु निर्धारणात्ॐ" "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" इत्यादि नैक सावधारण सौत्र श्रौतवचनैः ब्रह्मज्ञानस्यैव साक्षान्मोक्षसाधनत्वं निस्सन्दिग्धमवसीयते! अतोऽत्र ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा' इति वाक्यस्थ मुक्तिशब्दस्य पापान्मुक्तिरित्येव साधीयानर्थः पर्यवस्यति।

अस्माकं भारतीयानां जन्मनः आरभ्य आमरणं सर्वेऽपि गर्भादान चौलोपनयनविवाहादि-सर्वविधसंस्काराः संस्कृतभाषयैव हि विधीयन्ते। संप्रदाय देशाचारादि बलेन भारतीयाः प्रायेण तान् मुख्य संस्कारान् नाद्यापि परित्यजन्ति। अयमेको अवर्जनीयो विधिरेवेति कमपि याज्ञिकं पुरस्कृत्य तत्तत्संस्काराः ससंभ्रमं समाचर्यन्त एव। परं कर्तुः कारयितुर्वा संस्कृतज्ञानवैधुर्येण तन्मन्त्राणां अर्थगाम्भीर्यं वा

शुभोदर्कता वा सत्वं वा महत्वं नैव ज्ञायते। तन्मन्त्रार्थज्ञानाभावात् तत्र महत्वबुद्धिः आदरो वा नोद्भवति।' केवलं पुरोहितदाक्षिण्येनैव यन्त्रवत् तदनुष्ठितं करोति। तेन तादृशेषु अर्थपूर्णेषु अपि वैदिक मन्त्रेषु वैदिकविधानेषु च अनादरः अनास्था च सर्वत्रापि समुत्पद्यमाना दिने दिने समेधमाना च दृश्यते। बहव एव च अधुनातनाः नवनागरिकतरुणाः ज्ञानशून्येदृशशुष्काचारेभ्यः नितरामुद्विजन्तः तादृशविधिविधानेभ्यः सर्वात्मनैव जुगुप्सन्ते, तत्परित्याग एव च मतिमाबध्नन्ति। एवं क्रमेण सर्वसंस्कारलोपप्रसङ्गोऽपि परापतेत्। अतः सर्वैरपि संस्कृतज्ञानं संपादनीयम् संस्कृतज्ञानेन तत्तत्संस्कारोक्तमन्त्रार्थपरिज्ञानं तेन तन्महत्वज्ञानं तेन च तत्र आदराभिवृद्धिः तेन च तत्रदीक्षा तस्माच्च अर्थानुसंधान पूर्वकमनुष्ठितात् महत्फलावाप्तिः तेन च तदवलोक्य इतरेषामपि तादृशप्रवृत्तिः ततः संस्कृत प्रसृतिः सम्भवेदिति सुबहुप्रयोजनपरम्परैव परिलसति सार्वत्रिक संस्कृताध्ययने।

सर्वासां भाषाणां मूलभूता आदिकारणं च संस्कृतभाषैवेति तु अविप्रतिपन्नमेवैतत्! छान्दोग्ये 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादि वाक्यैः संस्कृतशब्दानामेव अनादिनित्यता इतरभाषागतशब्दानां च तद्विकाररुपत्वं अतएव च अनित्यत्वं स्पष्टमभिधीयते। तत्र सत्यशब्दस्य सदातनमित्यर्थः। सदाशब्दात् त्यप्रत्यये च स इत्यादेशे एवं किल निष्पद्यते समुचितोऽर्थः। 'न वधेनास्य हन्यते न जरया एतज्जीर्यते एतत्सत्यं ब्रह्मपुरम्" इत्याद्युपनिषदि शरीरान्तर्गतस्य परब्रह्मणः शरीरजरादिनिमित्तक जरामरणाद्यभावः साधितः। तत्र च सत्यत्वं हेतुत्वेन उक्तं। तच्च सदातनत्वरूपमेव भवितुमर्हति। विद्यमानत्वमात्रार्थकत्वे व्यभिचारितया अभिप्रेतार्थसाधकत्वं न स्यात्। अतः सत्यत्वं नाम सदातनत्वमित्येव अर्थः अत्र श्रुत्यभिप्रेतः। मृत्तिकेति इत्यत्र इतिशब्द प्रयोगेण मृत्तिकाशब्दः एव बुबोधयिषितः। अर्थप्रकरणे पठितः इतिशब्दः अर्थविपरीतं शाब्दं शब्दप्रकरणे पठितः इतिशब्दः शब्दविपरीतं च

अर्थं बोधयतीति 'नवेति विभाषा' इति सूत्रमहाभाष्ये समर्थितमेव। प्रकृते च अस्य अर्थप्रकरणत्वात् अर्थविपरीतः मृत्तिकाशब्द एव बोध्यो भवतिमर्हति। स च मृत्तिकाशब्दः सकल संस्कृतशब्दानां उपलक्षणीभूतः। संस्कृतशब्दव्यतिरिक्ततरभाषागताः शब्दाः वाचारम्भण विषया एव। तथा च संस्कृतातिरिक्त शब्दानां वाचारम्भणं नाम वागिन्द्रियेण आरम्भणम् उत्पादनम्। ते च सर्वेऽपि मात मिट्टी मणु इत्यादि प्राकृतशब्दाः मृत्तिकेत्यादिमूलसंस्कृतशब्दविकारभूता एव। अत एव ते सर्वेऽप्यनित्याः मृत्तिकेत्यादि संस्कृतनामधेयमेव सत्यं सदातनमित्यर्थः प्रतीयते।

अस्यैव चार्थस्य प्रकरणसुसंगतत्वमपि विद्यते। येनाश्रुतं "श्रुतं भवति" इत्यादि पूर्ववाक्येषु प्रधानभूतब्रह्मज्ञानेन अप्रधानस्य प्रपञ्चस्यापि ज्ञानं प्राप्तप्रायमेवेत्यत्र दृष्टान्ततया संस्कृतभाषा उदाहृता। संस्कृतभाषा ज्ञानमेव प्रधानं तद्ज्ञानेनैव इतराः सर्वा अपि भाषा ज्ञात प्राया यथा भवेयुः तद्वत्ब्रह्मज्ञानमिति विशिष्टोऽर्थः संपन्नः। अस्मिन्नर्थे संस्कृतभाषाया दृष्टान्तीकरणेन संस्कृतभाषा सर्वभाषाप्रधाना संस्कृतशब्दा एव नित्या इतरेत्वनित्या एव। ज्ञातेषु च संस्कृतवर्णेषु इतरवर्णा ज्ञातप्राया एवेत्यादि विषयः सर्ववादिसम्मतः अविप्रतिपन्नः अनादितकालत एव ईदृशसनातनसिद्धान्तस्वरूपमधिगत अविप्रतिपन्नार्थश्चेति निश्चप्रचमवसीयते।

संस्कृतस्य सार्वत्रिक प्रचारो यदीष्यते तदा स्त्रीभिरपि संस्कृताध्ययनं प्रथमतः कार्यम्। तेन मातुरुत्सङ्गरङ्गे सलीलं खेलन्त एव बालाः संस्कृतं सहजतया जानीयुः। तेन केवलभाषाधिगमार्थं बहुकालव्ययो न स्यात्। कौमार एव समधिगतपर्याप्तभाषाज्ञानाः प्रबुद्धे च वयसि इग्लंड अमेरिकादिदेशीयाःतरुणा इव विविध-ज्ञान-विज्ञानराशिमध्येतुं योग्याः भवन्ति। "स्त्रीशूद्र ब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता" इत्युक्तप्रमाणानुसारेण महाभारतादिपौरुषेयशास्त्रश्रवणेन ब्रह्मज्ञान सम्पादने स्त्रीणामपि अधिकार सत्वात् ताभिरपि मुक्तिरूप महापुरुषार्थं प्राप्तये संस्कृतभाषा अवश्यमध्येतव्यैव।

# मयूरसिंहासनम्

सुवर्णरचितं रत्नखचितं असंख्यामूल्य महामणिमाणिक्यमौक्तिक निचितं च इदं मयूरसिंहासनं धर्मराजस्य काले मयेन निर्मितमासीत्। श्रीपाण्डवानामनन्तरं परीक्षित्जनमेजयादि क्षत्रियराजानः तदेव सिंहासनम् अधिष्ठाय दिल्लीवल्लभा भूत्वा भारतवर्षं शशासुः। ततः क्रमेण क्षीणे क्षत्रियवंशे, शक्तिहीनेषु च हिन्दूराजेषु दिल्ली यवनैः आक्रान्ता। तावदवसरे इदं मयूरसिंहासनमपि जीर्णं तत्र तत्र त्रुटितं मलिनं च आसीत्। राज्यक्रान्तिसमये पराजिताः राजानःदिल्लीं परित्यज्य पलायनप्रसंगे तत्सिंहासनप्रत्युप्तानि अमूल्यानि रत्नानि यावच्छक्यं उत्कृत्य उत्पाट्य च अनयन्। क्रान्तिकाले च बहवो लुण्ठाकाः राजभवनं प्रविश्य मिलितां सर्वामपि संपदम् अपहृत्य मयूरसिंहासनं बहुभारायमाणं नेतुम् अशक्नुवानाः तत्र अवशिष्टानि मुक्तारत्नानि तदा तदुपरि प्रहृत्य आस्फोट्य उद्धृत्य यावदुत्पाटयितुं शक्येत तावत्सुवर्णमपि गृहीत्वा अगच्छन्। एवं नैकराजमहाराज चोरवीरैः अपहृतावशेषे मयूरसिंहासने कदाचित् शहाजहानस्य दृष्टिः अपतत्।

मोगलवंशीयेषु दिल्लीवल्लभेषु शहाजहान एव अतिश्रीमान् बभूव। तस्य सविधे दश (१०) अब्जसंख्याकस्वर्णमुद्राः तदानीमासन्। मुक्तारत्नमाणिक्यादीनां तु महानेव राशिराशिः तस्य भांडागारे अपतत्। यवनसार्वभौमेषु स एव भोगभाग्यशाली रसिकः शिल्पकलाभिज्ञश्चेति सुप्रसिद्धिं प्राप। ईदृशीं अपरम्पारां मौक्तिकवज्रादिसंपदं— आदाय किंकर्तव्यं कुत्रवा इदं सर्वं स्थापनीयमिति विचारयतः तस्यदृष्टिःपुराणवस्तुसंग्रहालये पतितस्य मयूरसिंहासनस्य उपरि पतिता। तस्य मणिगणाभरणशून्यस्यापि पुराणसिंहासनस्य आकारः रचनाविशेषः मण्टपसौभगं प्रमाणबद्धता च कलाकोविदस्य तस्य विलासि

महीपतेः दृष्टिं हृदयं च आचकर्ष। शिल्पकलाकोविदानाहूय मयूरसिंहासनं पुनः सुवर्णरत्नमुक्तादिभिः मंडयितुमाज्ञापयामास।

स्वदेश विदेशेभ्यः आगताः कुशलशिल्पिनः संभूय सप्तवर्षपर्यन्तं परिश्रम्य तस्य पुनर्निर्माणं चक्रुः ५७ कोटिरूप्यकानां व्ययोऽभूदिति कथयन्ति। परं गियोवनी ( Giovanni Careri ) कारेरीनामकः कश्चन वैदेशिकः तदा तां दृष्ट्वा नानावज्र-इन्द्रनीलमणि-पद्मराग-विद्रुम-पुष्पराग-मुक्तामणिगणखचितस्य अस्य अपूर्वसिंहासनस्य मूल्यं कः कथयितुं शक्नुयादिति उद्गारम् आविश्चकार।

एकशतमानपर्यन्तं इदं सिंहासनं मोगलराज पुरुषाणां श्रीमत्तायाः सार्वभौमसत्तायाश्च प्रतीकायमानं दिल्लीनगरे राराजते स्म।

परं १७३७ क्रिस्ताब्दे ईराणदेशतः आगतो नादिरशाहः दिल्लीमाचक्राम। तदा दुर्बलः महम्मदशाहो नाम मोगलराजा शास्ति स्म। तं प्रहृत्य नादिरशहः दिल्ली संपत्सर्वस्वस्यापि स्वच्छन्दोल्लुंठनं कृत्वा ८७००००००० रूप्यकमितम् ऐश्वर्यम् अपहृतवान्। तथा निर्गमनसमये अमूल्यं कोहिनूररत्नं मयूरसिंहासनमपि ईराणं नेतुं स्वेनैव सह चत्वारिंशज्जनानां अंसमारोप्य निनाय।

इतः दुर्बलदिल्लीपतिः महम्मदशाहः सर्वैरपि दुर्दैवी शक्तिशून्यः स्त्रैणः बादशहः मयूरसिंहासनम् अपागमयत्। भारतलक्ष्मीः एव दिल्लीशान् परित्यज्य निरगच्छत्" इति वदन्तो यथेच्छमनिन्दन्। राजसभायामेव आत्मानं निर्भर्त्सयतो जनान् रोद्धुं राज्ञः शक्तिः मुखं वा नासीदेव। अश्रुपूर्णायताक्षं अवाङ्मुखं तूष्णीं काष्ठासने उपविष्टस्य दिल्लीश्वरस्य दुर्दशा दयनीया शोचनीया चासीत्।

राज्ञ इमां दुरवस्थां दृष्ट्वा कश्चन तस्य चित्रकलाचतुरं मित्रं सालेबेगनामा तूर्णं राजसभां त्यक्त्वा निरगच्छत्। परेद्युः "तव चित्रमित्रं क्वापिनगरं त्यक्त्वा पलायितः" इति श्रुत्वा 'विपद् विपदमनुबध्नाति' 'क्षते क्षारं' 'गंडस्योपरिपिटकः संवृत्तः' इति किमपि दुःखदुःखेन प्राजल्पत् राजा।

इतः स्वदेशम् इराणं प्रति प्रयास्यन् नादिरशहः मध्येमार्गं दीर्घ-प्रयाणश्रान्तेषु अनुचरेषु 'मसाद' दुर्गे विश्रम्य गन्तुं स्वानाज्ञापयामास। रात्रौ सुप्तेषु सर्वेषु, निद्रामुद्रितलोचने च दिल्लीविजेतरि नादिरशहे कोऽपि सहसा आगत्य तस्य हृदयफलके छुरिकां निक्षिप्य क्षणार्ध एव तं ममार। राजमरणाच्च भीताः तदीयसैनिकाः अस्मद्विद्रोहं प्रतिचिकीर्षवः दिल्लीराजसैनिकाः प्रचंडबलेन अस्मान् हन्तुं समागता इति भिया 'जीवन् भद्राणि पश्यति' इति विचिन्त्य पलायन्त स्वदेशं स्वानीतं मयूरसिंहासनमपि तत्रैव परित्यज्य।

ततः कतिपयकालानन्तरं एकदा सायंकाले वनान्ते वासन्तिक मन्दमारुतमासेवमाने दिल्लीश्वरे तस्य चित्रकलामित्रं सालेबेगः आगत्य एकं चित्रं प्रत्यर्पयत् यत्र नादिरशहस्य हृदयं छुरिकाप्रहारेण स्फुटितं प्राणपरिस्पन्दशून्यं च अलिख्यत। अन्यच्च चित्रं यत्र मयूर-सिंहासनं पुनः दिल्लीराजसभायां प्रस्थापितमासीत्। तदवलोक्य दिल्लीश्वरः हर्षप्रकषसमुदञ्चितरोमाञ्चकञ्चुकितकलेवरः मित्रं समाश्लिषत्। तस्य लेखनीं छुरिकां च सःनित्यं पूजयति स्म। एवं बलान्नीतं मयूरसिंहासनं राजमित्रेण चित्रकारेण पुनः प्रत्यानीतम्। परमद्य तत् कुत्रास्ते इत्येतत्तु न कोऽपि जानाति॥



Regd. No. B. 7171

# मधुरवाणी नियमावली

ये पंच नवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदाकदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टोणक पोष्टटिकीट प्रेषणं कार्यम् ।

व्हि॰ पी॰ द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्ष वर्षारंभे मनिआॅर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लेखानां प्रथमप्रोशस्त्यं प्रदीयते ।

**Book-Post**

To,
*Shree* ____________

If addressee is not found
please return to sender.

**पंढरीनाथाचार्य गळीगळी**
संपादक मधुरवाणी
मधुरवाणीकार्यालय, गदग (कर्नाटक)

Printed at the New Gadag Printery Gadag, by P. S. Homball
and Published by Pandharinathacharya Galagali at Gadag.

जगद्गुरुश्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर भाद्राङ्कः १९५८ सेप्टेम्बर

प्रधान संपादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार

राजा एस. गुरुराजाचार्याः



संपादकाः

गलगलीत्युपाव्हाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु० ५  एकाङ्कस्य ०-८-०

**मधुरवाण्या मुख्यसंचालकाः**

श्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादाः

**० मधुरवाण्या महा संरक्षकाः ०**

श्री श्री विबुधेशतीर्थ स्वामिपादाः अधमारुमठ, उडुपी प्रतिवर्षं ५०५ रु० प्र

श्री मन्तः पद्मनाभराव वैद्य महोदयाः ,,

**प्रतिवर्षं १०१ रु० प्रदाः मधुरवाण्याः संरक्षकाः**

श्री श्री भंडारगिरि मठाधीश स्वामिपादाः

श्री श्री पेजावर मठाधीश स्वामिपादाः श्री श्री स्वादीमठाधीश स्वामि

श्री श्री भीमनकट्टी मठाधीश स्वामिपादाः

श्री श्री कूडली शृंगेरी मठाधीश स्वामिपादाः

२३

## विषयानुक्रमः

# मधुरवाणी

२३ वर्षे । विलम्बि संवत्सर भाद्रपद मास सञ्चिका । अङ्कः ६

## भाद्रपदांकस्य मंगलाचरणम्

### श्रीवल्लभागणपति-भुजङ्गाष्टकम्

महानन्द-शुद्धान्त-सत्सौविदल्लं
स्पृहा पूरणायानतेषु प्रफुल्लम् ।
श्रये स्वीयलीलावक्त्राष्टादिभिल्लं
श्रियै वल्लभावल्लभं हस्तिमल्लम् ॥ १ ॥

जगत्कारणायाभयोच्चारणाया-
पदां वारणायानतिर्वारणाय ।
अनाधोरणायार्यहृत्कूपारणाया-
स्त्वघोत्सारणायातिभीदारणाय ॥ २ ॥

सुधासूतिखण्डप्रभाभृच्छिखण्डं
बुधारातिदण्डक्रियासु प्रचण्डम् ।
मदस्राविशुण्डस्थलस्थालिषण्डं
महश्रित्करण्डं मुदे मेऽस्त्वखण्डम् ॥ ३ ॥

नमाम्याननं सामजं सोमजं तं ।
कृपातः कदाप्यत्यजन्तं भजन्तम् ।
तमःक्ष्वेलसालं हरन्तं दुरन्तं
प्रसादप्रदाक्ष्णा स्फुरन्तं निरन्तम् ॥ ४ ॥

वरप्रार्थनीयः पुरश्चार्चनीयोऽ
खिलोपक्रमे योऽतुलो माननीयः ।
गणानां पतित्वं गुणानां निधित्वं
दधानो मदीयं धुनोत्वन्तरायम् ॥ ५ ॥

अनन्तार्चनास्थामनन्तासमुत्था-
मनन्ताब्जजाताद्यनन्ताप्तगीताम् ।
अनन्तार्थदात्रीमनन्ताप्तगात्री-
मनन्तामये तामनन्तां महिम्ना ॥ ६ ॥

भजद्भागधेयं भवद्रूपधेयं
भवान्यङ्कनेयं भवक्षत्युपायम् ।
इभास्यानपायं प्रभावैरमेयं
श्रयेऽपान्तरायं नयैनन्त्वदीयम् ॥ ७ ॥

परो भक्तरक्षापरो वल्लभात-
त्परो वैभवौघापरो वेदसारः ।
पुरस्तान्मम श्रीपुरस्थाङ्कोऽग्रे-
सरः शाङ्कराणां सरश्चिद्रसानाम् ॥ ८ ॥

कविरत्नं श्रीज्ञानसुन्दरी ।
कुम्भकोणम् ।

---

## मासावतरणिका

विष्वग्वर्षणतो हि कर्षककुलं हर्षप्रकर्षोत्सुकम्
इच्छापूरणवारिपारणवशात् तृप्ताः पुनश्चातकाः
मोदोन्मादि शिखण्डिमण्डलकृतं प्रीणाति नस्ताण्डवम्
मासो भाद्रपदो विभाति जगतो भद्रं सदोन्निद्रयन् ॥

मधुरवाण्याः आर्थिकसंकटे नैकशताधिक रूप्यकाणां साहाय्यकर्तारः

म० वा० संरक्षकाः श्रीमद्भंडारगिरिमठाधीश

श्री श्री विद्यामान्य तीर्थ स्वामिपादाः



श्री चैतन्यप्रवर्तिते किल कलेः कालात् खिले हाऽखिले ।
विष्णोर्भक्तिमते पुनर्नवलसच्चैतन्यमापूरयन् ॥
गङ्गसङ्गमपूतवङ्गवसुधां सुज्ञानगङ्गामृते —
नात्यर्थं ननु पावयन् चरति सद्विद्यातिमान्यो यतिः ॥

# भारतीयं स्तुति-साहित्यम्

## परम्परा-प्रवाहः

निबन्धकः—रुद्रदेव त्रिपाठी

साहित्य—सांख्य-योग-दर्शनाचार्य : मन्दसौर ( म० प्र० )

अपारेऽस्मिन् काव्य-कान्तारे कोटिशः काव्यकलाकुशलाः काव्य-केलिकुतूहलमलञ्चक्रिरे। यस्य कलनामासृष्टेरद्ययावद्विधातुं विधातुरपि वैफल्यं समुत्पद्येत। यतो हि भूयांसि मनांसि नमांसि विधाय, भूरीणि वचांसि समुद्गीर्य, नैकानि काव्यानि समाकलय्य, विपुलानि स्वीयानि यशांसि सम्प्रसार्य, निःसीमान्युद्गीथान्युपगाय वीतसारमपि संसारं ससारं सुसम्पाद्य संसृतेः स्वस्य चानिन्दनीयं सर्वैः सर्वथा समभिनन्दनीयं समभिवन्दनीयञ्च कल्याणमकार्षुः। सोऽयं परम्परा-प्रवाहो वैदिककालादद्य यावदक्षुण्णतयैव प्रवहन्नास्ते।

## किमाचक्ष्महे कियदाचक्ष्महे ?

किञ्चास्ति समस्तस्य विश्वस्य शास्त्रशिरोराजिविराजितं पौरस्त्य-पाश्चात्यसभ्यतायां सर्वादिमं ग्रन्थरत्नं विश्वैरपि विद्वत्तल्लजैरुररीकृतं साक्षाद् भारतीयसंस्कृतेर्मूर्तिमद्रूपं "ऋग्वेद" [1] इति। तस्मिन्नपि यत्र तत्र समागतानां [2]सूक्तमौक्तिकानां नास्ति नैयून्यम्। येषु निसर्गा-

---

(१) आसीत् पुरा विद्वत्स्वयं विवादो यत् "पूर्वं ग्रीक भाषायां ग्रन्थालेखनं तदीया च संस्कृतिः प्राचीनतमेति।" परमिदानीन्तनैरन्वेषणचणै-रिदं सुस्पष्टं साधितं यदखिलेऽपि भूमण्डले नास्ति "ऋग्वेदात्" प्राक्तनं ग्रन्थरत्नमिति प्रसिद्धम्। (२) सूक्तानां नामाङ्कनं पुरस्तादास्ते।

समीचीनानि प्रकृत्यैव सुमधुराणि भावाङ्कनानि चेतांसि रमयन्ति विराजन्ते। तद्वदेव समसामयिकेषु द्वितीयेषु वेदेष्वपि सैव रुचिरा चिराय जागर्ति मौक्तिकानां दीप्तिमती द्युतिः। ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु स्मृतिषु च परं परिपोषमाप्ता नितरामुद्गतिमुपगता यथा-तथमियं प्रतिपदं प्रसृतिमिता परम्परा सर्वोपरि वर्वर्ति। गाङ्गधारेव निखिलमपि भूलोकं रिङ्गत्सु पुराणेषु तु सत्यमेवायं प्रवाहस्तथा प्रवह-मानो विद्यते येनाखिलोऽपि मानवमानसलोक आकण्ठमाप्यायितः मन्त्र-तन्त्र-यन्त्र ग्रन्थैस्तु सर्वतो बलवत्युपादेयता स्तुतिभिरेव प्रतिपा-दिता। योगशास्त्रस्याप्यत्र मनो-योगः प्रबल एव।

तस्मादेव प्रपश्यामस्तदीयाभिः कृपाकणिकाभिरभिषिक्तानि सर्वत्र श्यामश्यामानि शाद्वलितानि निसर्गमनोहराणि सुमनोराजि-विराजितानि। दिव्यसौरभरसितानि तानि तानि सदुद्यानानि। यत्र हि सहृदयमनोमिलिन्दा आनन्दतुन्दिला मकरन्दपानपरा न मुर्च्छन्ति स्थलीन्दीवराणां परागपूरपरिपूरितां कोशस्थलीम्। तदीयसञ्चितस्य च मधुनो मनागपि रसनासंस्पर्शेण सुधासहोद-रास्वादवन्मन्यमाना भगवद्भजनैकमतयोऽविरतं रदनच्छदौ लेलिहाना इव विचित्रामेव स्थितिमापन्नास्तदिति विषये किमाचक्ष्महे कियदाचक्ष्महे ?

## स्तुतिसाहित्यस्याविर्भाव :—

अस्ति मानवः स्वभावतएव कृपापात्रम्। यतो हि स जननी-जठर-जातानि कष्टकदम्बकानि सोढ्वा कथमपि परेशानुकम्पया गर्भपाशा-त्परिमुक्तः संस्मृत्य संस्मृत्य च समापतितानि स्वानुभूतिपथमापातत एवापतितानि कष्टानि भुवः स्पर्शारम्भकाल एव रोदिति, [३] परितो

(३) अत्रेदमवधीयतां नाम पद्य चतुष्टयम्—

आदौ कर्मप्रसङ्गात् कलयति कलुषं मातृकुक्षौ स्थितं मां,
विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः।

मललुलितवपुः स्तन्यपानपिपासाकुलितो विविधरोगाक्रान्तो बाल्ये रोदिति, परिजनविरहासक्तोऽभीष्टप्राप्तिचिन्तासन्तानतान्तो मध्ये वयसि रोदिति, प्रान्ते स्वीयमसाफल्यं दारसुतादिकृतं प्रपश्यन् जरया जर्जरीकृताङ्गो रोदिति, परस्तात् खिन्न-खिन्नस्तुन्नतुन्नो दीनदीनो दूनदूनो हन्त! शिथिलाङ्गश्च सन् प्रयाणवेलाऽऽगतिं परिचिन्त्यापि रोदिति सम्पर्कदोषेण च मरणानन्तरं पृष्ठतोऽवशिष्टान् शिष्टानपि रोदयति। इत्थं रोदनधर्मा मानवः सत्यमेव रोदने रुचिमत्सुखं मन्यमानो यदा यदा परिपतति विपज्जाले, यदा यदाऽनुभवत्यात्मानमसहायं, यदा यदा भ्रान्ति-क्रान्ति-श्रान्त्यशान्तिमाला-विलुलितमवलोकयति स्वं तदा तदैव निरालम्ब इतस्ततः करौ स्तारयति, पादौ पातयति

---

यद्यद् वै तत्र दुःखं व्यथयति नितरां शक्यते केन वक्तुं,
क्षन्तव्यो मेऽपराधः शिवशिव शिव भोः! श्रीमहादेवशम्भो! ॥१॥

बाल्ये दुःखातिरेकान्मललुलितवपुः स्तन्यपाने पिपासा,
नो शक्तश्चेन्द्रियेभ्यो भवगुणजनिता जन्तवो मां तुदन्ति।
नानारोगादिदुःखै रुदनपरवशः शङ्करं न स्मरामि,
क्षन्तव्यो मेऽपराधः शिव शिव शिवभोः! श्रीमहादेवशम्भो! ॥२॥

प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ,
नष्टो दष्टोऽविवेकः सुतधनयुवतिस्वादसौख्ये निषण्णः।
शैवीचिन्ताविहीनं मम हृदयमहो! मानगर्वाधिरूढं,
क्षन्तव्यो मेऽपराधः शिव शिव शिव भो! श्रीमहादेवशम्भो! ॥३॥

वार्धक्ये चेन्द्रियाणां विगतगतिमतिश्चाधिदेवाधितापैः,
पापै रोगैर्वियोगैस्त्वनवसितवपुः प्रौढिहीनं च दीनम्।
मिथ्यामोहाभिलाषैर्भ्रमति मम मनो धूर्जटेर्ध्यानशून्यं,
क्षन्तव्यो मेऽपराधः शिव शिव शिवभोः! श्रीमहादेवशम्भो! ॥४॥

—श्रीशिवापराधक्षमापनस्तोत्रात्।

एवंविधान्यन्यान्यप्युदाहरणानि तत्र तत्र स्तोत्रसाहित्ये सुबहूनि सन्ति येषु मानवस्य दैन्यं [illegible]

नयने निक्षिपति, श्रुती समवदधाति स्वान्तञ्च धावयति तथापि यर्हि न पश्यति मनागपि साहाय्यरश्मिं तदा पलायते सर्वेश्वरस्य सृष्टि-स्थिति-संहृति-कर्तुरकारणकरुणाकरणपरायणस्य पादौ गृहीतुम्। यस्य च चरणयोराश्रयावाप्तिरेवास्ति समासामागतानागतानां विराम-भूर्विपदाम्। ४

तादृश्यां वैकल्यशालिन्यामवस्थायां सुखमाशंसमानः, कृपां काम-यमानः, स्वेप्सितमर्थयमानः, क्लेशं सहमानो, दौर्बल्येन तितिक्षमाणो, विरहेण बाष्पायमानो, वैक्लव्येन वेपमानः, क्वचिद् दरिद्रायमाणो, निद्रायमाणो, जृम्भमाणः, प्रबुध्यमानो, घूर्णमानो, जुगुप्समानः, कृच्छ्रायमानोऽनुरज्यमानोऽभिमन्यमानो विषीदन् प्रसीदन् वा यानि यानि कातरताक्लिन्नानि, दीनतादलितानि, हीनता-हापितानि, लीनताऽऽलिङ्गितानि, मालिन्यमिलितानि, दोषदूषितानि, रोषरूषितानि आक्रोशघोषितानि, गीतिजुष्टानि, प्रीतिपुष्टानि, कीर्तितुष्टानि वा वचोवैचित्र्याणि समाकलयति, समुद्गिरति, कथयति, चीत्करोति, विलपति, मनस्येव मनसि चाव्यक्तं विविनक्ति तदेव सकलं "स्तुति-स्तोत्र" संज्ञयाऽभिव्यज्यते।

अथ चैवमेव चेतनाचेतनानां यथा धुनीनां कलकलेषु, शुष्कार्द्र पत्राणां मर्मरेषु, जीमूतानां स्तननेषु, वाद्यानां झङ्कृतिषु, धनुरादीनां टङ्कृतिषु, सिंहादीनां हुङ्कृतिषु, चटकादीनां चुङ्कृतिषु, वयसां विरावेषु, पशूनामितरेषाञ्च बृंहण-हेषणादि-क्रियाकलापेषु कमप्यनिर्वचनीयं कस्मैचिदपि कयाचिदनभिज्ञया वाचास्तुति-गीति मेव समाकर्णयामः। श्रीभगवद्गीताया "आर्तो जिज्ञासुरर्थार्थी" त्यादि सूक्त्यामन्तर्हितस्य तत्त्वस्य स्वारस्यस्य च परिपोषार्थमेव कश्चिदार्तः सन् कश्चिज्जिज्ञासुर्भूत्वा, कश्चिदर्थार्थितामापन्नः कश्चिच्च

---

(४) "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह।"
"कस्तत्र मोहः कस्तत्र शोकः" इत्यादि श्रुतिवचनात्।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति गीता वचनाच्च।

ज्ञान-सम्पन्नः सन्नेव स्वस्याराध्यस्य प्रसत्त्यै गायन् प्रतिभाति।[५] अत एवैवं वक्तुं पार्यते यत् "सृष्टेरारम्भसमकालादेव स्तुति-साहित्यस्याप्याविर्भाव" इति कस्तत्र विवदेत ?

## स्तोत्र साहित्यस्य वैविध्यम्

रुचीनां वैचित्र्यात् प्रावृट्सलिल कणिका इव यथारुचि यथामति यथाऽभिमतञ्च वर्त्माभिसरतां भक्तिभाजां भावाङ्कनमपि सामुद्र-बुद्बुद-तारक-स्रोतस्वतीस्थसिकतादीनां गणनेव कठिनतमा प्रतिभाति तथापि पुरतश्चर्मचक्षुषोरुपसृतानां श्रुतिसाहचर्यं समासादितानां कासाञ्चिदासां स्तुतीनां निदर्शनं नानुचितमिति किञ्चिदुपदीक्रियते।

आम् : साहित्यञ्चेदं विद्यावतां भक्तिभाजाञ्च हृदयेन जनिमदभूदिति तु प्रागेवोपन्यस्तम्। तत्र च जाति-धर्म-देश धामादि वैविध्येन "स्तवः स्तोत्रं स्तुतिरित्यादि कोषकार प्रतिपादितोऽनन्वय[६]यालङ्कृतिरिव स्वशब्दार्थं स्वस्मिन्नेव धारयतः "ष्टुञ्—स्तु" धातोः प्रकृतिप्रत्ययनिष्पन्नो विरुदवर्णनापरपर्यायो हार्दिकोद्गारसमर्पण—साधनरूपः स्तव्यकृपा प्रसाद प्राप्ति भावनार्थानवच्छिन्नः स्तुतिशब्दोऽयं वेदेषु "मनीषा - वृक्षिण - गीते" त्यादि नानाशब्दैरन्वर्थीकृतो वर्तते। आरम्भ-कालादेव वेदेषु [७]अग्नि - सवितृ मरुद्-विष्णु-द्यावा-[८]पृथिवीन्द्र - रुद्र - मित्र बृहस्पत्युषः—पर्जन्य-पूषन्नापो - मित्रावरुण-सूर्याश्वि-वरुण—

---

(५) चतुर्विधा भजन्ते मां, जनाः सुकृतिनोऽर्जुन !
आर्तो जिज्ञासुरर्थार्थी, ज्ञानी च भरतर्षभ ॥१६॥ अ० ७ गीता०

तद्यथा-आर्ताः—द्रौपदीगजादयः। जिज्ञासवः—मुचुकुन्द-जनकोद्धवादयः। अर्थार्थिनः—सुग्रीव विभीषण-ध्रुवादयः। ज्ञानिनश्च—नारद-सनक-सनन्दनादयः। ये हि यथेच्छं सम्प्राप्य मुक्तिं गताः।

(६) उपमानोपमेययोरेकत्वे सत्यनन्वयालङ्कारः।

(७) एतेषां सूक्तानामेकत्र सङ्ग्रहालोकनेच्छावद्भिः॥ वैदिक—रीडर—" वैदिकसूक्त सञ्चयादयो ग्रन्था विलोकनीयाः।

मण्डूक-वैश्वदेव-सोम - पितृ-पुरुष-रात्रि-यम-वात-पवमान-देवी—सूक्तानामितरेषाञ्च बाहुल्यं प्रस्फुरति। येषु नानाविधा वाग्विलासा अभ्यर्थना-प्रयासाः कोमल-कान्तपदावलीनां विन्यासा मधुमय-भावानां रुचिरप्रवाहा आध्यात्मिकोपदेशानामभिव्यक्तयो रोचक-रचनावैचित्र्याणि च पदे पदे हठादावर्जयन्ति चेतांसि।

अथर्वशीर्षाणामपि साहित्येऽस्मिन्नस्ति परमौदार्य्यम्[10]। यत्र स्तवनीयस्य स्तुतिः "त्वमेव ब्रह्माऽसि त्वमेव विष्णुरसि त्वमेव रुद्रोऽसि त्वमेव सर्वं खल्विदं ब्रह्म, त्वत्तः सर्वं जगदिदं जायते त्वयि तिष्ठन्ति भूतानि त्वय्येव सर्वं विलीयत" इत्यादि वचनशतैः क्रियते। प्रान्ते च पदे पदे जायमानेभ्यः पापेभ्यो मोचनमपि फल-श्रुतिमिषेण"[11] साधु सम्पादितम्।

परस्तादागच्छत्युपनिषदां कालः। अष्टोत्तरशताथवा तदुत्तर-संख्यावत्सूपनिषत्स्वपि प्राचुर्येण तादृश्य उपनिषदः सन्ति यासु स्तुतिसाहित्यस्यैव परम्परा सुतरां प्रवर्धमाना प्रतीयते। नवनीत-मिव दधिसारादुद्धृता "उपनिषत्सुधा" सहसैव रञ्जयति तरलयति विदधात्यात्मसाच्च गुणगणप्रागुण्यैः। रहस्यविज्ञानं नाम कस्य न

---

(८) युगलस्तुतिवत् सूक्तेष्वेतेष्वपि बहूनि सूक्तानि तादृशि वर्तन्ते येषु द्वयोर्द्वयोराराध्ययोरेकत्र पद्यस्तवो वा स्तुतिर्विहिता।

(९) वैदिक सूक्तेषु राष्ट्रियता-पोषकानि सामाजिकज्ञानदायी-न्यपि च राष्ट्रसूक्त-पृथिवीसूक्तादीनि सन्ति समर्हणीयानि।

(१०) तथाविधेष्वथर्वशीर्षेषु - शिव-गणेश - देवी-सूर्य-प्रभृतयो-भूरिशः प्रचलिताः सन्ति। येषां साधकः प्रत्यहं द्वादश पञ्चदश-पाठान् कृत्वा सुखी भवति।

(११) फलश्रुतीनां महत्तयैव स्वार्थी मानवः कृतौ प्रवृत्तो भवति। कारणादस्मादेवात्रापि—व्रात्यभाषणात् पूतो भवति ब्रह्म-हननात् पूतो भवति, स सर्वं लभते, सर्वविद् भवतीत्यदि निगदितम्।

कौतुकाय ? क्रान्तदर्शिनो विदितवेदितव्या दिव्या महर्षय-स्तस्मादेव शिष्याय चिन्तामणि-प्रत्यर्पणमिव ब्रुवते स्म-इत्युपनिषदित्योम्।

## मन्त्रशास्त्राणां सहयोगदानम्

"मननात् त्रायत" इति मन्त्रः। परिभाषयैतया परिचिताः प्रत्यग्रविपत्पाथोधिपारं जिगमिषवोऽनन्ताः साधकाः सर्वशो यावदालोचयन्ति मन्त्रशास्त्राणि, तदा तत्र तत्र समागतानां मन्त्र सिद्ध्युपायानां सम्यगध्ययनेनावगच्छन्ति यत् प्रतिमन्त्रं सिद्धये स्वानि द्वादशाङ्गानि धारयति। यैर्विना मन्त्रसिद्धिस्त्वास्तां दूरे, परं यद्यत् क्रियते तत्सकलमपि कार्यजातं भस्मनि हुतमिव भवति। मन्त्रमहोदधौ मन्त्रमहार्णवे उपासनाकल्पद्रुमादिषु च समागतानां स्तोत्राणामेकैकस्यापि स्तोत्रस्य महिमा वर्ण्येत चेद् द्राघीयान् ग्रन्थ एव सम्पद्येत। तथापीदन्तु निवेदनीयमेव यत तदीयस्तुतिसाहित्ये क्वचिन्मन्त्राणां क्वचित्तन्त्राणां क्वचिद् यौगिकप्रक्रियाणां निदर्शनं परमसूक्ष्मया शैल्या ग्रथितमस्ति। साहित्यस्य वाग्वैदग्ध्यस्य तु सहस्रश उदाहरणानि संसक्तानि सन्ति। श्रीमद् धर्माचार्यप्रणीता पञ्चस्तवी पूर्णरूपेण परिचिता। यस्यामनन्तकोटिब्रह्माण्डनायिका राजराजेश्वरी परशिवाम्बा महात्रिपुरसुन्दरी स्तोतव्या विद्यते। अस्यामागतेषु स्तवेषु लघुस्तवस्य काश्मीरकेणैकेन कविना १५००० श्लोकमिता टीका व्यरचि। अन्येन २००० मिता। अन्येन १०५०० मिता चास्ति। श्लोकसंख्या च तस्य २१ मिता। एवं बहूनि स्तोत्राणि येषां माध्यमेन लक्षशः सिद्धिमाप्ताः। तत्र विदुषां मौनिता शोकाय।



# "दुष्यन्तः कण्वस्याश्रमे कतिदिनान्युवास !"

( गुरुशिष्ययोस्संवादः )

[लें० :—शास्त्ररत्नाकरो, विद्यासागरः पं० पट्टाभिराम शास्त्री]

विश्वविद्यालयाध्यापकः कलकत्ता

गुरु :—(शिष्यं सम्बोध्य) वत्स ! त्वं किं शाकुन्तलं नाटकमधीतवानसि ?

शिष्य :—पूज्यपाद ! आम् ! सम्यगध्यैषम् ।

गुरु :—कविकुलतिलकस्य कालिदासस्य शाकुन्तले किं वैशिष्ट्यमस्तीति त्वं किं जानासि ?

शिष्य :—जानामि । अन्यैः कविभिर्विरचितानां नाटकानां मार्गप्रदर्शकमिदम् । सहृदयै रसास्वादे क्रियमाणे यथा तेषां वैरस्यं न भवेत्तथा नाटकमिदं कालिदासो रचयाम्बभूव । नाटकीयं रसं परिपोषयितुम्, दुष्यन्तस्य नायकस्य, नायिकायाश्च शकुन्तलायाः चारित्र्यं यथावत्परिपालयितुं च कविस्सावधानो भवति । नाटकेऽस्मिन् एकैकमपि पदं सहृदयहृदयाह्लादकारिणमर्थं ध्वनयति । सर्वत्र कविः पदानि तोलयित्वा प्रयुङ्क्ते । असम्बद्धमनुचितं वा न वदति । दृश्येषु काव्येषु शाकुन्तलमिदं सर्वोच्चां कोटिमधिरोहति । नाटकान्तरे वैशिष्ट्यमेतादृशं नोपलभ्यते ।

गुरु :—सम्यग्ग्राहितो विषयस्त्वं गुरुणा । कांश्चन प्रश्नान् करोमि, उत्तराणि देहि । दुष्यन्तः कस्यां तिथौ कण्वस्याश्रममाजगाम । तत्र कति दिनान्युवास ? कस्यां तिथौ नगरं प्रतस्थे ! आश्रमस्थैर्महर्षिभिस्सम्भूय को यागस्समनुष्ठितः । परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः । इति कीर्तनं दुष्यन्तस्य किं तथ्यम् ! उतातथ्यम् ?

शिष्यः—आराध्यचरण ! न खल्वहमवगच्छामि प्रश्नानामुत्तराणि। प्रश्नाः कठिना इव प्रतिभान्ति। न मया विमर्शसरणिमवलम्ब्य नाटकमिदमधीतम्। भवन्त एवोत्तराणि वदन्तु।

गुरु :—वत्स ! सावधानेन मनसा शृणु। द्वितीयाङ्के 'तत्रभवतः कण्वस्य महर्षेरसान्निध्याद्रक्षांसि नः 'इष्टि' विघ्नमुत्पादयन्ति। 'तत्कतिपयरात्रं' सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रमः' इति ऋषिकुमारौ दुष्यन्तं वदतः। अत्र 'इष्टिः' 'तत्कतिपयरात्रम्' इति शब्दद्वयं विमर्शार्हम्।

तत्रैव द्वितीयाङ्के राज्ञो मात्रा प्रेषितः करभको मातुस्सन्देशं कथयति—'आआमिणि 'चउत्थदिअहे' पउत्त पारणो मे उववासो भविस्सदि। तहिं दीहाउणा अवस्सं संभाविदव्वत्ति' इति। अत्र 'चउत्थदिअहे' इति पदं विवेचनार्हम्।

तृतीयेऽङ्के—'सायन्तने 'सवनकर्मणि' सम्प्रवृत्ते' इति पद्ये 'सवनकर्मणि' इति पदं विमर्शार्हम्।

चतुर्थेऽङ्के—'अज्ज सो राएसी 'इट्ठिं' परिसमाविअइसीहिं विसज्जिओ अत्तणो णअरं परिसिअ' इत्याद्यनसूयावाक्ये 'इट्ठिं' इत्यपरमिष्टि पदं विचारार्हम्। एतेषु पदेषु समालोचितेषु प्रश्नानां तेषामुत्तराणि भवन्ति। किं तेऽत्र सामर्थ्यमस्ति ?

शिष्य :—आचार्यवर्य ! नात्र मे बुद्धिः प्रसरति। छान्दसा इमे विषयाः। तैरेव छान्दसैर्मीमांसकैर्ज्ञातुं शक्यन्ते। न खलु सहृदयैः।

गुरु :—अरे वाचाल ! साभिप्रायं ते वचः। मीमांसका रसानभिज्ञा इति भङ्ग्या तानधिक्षिपसि। ते हि न केवलं पदार्थतत्त्वविमर्शकाः, किन्तु रसमार्गप्रवर्तका अपि। भट्टनायकप्रभृतयो भूयांसो मीमांसका रसमार्गं प्रवर्तयाम्बभूवुरिति किं न विदितं त्वया ? यत्रैषां पक्षः खण्डयितुं न पार्यते, तत्रालङ्कारिकाः छान्दस शब्दं प्रयुञ्जाना एतान् दूषयन्ति। तमेव पन्थानं त्वमप्यनुसृतवानसि।

शिष्य :—मर्षयतु पूज्यपादः। नूनमहं ... लोके'

इति न्यायमनुसरन्नवदम्। उपदिशन्तु भवन्तः—कथमयं विषयो निर्णीयत एभिः पदैरिति।

गुरुः—वेदेषु त्रिप्रकाराणि कर्माणि विहितानि—इष्टयः पशवः सोमाश्चेति। इमे त्रयोऽपि यागपदवाच्याः। तत्रौषधप्रभवद्रव्यका यागा इष्टयः, पशुद्रव्यका यागाः पशवः सोमलताद्रव्यकाश्च सोमा इति व्यवह्रियन्ते। एतेषु प्रकृतयोविकृतयश्चेति प्रत्येकं विभागद्वयम्। स्वस्वापेक्षितानामङ्गानां यत्र साकल्येन पाठः तत्र प्रकृतिः, यत्र च न तथा पाठस्तत्र विकृतिरिति व्यवहारः। इष्टिषु दर्शपूर्णमासौ, पशुषु-अग्नीषोमीयः, सोमेषु च ज्योतिष्टोमः प्रकृतयो भवन्ति। अन्ये सर्वेऽपि यागा विकृतयो भवन्ति। सर्वेष्वेव सोमयागेषु इष्टयः पशवश्चाङ्गभूता अपि भवन्ति। सोमयागश्च प्रधानभूत एवेति स्थितिः।

तृतीयाङ्के कविना प्रयुक्तं 'सवनकर्म' पदं सोमयागमाचष्टे। अभिषवार्थकषूञ धातो र्निष्पन्नोऽयं सवनशब्दः सोमाभिषवयुक्तं कर्म वदति। सोमयागेषु सर्वेषु सोमाभिषवः कालत्रयेऽपि सम्पाद्यते—प्रातः मध्यान्हे सायञ्चेति। अतएव प्रातस्सवनम्, माध्यन्दिनं सवनम्, सायंसवनम् इति त्रीणि सवनानि। तथा च 'सायन्तने सवनकर्मणि' इत्यस्य सायङ्कालिके सोमाभिषवयुक्तकर्मणि-सोमयागे सम्प्रवृत्ते सतीत्यर्थो लभ्यते। एतेन कण्वस्याश्रमे कश्चन सोमयागो महर्षिभिरनुष्ठीयत इत्यनुमातुं शक्यते।

सोमयागेष्विष्टयः पशवश्चाङ्गभूता भवन्तीत्यवोचम्। तत्र पूर्वाङ्गभूतास्विष्टिषु दीक्षणीयेष्टिः प्रथमा, उत्तराङ्गभूतासु चावभृथेष्टिरन्तिमा। कविना द्वितीयाङ्के प्रयुक्त इष्टिशब्दो दीक्षणीयेष्टिम्, चतुर्थाङ्के च प्रयुक्त इष्टिशब्दोऽवभृथेष्टिञ्च प्रतिपादयतः। एवञ्च त्रिभिरप्येभिः शब्दैस्साङ्गस्सोमयागः कश्चन बोध्यत इति सिध्यति।

तत्र कोऽयं सोमयागः? किं नामाचायम्? कतिदिनसाध्यश्च सः? इति विमर्शः प्राप्तावसरः। वेदेषु सोमयागाः—एकं दिनमारभ्य सहस्रदिनपर्यन्तं साध्यत्वेन विहिताः। सर्वेषामेषां ज्योतिष्टोमः

प्रकृतिरित्यवदम्। अयञ्च ज्योतिष्टोमः पञ्चदिनसाध्यः। आदितश्चतुर्षु दिनेषु-अङ्गभूता इष्टयः पशवश्च भवन्ति, पञ्चमे च दिने प्रधानभूतस्सोमयागः, तदन्ते चाङ्गभूतेष्टिः। तत्रापि प्रथमदिने दीक्षणीयेष्टिः, अन्ते चावभृथेष्टिः एवञ्च द्वितीयचतुर्थाङ्कयोः कविना प्रयुक्ताविष्टिशब्दौ दीक्षणीयेष्टिमवभृथेष्टिञ्च बोधयत इत्यङ्गीकारेऽन्ततः पञ्चदिनसाध्यस्सोमो ( ज्योतिष्टोमः ) महर्षिभिराश्रमेऽनुष्ठित इत्यनुमातुं शक्यते।

तत्र द्वितीयाङ्कस्थौ 'तत्कतिपयरात्रम्' 'आआमिणि चउत्थदिअहे' इति शब्दौ सङ्गच्छतः। अतएव दुष्यन्तः—'वयस्य ऋषिगौरवादाश्रमं गच्छामि' इत्यादिना ऋषीणां बहुमानाद्धेतोर्ममाश्रमगमनमनिवार्यम्, अन्यथा सर्वानर्थकारी ऋषीणां शापो भवेत्, मातुराज्ञायाः परिपालनाभावेऽपि नैतादृशोऽनर्थो भविष्यतीति वदन् इतश्चतुर्थे दिनेऽप्याश्रमे स्वस्यावस्थानमनिवार्यमित्यवद्योतयति।

अतएव महति धर्मसंकटे निपतितो दुष्यन्तः :—

'परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः' इति तथ्यामेवावस्थामवोचत्, न तु विदूषकं प्रतारयितुम्। किञ्च-त्रिप्रकारा अपि यागाः पर्वकालेषु पूर्णिमायाममावास्यायां वानुष्ठेयत्वेनोपदिश्यन्ते—"य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णिमास्यां वा यजेत" इति वेदवाक्येन। 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन पर्वकालानुष्ठेयत्वं यथा प्रधानस्य सिध्येत् तथा कर्माणि कर्तव्यानि। प्रकृते च ज्योतिष्टोमे पञ्चमदिन एव प्रधानस्सोमयागः, आदितश्चतुर्षु दिनेष्विष्टयः पशवश्च भवन्तीति पूर्वमुक्तम्। तत्र प्रधानस्य सोमयागस्य पर्वकालानुष्ठेयत्वसिद्धये ऽङ्गानां ततः पूर्वमनुष्ठानमावश्यकम्। अतएव ज्योतिष्टोमः एकादश्यामारभ्य पूर्णिमायाममावास्यायां वा समाप्यते। तथाच द्वितीयाङ्कस्थ इष्टि शब्द एकादशीम्, चतुर्थाङ्कगतेष्टिशब्दश्च पूर्णिमाममावास्यां वा प्रतिपादयतः।

तत्रापि—'यात्येकतोऽस्तशिखरं पतिरोषधीनाम्' इति पद्येन

पूर्णिमैवेत्यनुमातुं शक्यते। किञ्च द्वितीयाङ्के 'रात्रौ निकामं शयितव्यं नास्ति' इति वदतो विदूषकस्य वाक्येन दशम्यां दुष्यन्त आश्रमं प्रविष्ट इति ज्ञायते। अतश्च शुक्लपक्षदशम्यामाश्रमं प्रविश्य दुष्यन्तः पूर्णिमापर्यन्तं षट्दिनान्याश्रमेऽवस्थाय कृष्णपक्षस्य प्रतिपत्तिथौ प्रातरेव नगरं प्रति प्रतस्थ इत्यभ्यूहितुं शक्यते।

शिष्य :—गहनोऽयं विषयः। यावदेनं न परिचिन्तयामि तावन्मे मनः न प्रसीदेत्।

गुरु :—सम्यक्परिचिन्तय, इतोऽप्यधिको विषयः परिज्ञायेत ॥

---

## मूकाम्बाष्टकम्

लेखकः एम् राजगोपालाचार्यः बि, ओ, एल्; संस्कृत कालेज् उडुपि,

मातर्लक्ष्मि! नमोऽस्तु ते भगवति श्रीरामसम्भाविते
प्रातर्दीधितिमन्मयूखविकसद्राजीवपीठस्थिते।
सङ्गीतामृतसारपानरसिके जाम्बूनदाभे शुभे
गङ्गावर्तसनाभिनाभिकुहरे मां पाहि शोणाधरे ॥ १ ॥

सिन्दूरारुणरम्यफालतिलकामिन्दिन्दिराभालकां
मन्दारप्रसवोपगूढसुगलां सौन्दर्यसीमावनिम्।
इन्दोः स्फार विलास हारि वदनां मन्दस्मितामिन्दिरां
कन्दर्पप्रियमातरं सुरदनां वन्दे मुकुन्दप्रियाम् ॥ २ ॥

वीणा स्फालनणोल्लितास्यकमलामुत्फुल्लनेत्रोत्पलां
स्मेरास्यां मणिकर्णिकांशुविकसद्गण्डस्थलोल्लासिनीम्।
लीलापाङ्गविलोकनां सुजघनामारक्तबिम्बाधराम
त्रुट्यद्दाडिमबीजतुल्यदशनां वन्देऽनिशं शारदाम् ॥ ३ ॥

श्वेताम्भोजनिवासिनीं सुरधुनीकल्लोलमालाचलत्-

डिण्डीरोपमचारुशुभ्रवसनां कल्हारमालाधराम् ।
प्रेङ्खत्कुण्डलशोभिगण्डफलकां वीणानिनादोद्यतां
भक्तौघार्तिहरामभीष्टफलदां वन्दामहे शारदाम् ॥ ४ ॥

हेरम्बाननपीडितस्तनभरां कादम्बवाटाचरीं
रोलम्बावलिनीलकुन्तललसच्चन्द्रार्धकम्रालिकाम्
प्रालम्बामलतारहारविलसद्वक्षोजकुम्भां शिवां
मूकाम्बां प्रणतोऽस्मि खण्डपरशोः प्राणप्रियां सादरम् ॥ ५ ॥

वीणामण्डितपाणिपद्मयुगलां नीलोत्पलोत्तंसिकां
वाणीवल्लभवासवादिदिविजस्तोमैः समासेविताम् ।
एणाक्षीमनुमेयमध्यविरुवत्काञ्चीकलापाञ्चितां
स्थाणोरर्धशरीरचौर्यनिपुणां मूकाम्बिकां भावये ॥ ६ ॥

हस्तोद्भासिरथाङ्गशङ्खवरदाभीतिं सुधांशुद्युतिं
स्रस्तांसां हरिनीलरत्नरशनां ह्रींकारबीजाक्षराम् ।
लीलाकीरविनोदिनीं दिविषदामिष्टप्रदाने रतां
लोलाक्षीं परिचिन्तयामि मनसा मूकाम्बिकां सन्ततम् ॥ ७ ॥

व्योमस्पृक्कुटजाद्रिजातसरितः सौपर्णिकायास्तटे
कोलर्षिप्रमुखैर्मुनीशनिकरैः भक्त्या समासेविता ।
माद्यन्मूकविदारणातिनिपुणा शुभ्रांशुबिम्बानना
श्रीकोल्लापुरवासिनी दिशतु मे श्रेयस्ततिं सर्वदा ॥ ८ ॥

॥ श्रीः ॥

# स्वतन्त्रभारतोदयः

भारतमहिमानुवर्णनं नाम प्रथमा विंशतिः ॥

[ म० म० कृष्णमूर्तिशास्त्रिप्रणीतः ]

श्रीमत्काञ्चीकामकोटिमठाधिपसमाज्ञया ।
मद्रास्थानकविः कृष्णमूर्तिः कुर्वे कृतिं मुदा ॥

( १ )

वन्दे भारतमातरं स्मृतिपथप्राप्तां प्रभाते सतां
निस्सीम्नि स्वमहिम्नि च स्थितिमतीं नित्यं स्वतन्त्रात्मिकाम् ।
द्वीपारण्यसरित्सरोवरगिरिश्रीलास्यरङ्गस्थलीं
ज्ञानाचार्यतयान्यदेश्यमहितां स्वर्गादपि ज्यायसीम् ॥

( २ )

स्वातन्त्र्यं जन्मसिद्धं स्फुरति सुकृतिनां भारते जन्मभाजां
आचाराणां कलानां प्रचितचरतया प्राक्तनी संस्कृतिर्नः ।
सर्वज्ञः सर्वशक्तः प्रभुरिह भगवाञ्श्रीहरिः स्वावतारैः
धर्मान्स्थास्नून्वितन्वन्व्यजयत महितः सज्जनत्राणहेतून् ॥

( ३ )

मन्विक्ष्वाकुमुखान्विधाय धरणे भर्तॄन्नृषिभ्योऽधिकां –
स्तेभ्यश्चोपदिदेश शासनविधीन्वेदानिव ब्रह्मणे ।
अन्यत्रेव सहेत नैव भगवान्धर्मच्युतिं भारते
यत्प्राप्तेऽवसरेऽवतीर्य बहुधा रक्षत्युदग्रश्रमः ॥

( ४ )

सर्वज्ञाः कपिलादयोऽपि मुनयो विप्रत्यपद्यन्त चे—
तत्त्वेषु श्रुतिबोधितेषु गरिमास्माकं श्रुतीनां कियान्।
मन्वादिस्मृतय श्चतुर्दश शुभा विद्याः कलानां चतुः—
षष्टि र्व्याससनिबन्धनादिकमिमे मातुः श्रुतेर्विस्तराः॥

( ५ )

श्रीमच्छङ्करदेशिकेन्द्रकृतयः श्रुत्यन्तदुग्धोदधे—
रुद्भूता हि सुधा स्तदीयकृपया स्पर्धिन्य उच्चैस्तराम्।
श्री रामानुजसद्गिरः सुमधुराः श्रीमध्वसत्सूक्तयः
त्र्य्येषा खलु भारतं त्रिपथगेवान्या पुनीतेतमाम्॥

( ६ )

श्रीमद्भारतमेकमेव महिमप्रख्यापकत्वादलं
यद्भाषान्तरितं बुभुत्सितमभूद्रष्याजनानामपि।
वाल्मीकिप्रभवं रसोर्मिलतरं जागर्ति रामायणं
पीतं केन न पार्थसारथिमुखाब्जोद्गीतगीतामृतम्॥

( ७ )

बुद्धःप्रादुरभूदिहैव भगवान्यस्याद्भुतप्रक्रियं
सर्वैरादृतमुच्चकास्ति च मतं प्रायो बहिर्भारतात्।
अत्रैव द्रविडप्रबन्धसमयाचार्याश्च जाताःसमे
नैकोक्त्या किमिहैव नास्तिकमतञ्चापि व्यभान्निर्भयम्॥

( ८ )

मान्धाता शिबिचक्रवर्त्युरुकृपः कीर्त्यौ ययातिर्नलः
रामो दाशरथिर्युधिष्ठिरनृपश्चान्येऽर्कसोमोद्भवाः।
यस्माद्बुद्धमतामरद्रुरफलत्सम्राडशोकोऽप्यसौ
कौटल्योद्बलचन्द्रगुप्तनृपतिश्चैतेऽत्र जन्माभजन्॥

( ९ )

अत्यन्ताय विशालमानसतया श्री भारतोर्व्यां प्रजाः
निश्शङ्कं दिदिशुश्च कृस्तुमहमद्वत्मानुगानां पदम् ।
क्रिस्तोर्बै बिलितिप्रसिद्धनिगमे माहम्मदीयागमे—
प्युद्दीप्राः सुमतिप्रदाः सुविषयाः सन्तीति निश्चायिकाः ॥

( १० )

ख्यातया स्थास्नुषु कालिदासभवभूत्यादिष्वजस्रं स्फुर—
त्स्वेते भारतमातुरर्भकतया ज्ञानैकलुब्धाः परम् ।
सम्यक्त्वं कविषेक्स्पियरकृतिचयं दोर्भ्यां गृहीत्वादरा—
त्सन्तुष्यन्ति मनीषिता सहृदया नाभारतीया ध्रुवम् ॥

( ११ )

देवैः संव्यवजह्रुरत्र कतिचिद्राजर्षयोऽश्रौष्म त—
ज्जिष्णोः पङ्क्तिरथोऽपि साह्यमतनोदित्थंप्रभावा व्यभुः ।
दघ्नोऽन्नं हविरध्वरे सुरपतिर्वर्णत्यसौ हर्षितः
सम्बन्धोऽयमनश्वरः सुरुचिरा देशान्तरे ह्यश्रुतः ॥

( १२ )

चातुर्वर्ण्यकृते पृथक्पृथगृषिश्रेष्ठाश्च धर्मान्व्यधुः
येषूच्चावचता कदापि न सतामिष्टा च वर्णेष्विव ।
देशक्षेमविधौ स्वधर्मचरणं न प्रातिकूल्यं वृजे—
त्स्वातन्त्र्यं परिदीपयेदपि समीक्षायां विभायादिदम् ॥

( १३ )

धर्मं वर्मसमं चरन्ति सुगतेः प्राप्त्यै भृशं श्रद्धया
त्यागायैव समर्जयन्ति सुपथि द्रव्याणि भूरिश्रमैः ।
सन्तत्यै गृहमेधिनोऽपि न जहत्यानन्दमन्तर्भवं
ज्ञानैश्वर्ययुजां चकासति वराः सर्वे जना भारते ॥

( १४ )

शेषोऽशेषविदादृतर्षिवपुषाऽकार्षीन्महाभाष्यमु-
द्दीप्रं भूरिगभीरभावसुभगं शब्दैः प्रसन्नं भृशम्।
भाष्याम्भोनिधिपारदृश्वसु महान्कील्हारनाख्यः सुधीः
नैकैः शिष्यगणैः सदैव वृत इत्यश्रौष्म कौतूहलात्॥

( १५ )

व्याख्यन्नाङ्ग्लगिरा हि नः श्रुतिगणान्माक्समुल्लराद्या बुधा
आजीवं विहितश्रमा अपि च बुड्राप्मन्त्रशास्त्रं तथा।
अस्मद्भारतवर्षगौरवसमुत्कर्षो हि पूषोपमः
लोकव्यापितया प्रदीप्यत इति स्पष्टं समेषां भुवि॥

( १६ )

स्वोपज्ञामरिदुर्ग्रहां च गहनां नीतिं प्रयुज्य द्विजः
चाणक्योऽवितथप्रतिश्रवभरः संहृत्य नन्दान्नव।
राजानं खलु चन्द्रगुप्तमकरोन्नैच्छत्स्वयं शासितुं
पारार्थ्यैकपरा व्यभुर्द्विजवरा वैराग्यतोऽभ्युन्नताः॥

( १७ )

धर्माचार्यान्कति कति बुधान्राजनीत्याः प्रबन्धॄन्
धर्म्यान्वात्स्यायनमुनिमुखान्प्रथ्नतः कामभोगान्।
जीवन्मुक्ताञ्जनकभरतादींस्तथादर्शभूता-
नुत्पाद्यैषा त्रिभुवनमहो! भारतक्ष्मा प्रशास्ति॥

( १८ )

शक्ताः कर्तुमकर्तुमन्यथयितुं ब्रह्मर्षयोह्यद्य त-
न्विश्वामित्रमुखाः कठोरतपसो येषामुदन्तो बहुः।
इन्द्राद्याश्च परीक्ष्य यत्र बहुधावज्ञातिमीयुः परां
पातिव्रत्यमपि स्फुरत्तदभवद्वामभ्रुवां भारते॥

(१६)

गच्छन्दिक्षु विदिक्षु विश्वविजयी वीरः सुराजा रघुः
यज्ञे विश्वजिति व्ययीकृतधनो देहावशिष्टोऽपि सन् ।
नेत्युक्त्यज्ञतया विजित्य धनदं स्वीकृत्य तस्माद्धनं
गुर्वर्थं परमर्थिने बहुविदे प्रादाच्च तत्काङ्क्षितम् ॥

(२०)

तातं कौशिकयज्ञरक्षणकृते राज्यं पितुर्वाक्यतः
राज्यार्थाय सुगर्भिणीं स्वदयितां साध्वीञ्च रामोऽत्यजत् ।
मूर्तस्त्याग इव स्फुरन्नभयदः सर्वेभ्य उत्स्तूयते
लङ्कायाञ्च विभीषणेन हिमवत्यद्यापि वातोद्भुवा ॥

(२१)

प्रास्तोष्टैकमहाकविर्निजकृतिष्वस्त्युत्तरस्यामिति
प्रालेयाचलमुत्तरावधिमहो ! सर्वस्वयन्नात्मनः ।
एकैकापि च भारते जनिमती संस्कारसाध्वी प्रजा
स्वासृङ्मिश्रितदेशभक्तिमहिता मानेन चाभ्युन्नता ॥

(क्रमशः)

राष्ट्रकवि महामहोपाध्याय के० एस० कृष्णमूर्तिशास्त्री मद्रास



# "अस्मदार्थिकी परिस्थितिः"

ले० पं० पट्टाभिरामशास्त्री, (शास्त्ररत्नाकरः विद्यासागरः)
विश्वविद्यालयाध्यापक : कलकत्ता

यस्मिन्नेव देशे जनाः पर्याप्तानि वासगृहाणि, पौष्टिकमशनम्, आवश्यकानि च वसनानि विन्दन्ते तस्मिन्नेव देशे आर्थिकी परिस्थितिरुत्तमेति परिगण्यते। भारतवर्षस्यार्थिकी परिस्थितिस्साम्प्रतं विषमा विलोक्यते। कथञ्चिदवाप्तेऽपि स्वातन्त्र्ये न कोऽपि सुखी समवलोक्यते। नैकविधैः करैः पिशाचतुल्यैस्सर्व एव ग्रस्ताः। पदार्थानां मूल्यन्तु प्रतिनिमेषं विषवद्वर्धमानमेव वर्तते। जीवनोपायमलभमाना जनास्सुभृशं क्लिश्यन्ति। शलभा इव दीपं मोहेन ग्रामनिवासिनस्सर्व एव प्रायो ग्रामान् परित्यज्य नगरं शरणं गच्छन्ति। पर्याप्तानां वासगृहाणामलाभेनानावृतप्रदेश एव राजवीथीनां पार्श्वयोः सस्त्रीकाः सापत्याश्च जनाः शेरते। प्रायस्सर्व एव बुभुक्षिताः। तनुमाच्छादयितुं पर्याप्तानि वस्त्राणि न लभ्यन्ते। लभ्यमानेष्वपि वस्त्रेषु खाद्यपदार्थेषु च तेषां क्रयणं लोकानां दुःशकमेव।

देशस्य कर्णधारा अपि चर्विताद्रकाः शाखामृगा इव द्वितीयपञ्चवार्षिकयोजनामयथाक्रममारभ्यार्थाभावेन नेत्राण्युन्मीलयन्ति। विना दैन्येन खलु जीवनं श्रेयो भवति। दन्तान् प्रकटय्य दैन्यञ्चाविष्कृत्य नाना-देशेभ्य ऋणग्रहणमात्रेण न कृतकृत्यता। ऋणदातारस्तु देशस्य विस्तारं जनानां संख्याधिक्यञ्च विलोक्य द्रव्यं दद्युः। किन्तु तच्छोधनं ते न कुर्युः। तत्तु कर्तव्यमस्माभिरेव। न चेत्क्रियेत पुनरपि तदेव पारतन्त्र्यम्। अङ्गुल्यनुसारी हि श्वयथुः शोभायै भवति। गलरज्जुं विहाय पुच्छं ग्रहीतुमिच्छन्ति कर्णधारा अस्माकम्। गु

प्रक्षालनात्पूर्वं मुखप्रक्षालनं न समुचितम्। यत्प्रथमं कर्तव्यं तदेव प्रथमं सम्पादनीयम्। क्रमस्य वैपरीत्ये सति सर्वं विपरीतमेव भवेत्।

अस्मद्देशस्य किमनुकूलम् किं चोचितम् इति प्रथमं निश्चित्यानन्तरं योजनासु यत्नः कर्तव्यः। देशान्तरस्य भारतस्य च भूयान् भेदः। दुर्दैववशेनाङ्गलानां शासनसमये ते भारतीयान् आङ्गलांश्चक्रुः। कथमपि दैवस्य साहाय्येन स्वातन्त्र्यमवाप्यापि वयं बुध्या आचारेण शिक्षया भाषया चाङ्गला एव भवेम हन्त! नेतः किञ्चिदन्यद्-दुःखम्। चतुष्पाद्भिरस्माभिर्न भवितव्यम्, किन्तु चतुष्पाद्भ्यः शिक्षाऽवाप्तव्या।

'यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून् मृषा
नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः'॥

इति पद्यादस्माभिः शिक्षावाप्तव्या।

यदा स्वायत्तो राजा सचिवायत्तो वा राज्यं परिपालयति स्म, तदा सर्वासामेवानिष्टपरम्पराणां स एव वाच्योऽभवत्। सम्प्रति तु राज्ञां शासनं विलयं गतम्। जनतन्त्रं शासनं हीदानीम्। जना वा भवन्तु, जनैर्वा नियुक्तास्सचिवा भवन्तु उभयेषामेव हस्ते देशस्य भाग्यनिर्णयो वर्तते। स्वातन्त्र्यमवाप्य लीलयैव दशवर्षाणि व्यतीतानि, कापि समुन्नतिर्देशस्य नोपलक्ष्यते। जना मन्यन्ते-वयं शास्याः, देशस्य समुन्नतये वयं किं कुर्म इति। शासकाश्चाभिप्रयन्ति-जनानामस्माभिः क्रियमाणे कार्यें सहयोगो नास्तीति।

तथ्यञ्चेदम्—यावत्प्रजानां सहयोगो न भवति, तावत्केवलमधिकारेणाधिकारिभिः किमपि कर्तुं न शक्यत इति। परञ्चेदमपि मिथ्या भवति-यदधिकारमोहेनाधिकारिणः वस्तुयाथात्म्यमनवबुध्यानिश्चितमतयो जनानामुद्वेजकानि नष्टप्रदानि च कार्याणि स्वमनीषानुसारं समारभन्त इति। असंख्याकानां मुद्राणामपव्ययो दुर्व्ययो वाऽधिकारिभिः क्रियते। [illegible] च विषयस्या-

ध्ययनाय परीक्षणार्थं वा देशान्तरं जनमण्डलं प्रेषयन्ति। उन्मेषं निमेषं वा क्षुतं जृम्भां वा निमित्तीकृत्याकाशयानेनेतस्ततः परिभ्रमणमाचरन्ति। जनानां किं किं कष्टमिति न परिशीलयन्ति। परिशीलयन्तोऽपि तन्निवारयितुमवकाशं न लभन्ते। मुद्रास्फीतिं निवारयितुं मितव्ययैर्जनैर्भाव्यमित्युपदेशमात्रेण जनेषु मितव्ययिता न समापतेत्। साकमुपदेशेन स्वस्याचरणमपि तथा परिवर्तनीयम्। जडविज्ञानैः कसमुन्नतया देशस्य कल्याणं न सिध्येत्। भूयो भूयो नगराणां वर्धनेनैव देशस्यसमुन्नतिः न भविष्यति। जनपदानां ग्रामाणामभिवृद्धिः प्रथमं सम्पादनीया। जनपदास्तु रत्नानां निधयः, सुवर्णस्य खनिः धान्यानामाकरः। साम्प्रतं जनपदेषु जना न सन्ति, किन्तु श्वानः परिभ्रमन्ति। यथाहि जनपदनिवासो जनानां रुचिकरस्स्यात् तथा प्रथमं सम्पादनीयम्।

देशनिवासिषु जनेष्वपि भूयांसो दुर्गुणा अनुभूयन्ते। क्षुच्छमनायैव भोजनम्, न जिह्वाचापल्यं पूरयितुमिति जनैर्निश्चेतव्यम्। साध्यानुसारेण हि साधनानि नीयन्ते। प्राचीनैरवलम्बिते पथि गन्तुमभ्यासः कर्तव्यः। प्राचीनास्तण्डुलानेव विश्वस्य न जीवनं यापयाम्बभूवुः। वरकान् कोद्रवांश्चोपयुञ्जानाः पुष्टा अभवन्। तत्र तत्रोपलभ्यमानानां धान्यानां यवागूं लेह्यं चोष्यञ्च सम्पाद्योदरं पूरयन्ति स्म। शरीरेण बुद्ध्या च पुष्टा एवासन्। यत्र व्रीहयो न लभ्यन्ते नोत्पद्यन्ते वा तत्र ते गोधूमान् यवान् मुद्गान् चणकांश्चापि उपयुञ्जते स्म। एकाक्षरस्य (टी) द्व्यक्षरस्य (काफ़ी, कोको, ओवल) वा सेवनं तैर्न कृतम्। एतेषु पानेषु गुणहीनेषु यावान् व्ययो द्रव्यस्य भवति, तावता द्रव्येण कथञ्चित्कुटुम्बनिर्वाह एव कर्तुं शक्यते। इमानि द्रव्याणि भारते उत्पद्यन्ताम् उत्पाद्यन्तां वा किन्तु तानि देशान्तरप्रेषणेन ऋणशोधने साहाय्यं कर्तुं शक्यते। पटाटोपेनाडम्बरेण वा जीवनमुत्कृष्टं न भवति। अस्मद्देशे विद्यमानां शीतोष्णस्थितिमवलम्ब्य वस्त्राणां परिधानमस्माभिः कर्तव्यम्। पाश्चात्यदेशेषु शिरसि शूर्पसदृशः (हैट्) पदार्थः, गले न गलबन्धिनी

(नेकूटै) जनैर्धार्यत इति नास्माभिरपि तद्धारणीयम् । स्वस्वदेशानुसारेण वसने परिधीयमाने मितव्ययिता स्वयमेवागमिष्यति ।

एवमाहारे वसने च मितव्ययिनो जना यदि भवेयुस्तर्हि तान् विलोक्य शासकानामपि चित्तं परिवर्तितं स्यात् । 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इति हि भगवानुपदिशति गीताचार्यः ।

## देवीनवरागमालिका

लेखकः—एम, राजगोपालाचार्यः, वि, ओ, एल्, संस्कृत कालेज् उडुपि ।

तारापतिमनोज्ञास्ये ! कोरालापप्रियेऽनिशम् ।
मारारातिद्वितीये श्री नारायणि नमोस्तुते ॥१॥

मातङ्गमन्दगमनां सारङ्गायतलोचनां ।
उत्तुङ्गपीनवक्षोजां मातङ्गीं समुपास्महे ॥२॥

वारिजारक्तचरणे शारदाम्बुजलोचने ।
हारोद्भासिकुचद्वन्द्वे चारुकेशि नमोऽस्तुते ॥३॥

सुहासकान्तवदने महादेवमनोहरे ।
गुहैकदन्तजननि साहाय्या भव सर्वदा ॥४॥

खण्डितासुरसन्दोहे चण्डदैत्येशभैरवि ।
गण्डस्थलजितादर्शे चण्डिके कुरु मे शुभम् ॥५॥

धन्यासिधेनुकाकृत्तरक्तबीज शिरोधरा ।
कन्या प्रालेयशैलस्य हन्यान्मे पापसञ्चयम् ॥६॥

वाहनीकृतपञ्चास्ये मोहनापाङ्गदर्शिनि ।
गणनातीतमाहात्म्ये देहि मे सर्वसंपदम् ॥७॥

पृदाकुरञ्जितश्यामकण्ठस्य प्रिय भामिनि ।
मदालोके हि वर्तस्व सदा शैलेन्द्रनन्दिनि ॥८॥

श्रीरागभूषिते नित्यं सैरिभासुरसूदने ।
सूरिभि र्वन्दिते देवि सारसाक्षि नमोऽस्तुते ॥९॥

—०—

Regd. No. B. 7171

# मधुरवाणी नियमावली

ये पंच नवीनग्राहकान् सम्पाद
न्ति तेभ्यः विना मूल्यं मधुर-
ाणी पत्रिका प्रेष्यते ।

वर्षे यदाकदाचिदपि वा ग्राह
त्वं स्वीकर्तुं शक्यते । यदा ग्राह
ता स्वीक्रियते तद्दिनादारभ्यैव
र्षपर्यन्तं द्वादशसञ्चिकाः प्रदी
न्ते ।

विना मूल्यं आदर्शसंचिका न
हीयते । अवलोकनार्थं संचिका
पेक्षमाणैः अष्टाणक पोष्ट-
कीट प्रेषणं कार्यम ।

व्हि॰ पी॰ द्वारा पत्रिका नैव
्यते । प्रतिवर्षं वर्षारंभे मनि-
र्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसा-
ेत प्रकाश्येरन् । असुवाच्या-
राः नीरसाः दीर्घतराकाराः
ठिणतमाश्च लेखा नैव अवसर-
ासादयेयुः । सरलतमानां लेखानां
थमप्रोशस्त्यं प्रदीयते ।

**Book-Post**

To,

Shree *11 Sept* ________

If addressee is not found
please return to sender.

**पंढरीनाथाचार्य गलगली**

संपादक मधुरवाणी

मधुरवाणीकार्यालय, गदग (कर्नाटक)

inted at the New Gadag Printery Gadag, by P. S. Hombali
d Published by Pandharinathacharya Galagali at Gadag.

जगद्गुरुश्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर आश्विनाङ्कः १९५८ अक्टूबर

प्रधान संपादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार

राजा एस. गुरुराजाचार्याः



संपादकाः

गलगलीत्युपाव्हाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु० ५  एकाङ्कस्य ०-८-०

## मङ्गलम्

पद्मापाणिजिघृक्षया हि जरतीछद्माकृतिं प्रोद्वहन्
सद्माकाशनृपस्य चैत्य सुदतीपद्माच्छपाणिं स्पृशन्
रोमाञ्चोद्गमकञ्चुकाञ्चिततनुः संचिन्त्य किंच क्षणात्
मायावी मुदमन्यथैव हि विवृण्वानः श्रियै श्रीपतिः

किं पौलिन्दपुरन्ध्रि मत्करमिदं दृष्टैवव तोषस्तव
न्वैतत्स्पर्शनमात्रतस्तव कुतो वाऽम्भोदरोमोद्गमः
भूयः किञ्च कराञ्चलं मृदु स्पृशस्येवं नुपद्मावती-
प्रश्नैर्या चकिता किरातकुहनास्थूणार्तिहाणाय नः।

कन्ये धन्यतमा रमाकृतिसमा त्वं श्रीनिवासंपतिं
तीव्रं विन्दसि तेन नन्दसि दिवो भोगान् मुदानिन्दसि
तद्भव्यं किल भाविभाग्यमखिलं ते हस्तरेखास्विह
दृष्ट्वा स्पष्टमगां च तुष्टिमिति तच्छंसन् मुदे श्रीहरिः।

## मासावतरणिका

विश्राम्यत्यधुनापि नाम्बुदकदम्बाडम्बरो न्वम्बरे
कष्टं नष्टमजस्रवृष्टिरधिका सृष्टेः सरीसर्ष्टि च
नो तारा न शशी रविर्न विमला द्यौर्दुर्दिनं सन्ततं
वर्षर्तुः शरदं बलात्कलिखलः साधूनिवाक्रामति।

## गुरुस्तुतिः

यन्नामाक्षरमध्यभागविलसत्तीर्थाक्षरप्रोक्षिताः
वैराग्यामल भक्ति शान्ति सुतपोज्ञानादि प्रोच्चाटिताः
कामक्रोधमदादि दुर्गुणमहाभूताः पिशाचाः क्षणम्
यच्छायामपि न स्पृशन्ति तमहं श्रीसंयमीन्द्रं भजे।

# मधुरवाणी

२३ वर्षे । विलम्बि संवत्सर आश्विन मास सञ्चिका । अङ्कः ७

## वेदे हरिश्चन्द्रोपाख्यानम् ।

पुराणवर्णितं हरिश्चन्द्रचरितं सर्वप्रसिद्धम् । तदिदं वेदेषु कीदृशं वर्तत इति केषाञ्चित् कुतूहलनिवृत्तये यथाप्राप्तं संक्षेपेणोदाह्रियते । इदं हरिश्चन्द्रोपाख्यानम् ऐतरेयब्राह्मणे ३२ द्वात्रिंशेऽध्याये विद्यते । तचेदमित्थम्—

इक्ष्वाकुवंशोद्भवस्य वैधसस्य (वेधोनृपतेः पुत्रस्येति सायणः) राज्ञो हरिश्चन्द्रस्य किल शतं जाया बभूवुः । तासु तस्य नैकोऽपि पुत्र-उत्पेदे । अथ कदाचिद् ऋषी पर्वतनारदौ तद्गृहं प्रापतुः । हरिश्चन्द्रो नारदं पप्रच्छ —हे नारद, दृश्यते—विवेकिनो देवमनुष्यादयः अविवेकिनः पश्वादयश्च सर्व एव पुत्रमिच्छन्ति, तत्कथय किं नाम फलं पुत्रेण लभ्यत इति । नारद :—

"ऋणमस्मिन् संनयत्यमृतत्वं *च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥"

इत्यादिभिः दशभिर्गाथाभिः सप्रपञ्चं पुत्रस्योपकारित्वमाख्याय तल्ला-

* अमृतत्व मुक्तिपदम्, "पुत्रार्पित-लौकिक-वैदिकभारस्य अविघ्नेन तत्वज्ञानसम्पादनादिति" सायणः ।

भाय वरुणप्रार्थनरूपमुपायं राज्ञे उपदिदेश। सोऽपि तदनुसृत्य पुत्रो मे जायतां भगवन् वरुण तेनाहं ते यागं कुर्य्यामिति तं प्रार्थयामास, लेभे च तत्प्रसादेन रोहितनामानं पुत्रम्।

उत्पन्न एव पुत्रे राजानं समागत्य वरुणः "अजनि वै ते पुत्रो यजस्व मामनेने"त्युवाच। अशौचदिनेषु अनतीतेषु पुत्रो यागार्हो न स्यादिति हरिश्चन्द्रेण तानि दिनानि प्रतीक्षितुं प्रार्थितो वरुणस्तदानीं प्रत्यावृत्त्य अशौचदिनानन्तरं राजानं पुनरुपससर्प—"यजस्व मामनेनेति।" असति दन्तोद्गमे पशुर्मेध्यो न भवतीति हरिश्चन्द्रस्तदानीमपि यागाकरणे हेतुमदर्शयत्। उद्गता रोहितस्य दन्ताः, 'यजस्वेति' वदन्नुपागतो वरुणः। यागाकरणे राज्ञा पुनरपि हेतुर्दर्शितो यत् रोहितः क्षत्रियः, क्षत्रियश्च यावत् 'सांनाहुकः' (स्वजात्युचित धनुर्बाणादिसंनाहवान्) भवति, न तावन्मेध्यो भवति। तत् तावान् कालः सहनीयः। रोहितो धृतसंनाही बभूव। वरुणः पुनः प्रत्याजगाम। अनन्यगतिको हरिश्चन्द्रः पुत्रमामन्त्र्योवाच—"अयं वै मह्यं त्वामदात् हन्त त्वयाहमिमं यजा इति" (यागं करवाणीत्यर्थः)। "स (रोहितः) नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ, "संवत्सरमरण्ये चचार" च। इतः कुपितो वरुणः उदररोगरूपेण हरिश्चन्द्रं जग्राह। तदिदमाकर्ण्य पितरं दिदृक्षू रोहितः अरण्यादागच्छन् पथि ब्राह्मणरूपेण इन्द्रेण 'अरण्यवास एव ते युक्त इत्ति विविधैर्वाक्यैर्निवेदितः, तद्वचसि बहुमानात्पुनरेकं वत्सरमरण्य एव न्यवसत्। वत्सरान्ते पितृदर्शनार्थमागच्छन् स पुनरपि इन्द्रेण तथैव बोधितः सन्नरण्यं प्रतिजगाम। एवमेव प्रतिवत्सरं पितृसमीपमाजिगमिषुरपि रोहितः इन्द्रेण निवारितः षड् वर्षाणि अरण्ये विचचार। अथ स पर्य्यटन्नरण्ये कदाचित् क्षुधातिविधुरम् अजीगर्त्तनामानं कमपि ऋषिं ददर्श। तस्य शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गूल इति त्रयः पुत्रा आसन्। क्षुत्पीडितोऽयमर्थेन नूनमेकं पुत्रं विक्रीणीयादिति वरुणादात्मनो मुक्तिमिच्छु रोहितः तमृषिं शतं (गवाम्) प्रदाय शुनःपुच्छादिष्वेकं ययाचे। पितुरधिकप्रियत्वात् ज्येष्ठः शुनःपुच्छः, मातुरधिकप्रियत्वाच्च कनिष्ठः

शुनोलाङ्गूलो न विक्रयार्होऽभवत्, ततश्च मध्यमः शुनःशेप एव विक्रीतः। रोहितस्तमादाय हर्षोत्फुल्लः पितरमेत्योवाच, 'तात एतमेव वरुणाय दत्त्वाहम् आत्मानं तस्मान्मोचयिष्यामीति।' हरिश्चन्द्रस्तद् वरुणाय न्यवेदयत्। वरुणोऽपि "भूयान् वै ब्राह्मणः क्षत्रियादिति" स्वीकृतवान्, राजसूययज्ञानुष्ठानं चादिष्टवान्। हरिश्चन्द्रस्तदनुसरन् तदन्तःपातिनि सोमयागे शुनःशेप एव पशुर्भविष्यतीति निश्चितवान्।

हरिश्चन्द्रेण राजसूय आरब्धः। तत्र वसिष्ठ-विश्वामित्रादयो महर्षय ऋत्विजो बभूवुः। पशुः शुनःशेपस्तावदुपकरणेन संस्कृतः। अथ तस्य यूपे बन्धनमावश्यकम्। तच्चातिकठोरमिति न कोऽपि प्रथमम् ऋत्विजां तत्रोद्युक्त आसीत्। अथ अजीगर्त्तः (शुनः शेपस्य पिता) 'यदि मे साम्प्रतमपरं शतं दीयेत, तर्हि अहमेव पशुभूतं शुनःशेपं यूपे बध्नीयामि' त्युवाच, लब्धतद्धनश्च यथोक्तं चकार। पशोर्बन्धनानन्तरं तस्य वधोऽपेक्षितः। पुनरपि पशुवधार्थं न कोऽपि तावत् क्रूरतमो जनो लब्धः। अथ अजीगर्त्त एव पूर्ववदपरं शतं (गवाम्) लब्ध्वा वधार्थमपि खड्गमादाय समुद्यतोऽभवत्। शुनःशेपस्तु तपस्वी अनन्यगतिकः स्वरक्षणार्थं प्रजापतीन्द्रवरुणादीन् स्तोतुमारेभे। अथ स्तुतप्रसन्नस्य वरुणस्य प्रसादात् स बन्धनपाशात् सहसा मुक्तो बभूव। हरिश्चन्द्रस्य च उदररोगः क्रमाद् विननाशेति।



प्रेमभग्नः पुमान् भूयात् ब्रह्मचार्यथवा यतिः
प्रेमभग्ना तु नारी स्यात् सद्यः परिणयोद्यता ॥

पत्यौ स्त्री त्रीन् गुणानिच्छेद् ईक्षितुं सुन्दरो भवेत्
रक्षितुं धनिकःस स्यात् शिक्षितुं मां च शक्तिमान्"

# आदर्शः पतिः ।

केशवस्य पत्नी इन्दुमती मरणशय्यायां शयाना आसीत् । भिषजो यथोचितं स्वस्य प्रयासं विधाय प्रतिनिवृत्ताः । द्वित्रघटिकातो नात्यधिकं तस्या आयुर्विद्यते इति रोदननिरताः स्वजनबन्धवो मुमूर्षुं परितोऽतिष्ठन् । सा तु तान् प्रति मन्दं मन्दं नयनं पातयन्ती पुनरपि प्रत्यावर्त्तयितुमारभत । केशवस्य जनकस्तस्या हृदयभावमुन्नीय तनयमाहूयाकथयत्-"केशव, वयं बहिर्गच्छामः, त्वमेवैकस्तावदेनां पर्य्यालोकयेति" सर्वे बहिरगच्छन्, केशवः सहधर्मिण्याः पार्श्वत उपाविशत् ।

इन्दुमती पत्युर्वदनमण्डले निर्निमेषं नयनद्वयमस्थापयत् । केशवोऽवदत् "अपि त्वं मां किञ्चिद् वक्तुमिच्छसि' । इन्दुमती क्षीणकण्ठेन कथं कथमप्यकथयत्—"पुनरपि त्वया परिणयो विधेयः" । केशवस्य नयनयुगलाद् बाष्पधारा प्रवहति स्म । स प्रत्यवोचत् 'मैवं नाहं पुनः परिणयं कुर्य्याम्" । इन्दुमती पुनरप्यकथयत्—"नहि, क्लेशस्ते भवेत्, त्वया परिणयो विधेयः" केशवः सहधर्म्मिण्याः शुष्कयोरोष्ठाधरयोः पञ्चषान् शीतलसलिलबिन्दून् प्रक्षिप्यावदत्—"ननु अपरं किमपि त्वया प्राार्थ्यताम्, प्राणैरपि तदहं साधयेयम्, अयं तु निर्बन्धो न क्रियताम्" इन्दुमती भूयोऽपि शनैः शनैः शनैरेकैकाक्षरमवदत् "कथं त्वं न परिणयेः, यदि नाम परस्मिन्नपि लोके कोपे वा ईर्ष्यायां वाहं प्रभवेयम्, तर्हि कथयामि न मनागपि मम सन्तोषो भवेत् । स्वच्छन्देन त्वं परिणयेः" । केशवः पत्न्याः शिथिलदुर्बलं करं स्वकरतलेन धृत्वाकथयत्—"किमिति त्वमेनं निर्बन्धं करोषि, नाहं पुनः कामपि परिणेतुं शक्नुयाम्" । मुमूर्षोः शुष्काधरकोणयोः किञ्चित् स्मितलेखेवादृश्यत । स्तिमितो दीपः क्षणमुज्ज्वलितश्चिराय निर्वाणतामगमत् । इन्दुमत्याः सा खलु स्मितरेखा पत्युस्तादृशे वचसि अप्रत्ययो[illegible] सन्तोषस्य वेति नावबुद्धमासीत् ।

केशवो वर्त्तमानसमयस्य विंशतिवर्षतः पूर्वमेव बि० ए० इत्युपाधिमलभत। तदानीं हि 'ग्राजुयेट्' (Graduate) नाम्ना प्रसिद्धानां साम्प्रतिकानामिव दौर्भाग्यं नासीत्। इन्दुमत्याः श्राद्धविधिसम्पत्तेः पूर्वमेव पञ्चषाः परिणयसम्बन्धाः समुपस्थिताः। केशवस्तान् सर्वान् प्रीतिमधुरवचनेन प्रत्याख्यातवान्। पारलौकिककृत्यं यथानियमं सम्पन्नम्। दुहितृभारग्रस्ताः पितरः केशवस्य जनकसमीपे स्वस्वाभिप्रायान् प्राकाशयन्। उक्तं तेन "केशवस्य पुनर्विवाहे न मे काचिद्विमतिः किन्तु पुत्रो मे लब्धविद्यः, वयःप्राप्तश्च। अतस्तन्मतमेव ममापि मतमिति विज्ञेयं श्रीमद्भिः। तद्यदि भवद्भिस्तस्य सम्मतिरधिगन्तुं शक्यते, तर्हि सम्पन्नमेव सर्वम्"। ते खलु ग्रामवृद्धाः केशवस्य पितुस्तादृशं तनयाधीनत्वमालोक्य तं गर्हयन्तः केशवसमीपमागच्छन्। केशवः सबहुमानं सविनयं च तान् प्रत्याख्यातवान्। कुपितो वृद्धगणस्तदानीं केशवेन सह तर्कयितुमिच्छन्नपृच्छत्—किमिति पुनस्त्वं न परिणयेः, कस्तत्र हेतुः ?"केशवो हसन् प्रत्युक्तवान्—नास्ति तत्र कोऽपि हेतुः, किमस्माभिरनुष्ठीयमानानां सर्वेषामपि कर्मणां हेतुरस्ति ? तथाच केषाञ्चिदहेतुकानां कृत्यानामिदमप्येकम् इति मन्तव्यम्।" तदिदमाकर्ण्य ग्रामवृद्धास्ते प्रकामं क्रुद्धाः सञ्जाताः। केशवं तत्पितरं च तत्तद्वचनैर्निन्दितुमारभन्त। यदा खलु पितुरिच्छैव शास्त्रमासीत्, तदा केशवपितुः पुत्रं प्रति तावान् प्रश्रयः, केशवस्य च तावतां वृद्धानां कथनाननुसरणं तैदुर्विषहमेवाभवत्। अथ ते केशवस्य पितुः समीपमागत्य तर्जयन्तस्तमकथयन् "अहो आङ्गलशिक्षां प्रदाय सुष्ठु खलु कुलपावनं पुत्रमधिगतोऽसि ! पश्यसि,—देशोऽयं यद्विनाशं गतः। राममुख्योपाध्यायस्य तनयः चन्द्रभूषण आङ्गलशिक्षामधिगतोऽपि न तावत् कुलधर्म्मं व्यस्मरत्। नाधिकं भवतु, तथापि पितुरादेशेन षड् विवाहास्तेन कृताः। यथा तथा भवतु, केशव इव दाम्भिको बालो नास्माभिर्दृष्टपूर्वः विपत्नीत्वावस्थायामपि सत्स्वप्येतावत्सु प्रार्थयमानेषु वृद्धजनेषु सुष्ठु तेन परिणयसम्बधः प्रत्याख्यातः। तत् त्वं स्वतनयं शासितुमर्हसीत्यादि"। वृद्धानां तानि वचनान्या-

कर्ण्य केशवस्य जनको नितान्तं प्रमोदमापन्नः तान् प्रत्यवोचत् "अनिर्वचनीयः खलु कश्चिदानन्दो मे प्रदत्तः श्रीमद्भिः। ज्ञातं मयाद्य पुत्रस्य मे यथार्था शिक्षा सम्पन्ना। तदानीं हि पुत्रो मे मानवशरीरिण्याः मत्स्नुषारूपाया देव्याः समीपे यत् प्रत्यजानात् तत्सम्पालनाय यत् स प्रयत्नमादधानस्तिष्ठति, तन्मां निन्तान्तमेव प्रमोदयति। पुत्रो मे आजीवितं स्वप्रतिज्ञापालनमप्रतिहतं कर्त्तुं प्रभवेन्नवेति न ज्ञायते, परन्तु तत्पालनाय योऽयं तस्य प्रयासः तत एवाहं परं हृष्यामि। भवद्भिरेवायं मङ्गलवृत्तान्त आनीत इति परःसहस्राः साधुवादाः श्रीमद्भ्यः। वृद्धास्ते किमिदमिति विस्मयविस्फारितलोचनाः परस्परवदनमण्डलमालोकयन्तो यथोचितं सम्भाषमाणाः प्रयाताः।

* * * *

दशवर्षाण्यतीतानि। केशवो मृत्युशयनमधिशयानस्य जनकस्य समीप उपविष्टः। वृद्धस्तनयस्तस्य शिरसि करतलं संरक्ष्यावदत् "आयुष्मन् ममाशीरियं ते मङ्गलं विदधातु। वत्स, उपस्थितो मे मरणसमयः, तदिदानीं त्वां किञ्चित् कथयितुमिच्छामि। वत्स, धर्म्मशीलः ईश्वरपरायणश्च भवेः। अस्मद्देशेषु पितृभक्तेर्भूयांसो दृष्टान्ताः सन्ति। त्वं सुशीलो, मयि श्रद्धावांश्च। यद्यन्मया कर्त्तुमीप्सितमासीत्, न सम्पन्नं, तत्सर्वं त्वं जानासि, जानेऽहं, तदखिलं त्वं साधयितुं प्रयतिष्यस इति न तत्र किञ्चिद् विवक्षामि। किञ्चिद् वक्तव्यमस्ति स्मरसि त्वं स्वर्गगामिन्याः देव्या मे स्नुषायाः समीपे किमपि प्रतिज्ञातवान्, वत्स, आमरणं तत् त्वया पालनीयम्। प्रशस्यस्ते स सुविशुद्धः प्रेमा। स खलु मदादेशेन दृढतरो भवत्विति प्रार्थये। उपरते पत्यौ पत्न्या कथमवस्थातव्यमिति सुप्रसिद्धमस्मद्देशेषु, पत्न्यां तु उपरतायां पतिः कथमवतिष्ठेतेति आदर्श इति त्वां सर्वे आलोकयन्तु तत् किमन्यद् ब्रवीमि, वत्स, विश्वतोमुखं ते मङ्गलं भूयात्"।

* * * *

स्थविरः केशवो ब्रह्मचर्य्यमाचरन् मरणसमयं प्रतीक्षते।

# दर्दुरविलापः ।

सूक्तं किल कस्यचित्—“भाग्यं फलति सर्वत्र न विद्या न च पौरुषमिति”। कथमन्यथा—“दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम्” इत्यादीनां परःशतानाम् अस्मदपकर्षसूचकानां वचनानामुत्पत्तिर्भवेत्, कथं वा कार्य्यतोऽपि पामराणामपि निर्गुणेषु कोकिलेष्वेवानुरागादरः, अस्मासु तु सकललोकोपकारिष्वपि रोषकषायितनयननिक्षेपः ।

भद्रं तावद् भोः सकललोकतत्त्वनिष्णाताः, विचारयन्तु कथयन्तु च पृष्टाः निरपेक्षं भवन्तः, को नामायं प्रसाधितो भवतामभिमतोऽर्थः कोकिलहतकैः, को वा हन्त अस्माभिरेव अनुष्ठितः श्रीमतामपकारातिशयः, को नु खल्वस्माकम् अपराधः, येन हि साम्प्रतं जलधरसमये जर्ज्जरकण्ठेष्वपि भग्नस्वरेष्वपि तेष्वेव भवतां बहुमानादरः, न पुनस्तारतारम् अविच्छेदं गायत्स्वप्यस्मासु । अलमेतया कथया । विचार्य्यैव तावद् दृश्यताम्, किं नु कृतं भवतां कोकिलेन ? न तावन्नयनसन्तर्पणम्—कस्य खलु तादृशे कालायसकर्कशकृष्णकलेवरे नयनानुरागः सम्भवतु । न चेतोविनोदनम्, उत्कलिकामेव स उत्पादयतीति भवन्त एव ब्रुवन्ति । न श्रवणानन्दथुः आकृतिदोषेणैव तस्यार्थस्य ग्रस्तत्वात् । “यत्राकृतिस्तत्र गुणा वसन्तीति” महाजनोक्तिः, यस्य आकृतिरेव नास्ति कथं तत्र गुणस्य लेशोऽपि निवसतु । न च किंचिद् ऐहिकं सुखं स सम्पादयति, निपुणं चिन्तयताऽप्यनुपलब्धेः । नापि आमुष्मिकं प्रमाणाभावात्, सर्वस्यैव संसारिणः सुखोदधिसन्तरणप्रसक्तेश्च । न वा पितृलोकानां मनागपि हितं साधयति, साधकाभावात् । अतो मूढतैव जनानां यत् ते कोकिलं तथा मानयन्ति । अतिमौढ्यं च वक्तव्यं कवीनाम् । यदेते अलौकिकत्वेन तथा वर्णयन्तः कोकिलाद् (न पुनः [illegible]) [illegible]पि [illegible]प्रवृत्तेः कार-

णीभूताः। न जानीमः को वा तत्र कोकिलस्वरेषु समास्वादितस्तैः रसः। तन्नूनं यथा पित्तदोषदूषितलोचनः पाण्डुरमपि शङ्खं पीतं पश्यति, इमेऽपि कविम्मन्याः कोकिलस्वरं तद्वदेव पीयूषधारां जानन्ति। सर्वथा धिगेतान् अतथावादिनः। येन हि जनाः तद्दर्शितमेव पन्थानमनुसृत्य "कर्कशस्वरा" इति अस्थान एव आशङ्कमानाः उपकारिणोप्यस्मान् प्रतिपदं विमानयन्ति। मूढाः खल्वेते न जानन्ति यत् तेषामेव कृते कण्ठस्फोटमपि अनपेक्षमाणाः रात्रिन्दिवमुच्चैरुच्चैस्तमां जलधरमाक्रन्दामः। जलादेव हि सम्पत्तिः शस्यस्य, यद् हि प्रधान साधनं जीवनस्य। तदेतस्य जीवनभूतस्य जलस्य प्रार्थनायां निरन्तरं नियुक्ता हन्त वयमेव तेषां विषदृष्टौ निपतिता इति यत्सत्यम् नैतादृशः अकृतज्ञाः जातुचिद् दृष्टचरा द्रक्ष्यन्ते वा। दृश्यताम् इयं खलु युष्माकं प्रतिवेशिनी कृषीवलकुटुम्बिनी तदर्थमेव क्षणं हृदयानुरागेण जलधरं याचमानान् नः कथमहो भ्रूकुटीभीषणेन नयननिक्षेपेण सुदुःसहेन दुर्वादनिचयेन च तर्जयति। कः खलु इदानीमस्माकं गुणं विजानातु। न हि साम्प्रतं स रामो राजा, न वा तद्राज्यम्। यदीदानीं स खलु महात्मा वसिष्ठो जीवितोऽभविष्यत्, तदा बालोऽप्यज्ञास्यत्,—अस्ति कश्चिद् अस्माकं गुणो न वेति। किं किं कथयसि—"कृतं कृतं तवैतेन वाक्प्रपञ्चेन, किमुच्यते—पीयूषवर्षी खलु भवतां कण्ठस्वरः, तत्पार्श्वमपि नार्हन्ति वराकाः कलकण्ठाः, क्षणमपि तावद्विश्रम्यतां, बद्धोऽयमञ्जलिः कृतोऽयमनुनयः, धृतश्चायं निर्बन्ध इति"। मूढ, मनुष्यकीट, कविकुलापसद, कथमेवं निरपराधानप्यस्मानुपहसतस्ते 'सहस्रधा न विदीर्णमनया जिह्वया'। वद रे मूर्ख वद वद कीदृङ् नाम गुणवत्त्वं ते पिकानां, यत्तेषामालम्भनं वेदेषु विधीयते। वयं पुनः सुवाचो वा न वेति वेदः खलु कथयिष्यति। श्रूयतां किं स ब्रवीति—

"यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः

सर्वं तदेषां समृधेव पर्व
यत् सुवाचो वदथनाध्यप्सु" ॥ *
ऋग्वेद. ७म. १०३ सू. ५ऋ.

पश्य रे मूर्ख पश्य अस्मत्तोऽपि किमपि प्रार्थ्यमस्ति न वेति। कियदुच्यते महर्षेर्वसिष्ठस्यैव वचनेष्वेकं दृश्यताम्—

† "गोमायुरदादजमायुरदात्
पृश्निरदाद् हरितो नो वसूनि।
गवां मण्डूका ददत शतानि
सहस्रसावे प्रतिरन्त आयुः" ॥ ऋग्वेद ७म. १०३ सू. १०ऋ.

महर्षिः वसिष्ठः किल यान् एवम् अस्तावीत्, त एवामी गुणवन्तो वयं साम्प्रतं प्राकृतैरपि जनैः तिरष्क्रियामहे। अथवा—"भाग्यं फलति सर्वत्र" त्यन्तरेण किमन्यद् ब्रूमस्तद् भवन्त एव कथयन्तु।

श्री चन्द्रचूडशर्म्मा।

---

* हे मण्डूका यदा शिष्या इव शिक्षकस्य युष्माकं मध्ये एकोऽन्यस्य वाचमनुकरोति, यदा च शोभनवाचो यूयं वृष्येदकोपरि प्लवमानाः शब्दं कुरुथ, तदा युष्माकं शरीरमविकलं भवतीत्यर्थः।

† गोवत् शब्दकारिणः, छागवत् शब्दकारिणः हरितवर्णाः पृश्निवर्णाश्च मण्डूकाः अस्मभ्यं धनानि प्रयच्छन्तु। मण्डूका वर्षासु अस्मभ्यम् अपरिमिता गाः प्रयच्छन्तु, प्रवर्द्धयन्तु च अस्मा जीवनम् इत्यर्थः।

---

प्रामाण्यं षोडशकलं क्षिप्तं देवेन भूतले
तत्र पंचदशांशं स्त्री गृण्हात्येकांशमन्यकः

माता पिता च यद्हस्ते दातुं पैकां न विश्वसेत्
तादृशे पुरुषाय स्त्री स्वं जीवं कथमर्पयेत्

# "क्षेत्रस्वामिनः कृषीवलाः सर्वकारश्च"

ले० पं० पट्टाभिरामशास्त्री, शास्त्ररत्नाकरो विद्यासागरश्च
देववाणी परिषदध्यक्षः कलकत्ता

लक्ष्म्या भगिनी ज्येष्ठा। अनयोः परस्परं सौन्दर्ये विवादस्समजनि—कस्यास्सौन्दर्यमुत्कृष्टमिति। अकाण्डे तत्र नारदस्समाजगाम। तमुभे भगिन्यावपृच्छताम् आवयोर्मध्ये का सुन्दरीति भवता निर्णयः कार्य इति। नारदस्तु पतितो धर्मसंकटे। किञ्चिदिवालोच्योभे तेऽवदत्—किञ्चिद्दूरं गत्वा प्रतिनिवर्तेतामिति। उभे अपि तथैव कृतवत्यौ। नारदः प्राह—मात र्ज्येष्ठे! गमनावसरे त्वदीयः पृष्ठभागस्सुन्दरः, मातर्लक्ष्मि! आगमनावसरे त्वदीयः पुरोभागस्सुन्दर इति।

तथैवास्माकं खाद्यमन्त्रिणः श्रीजैनस्योक्तिः सर्वात्मना कथामिमामनुकरोति। कदाचिन्मन्त्री कथयति—समानरूपेण क्षेत्राणां विभाजनं न सम्पादितम् क्षेत्रविषयकस्संस्कारो न कृतः, अतएव धान्यानामुत्पत्तिर्न वर्धते। कदाचिच्च कथयति—क्षेत्राणां समविभाजनरूपः क्षेत्रसंस्काररूपश्च प्रस्तावो राज्यसभासदस्यस्स्वीकृतः, अतएवाधिक्येन धान्यानामुत्पत्ति र्निरुद्धेति।

सत्यमेवातिसंकटे निपतितं भारतं वर्षम्। क्षेत्रस्वामिनोऽभिप्रयन्ति—धनव्ययेन दोहदादिकं क्षेत्रेषु सम्यक्प्रदाय धान्योत्पत्ति वर्द्धने यदि वयं यतेमहि नूनस्माभिस्तच्चतुर्थांशोऽपि न लब्धुं शक्यते। शतेंऽशानां षष्टेः कृषीवलेभ्यः प्रदानम्, अवशिष्टेषु चत्वारिंशदंशेषु सर्वकाराय संख्यातीतानां कराणां प्रदानम्। एवं सति क्षेत्रस्वामिनामस्माकं किमवशिष्येत? किमर्थमस्माभिर्धान्यानाभिवृद्धौ यतितव्यम्? धनागारे (बेंक) रूप्यकाणि निक्षिप्य वृद्धिजीविकां कुर्मो यदि ततोऽत्यधिकं धनमवाप्तुं शक्यते। अथवा जनपदान् परित्यज्य नगरेषु

गृहान् निर्माय भाटकरूपेण प्राज्यं धनं लब्धुं शक्यत इति। कृषीवला मन्यन्ते—परकीयेषु क्षेत्रेष्वस्माभिः किमिति परिश्रमः कर्तव्यः। यथा तथा वा क्रियमाणस्य परिश्रमस्य फलम् षष्ट्यंशा लभ्यन्त एव। अथवा पङ्क, आतपे, वृष्टौ च शरीरं क्लेशयित्वा ग्रामेषु किमिति परिश्रमः कर्तव्य, नगरेषु यन्त्रागारेषु परिश्रमे क्रियमाणे दैनन्दिनं रूप्यकत्रय चतुष्टयं वा लब्धुं शक्येत इति। एवं सति धान्यानामुत्पत्तिः कथं वर्धताम् ?

तदिदं सर्वकारेण क्रियमाणस्य वृथा चेष्टितस्यैव फलम्। कृषीवलानां क्षेत्रस्वामिनाञ्च यदैकमत्यं पूर्वमासीत् तत्सर्वात्मना सर्वकारस्यास्थाने कोलाहलोऽयं विघटयतीति प्रत्यक्षमिदं भारतीयानाम्। खाद्यमन्त्री बिडालं दुग्धस्यैकपदे रक्षितुमिच्छति। प्रधानमन्त्री नेहरूमहोदयश्च यदा यदा देशान्तरेभ्यो धान्यानां क्रयणं पश्यति, तदा तदा योजनासमिते निर्णयमावर्तयति। योजनासमितिरपि नवीनं किमपि कर्तव्यमिति प्रत्यहं किमपि किमपि करोति। क्षेत्रसंस्कार विषये योजनासमिते निर्णयस्सर्वथाऽनुपयुक्तोऽसामयिकश्चेति प्रायस्स र्वोऽपि भारतीयोऽनुभवति।

यस्मिन्देशे प्रान्ते वा न कोऽपि कौपीनं धारयति तत्र यदि कश्चित्त द्धारयेत् तर्हि स उपहसनीयो भवतीति चिन्तयन् खाद्यमन्त्री यस्मिन् प्रान्ते क्षेत्रसंस्कारः कार्यरूपेण परिणतस्तत्र नितान्तं धान्योत्पत्तेरवनतिं पश्यन्नपि सर्वकारस्यैव पाठमनुवदति। अन्यथा कौपीनधारी नोपहसनीयः खलु भवेत्।

देशवासिनो जनाः स्वातन्त्र्यमवाप्यापि प्रकृतिसिद्धानि पञ्च भूतान्युपभोक्तुं विना मूल्येन न शक्नुवन्तीति विदितचरमिदम्। तत्रापि सर्वकारः निमीलने उन्मीलने, क्षुते जृम्भायाम् जीवने मरणे, निद्रायां जागरणे च विविधान् करान् निर्माय जनेभ्यो गृह्णाति। युक्तं करग्रहणं सर्वकारस्य, किन्त्वेतादृशमसह्यं न जनानां परितोषाय भवति। देशान्तरं निदर्शयति सर्वकारः—देशान्तर इतोऽत्यधिकं करग्रहणं भवतीति। देशान्तर [illegible] तत्र यावानायो

वर्तते। अस्मद्देशवासिनस्तु द्रव्यांशे दरिद्रनारायणाः । कार्यालयेषु कार्यकर्तृणां सकाशादुचितं करग्रहणम्, यतोहि सर्वकारः, स्वातंत्र्येण कार्यसञ्चालका वा तावद्वेतनं तेभ्यो ददति। क्षेत्रेषु शीतमुष्णञ्च सहमानाः मनोरथातीतेन क्लेशेन स्वेदजलानि स्रावयन्तः, अशनाया-पिपासे चाविगणयन्तो योगिन इव ये तपस्विनः कृषीवलाः कर्षणा-दिना धान्यविवृद्धये परिश्राम्यन्ति, ये च तेषां योगक्षेमं वोढुं प्रतिक्षणं परिचिन्तयन्ति क्षेत्रस्वामिनः तेषां सकाशादत्यधिकं करग्रहणं धान्यो-त्पत्तिविवृद्धिं कथं परिकल्पयेत् इति मनसि चिंतयतामस्माकं विषयोऽयं नाधिरोहति। उपेयचिन्तनात्पूर्वमुपायपरिचिन्तनं मनीषिणां कार्यम् विविधा योजनाः पूर्वं निर्माय निश्चित्य वा ताः कार्यरूपेण परिणम-यितुं द्रव्यागमोपायः क इति चिंतनं न युक्तियुक्तमिव । यावता हस्त गतेन द्रव्येण लक्षितस्योपेयस्य सिद्धिर्भवेत् तावद्द्रव्यमेवादाय योजनाः कल्पनीयाः ।

नास्मिन्विषये कस्यचन विप्रतिपत्तिः—यद्देशे साम्प्रतं धान्याना-मुत्पत्तिर्वर्धनीयेति। तदैवोत्पत्तिरियं परिवर्धेत, यदा हि क्षेत्रस्वामिभ्यः कृषीवलेभ्यश्च करग्रहणं शिथिलितं स्यात्। देशं निरुपद्रवं सुभिक्षञ्च कर्तुं यदि मनसा कामयते सर्वकारस्तर्हि करादस्मात्क्षेत्रस्वामिनः कृषीवलाश्चोन्मोचयितव्या क्षेत्रसंस्कारप्रस्तावश्च स्थगनीयस्सर्वकारेण।

———

योग्यानां च कृते स्वर्गे सर्गादौ निर्मितेष्वपि
आसनेषु बहून्येव रिक्तान्यद्यापि सन्त्यहो ॥

निष्किञ्चनः समाकांक्षेत् किञ्चिदेव हि नाधिकम्
किञ्चिल्लब्धं च येनासौ विश्वं भक्षितुमिच्छति ।

शिक्षयेद् जननी वक्तुं जगत् मौनं हि शिक्षयेत्

# देवतातत्त्वम् ।

देवतानामस्तित्त्वे किं मानम्, किं तासां स्वरूपम्, मानवानां ताभिः सह को नाम सम्बन्ध इत्यादिकं तर्केण निरूपयितुं प्रयतिष्ये ।

अत्र च देवताशब्देन प्राधान्यतो देवा देवयोनयश्च गन्धर्वादयो गृह्यन्ते, ये खलूपास्यन्त आर्य्यगृहस्थैः । उपास्यत्वेन निर्देशिता माता-पित्रादयो मनुष्याः, गवादयो जन्तवः, वटाश्वत्थादयो वृक्षाश्चापि देवताः । तासामस्तित्वादौ नास्ति कस्यापि विप्रतिपत्तिरिति न तासां निरूपणमत्र प्रस्तूयते । काली-दुर्गादयो नारायण-सूर्य्य-गणपत्यादयश्च देवताः । तत्र काश्चन प्रत्यहमेवोपास्यन्ते । अपरास्तु न तथा । परन्त्वत्र सर्वा एव निरूपणीयाः ।

१। देवतास्तावद्द्विधा भिद्यन्ते, परापरभेदात् । परादेवता एकैव । सा खल्वीश्वर इति शिव इति कृष्ण इति राम इति दुर्गेति च बहुधा कथ्यते । सा हि सर्वस्य स्रष्ट्री, पात्री, संहर्त्री च । सा नित्यैश्वर्य्यादि-सम्पन्ना । तस्या अस्तित्वे प्रायः सर्व एवाविप्रतिपन्नाः ।

अपरदेवतानां जन्मवतीनां पुराणादिप्रतिपाद्यानामस्तित्वं सर्वैर्नाङ्गीक्रियते । अतस्तासामस्तित्वमेवादौ प्रमाणोपन्यासेन स्थाप्यते ।

तन्त्रपुराणाद्युक्तविधिनाऽनुष्ठीयमाने देवतापूजनरूपे स्वस्त्ययनादौ तत्फलं बहुशो भवत्येव । नैतत्काकतालीयन्यायसिद्धमिति वक्तव्यम् । यतो यथाविधिकृतकर्म्मणां फलं प्रायःसर्वत्रैवोपलभ्यते । काकतालीयन्यायसिद्धत्वे तु कदाप्युपलभ्येत, कदापि नोपलभ्येत । अस्य चोभयतः समानत्वेऽपि अस्ति कोऽपि विशेषः । दृश्यते हि भूयसां कर्म्मणां फलवत्त्वम्, अल्पीयसामेव फलव्यभिचारः । येषां फलव्यभिचारस्तेषां कुतोऽपि वैगुण्यात्तथात्वम् । अतः सत्यो देवताः, तासामाराधनं दृष्टफलाय कल्पत इति । प्रत्यक्षान्तं प्रमाणम्, प्रत्यक्ष-मूलं च । अत्र प्रत्यक्षेण फलेन एव कारणमदृष्टं देवताप्रसादरूप-

मनुमीयते। अन्यथा स्वस्त्ययनादेः फलदायित्वमुपपादयितुं न शक्यते। अत एव सन्त्येव देवताः। एतेनानुमानेन सम्यङ्निश्चयो न भवितुमर्हति, यतो न किमप्यनुमानं तथा साधु विद्यते, यथा व्यभिचाराशङ्काऽपि न स्यात्। एतत्त्वस्मन्मते सर्वानुमानसाधारणम्, निर्णयः कदापि नानुमानेन भवतीति। परदृष्टस्य श्रुतिबोधितस्य वा अनुमानमुपोद्बलकं भवतीति। देवताश्च तपस्विभिरूर्ध्वरेतोभिर्योगिभिश्च प्रत्यक्षेण दृश्यन्ते। तेषां प्रत्यक्षं श्रुतिश्च निर्णयायालम्। तर्कस्तु तत्सहकारिमात्रम्।

२। मानवान्ताः कीटादिका जीवाः सर्वैरपि स्वीक्रियन्ते। तेषां ज्ञानतः, शरीरादिसंस्थानादितश्च भूयान् भेद उपलभ्यते। तत्र मानवेषु ज्ञानादिकं परां काष्ठामाप्तम्। परन्तु तेषामपि ज्ञानं सावधिकमेव। यत्र च ज्ञानादेश्चरमा विश्रान्तिः, स ईश्वरः। ईश्वरः परो मानवश्चापरो ज्ञानी। तयोरन्तरेऽपि तारतम्येन परापरतयावस्थिता ज्ञानिनो भवितुमर्हन्ति। ते हि देवाः। मनुष्या एव जीवश्रेष्ठा इति न वयं प्रतीमः। तेभ्योऽपि श्रेयांसो जीवा देवा इति ब्रूमः।

३। कठिनस्तरलो वायवीय इथारीयश्चेति हि जडपदार्थस्य चत्वारो भेदाः ( Solid, Liquid, Gaseous and Ethereal ) अभ्युपेयन्त आधुनिकैर्वैज्ञानिकैः। मानवान्ताश्च जीवाः प्रायः कठिनवस्तु-घटितदेहाः। केचिच्चाणुवीक्षणगोचरा जीवाः न कठिनविग्रहाः नापि तरलशरीराः। अनुमीयते यत्सन्ति जीवास्तरल देहाः, वायवीयदेहाः, इथारीयदेहाश्च। ते च जीवा नास्मदादिवज्जन्तवः ( Animals )। अतो विनाप्यम्लजनकं वायुम्, अत्युष्णेऽतिशीते च देशे तेषामवस्थानमविरुद्धम्। यतो जन्तूनामेव अम्लजनकादिकं विना जीवनं न सम्भवति न तु सर्वेषां जीवानाम्। अपि च योगिनः केचित् हरिदासादयो विनापि वायुं सुबहुकालमजीवन्निति वैदेशिकानामपि केषाञ्चित् प्रत्यक्षं जातम्। प्रमाणभूते च शास्त्रे चतुर्विधा अपि देहाः प्रसिद्धा एव। जलीयदेहा वायवीयदेहा इथारीयदेहाश्च काश्चन देवताः। अत्र इथारीया इत्यनेन आग्नेया मताः।

४। पृथिवी जीवपूर्णा। सा हि ग्रहाणामन्यतमः। पृथिव्यां च यावन्ति वस्तूनि यादृक्संस्थानानि चोपलभ्यन्ते, तानि प्रायोऽन्येष्वपि मङ्गलादिषु वर्त्तन्ते। अतस्तत्रापि जीविभिर्भवितव्यम्। ते च जीवाः प्रायशो जन्तवो भवितुमर्हन्ति। अत्युष्णेषु अतिशीतेषु च ग्रहादिषु जन्तूनां सद्भावासम्भवेऽपि जीवावस्थानं न विरुद्धम्। श्रूयते च तेषु जीवावस्थानम्। अतस्तत्रापि जीवा वर्त्तन्त एव। तेषु केचन देवाः।

५। सौरं जगज्जीववत्। तारानक्षत्रादिश्च जीवावस्थानयोग्यो देशः। यदि तत्र जीवा न भवेयुस्तर्हीदमेव सिध्यत्—यदनन्तस्य ब्रह्माण्डस्य अतिक्षुद्रादपि क्षुद्रे देशभागे सौरजगत्येव चेतनावस्थानम्, अनन्तश्च देशो मरुस्थलीव जीवहीनः। नैतत्सम्भवति। अतस्तत्रापि जीवाः सन्ति। तेषु च केचन देवाः। श्रूयते च ध्रुवादिमण्डले जीवावस्थानम्।

६। सूर्य्यमण्डलं पृथिव्यादिकमाकर्षति। आकर्षणं च चेतनस्य दूरस्थस्यापि भवितुमर्हति। अचेतनस्य कथं तत्स्यात्। अतोऽस्ति सूर्य्यादीनामधिष्ठाता चेतनः। कार्य्यं चेतनाननुष्ठितं न भवति सूर्य्यादयश्च सूर्य्यमण्डलाधिष्ठातारः श्रूयन्ते। ते च देवाः। माध्याकर्षणेन सर्वव्याख्याने भवत्यपि तद्व्याख्यानमपेक्ष्यते। कथमेकः परमाणुरचेतनोऽपरं परमाणुमचेतनं दूरतोऽप्याकर्षेदित्यस्य प्रश्नस्य समीचीनमुत्तरमप्राप्य निउटनः (Newton) नितरां खिन्नमना आसीदिति तद्ग्रन्थादवगम्यते। हागेलाख्योऽपि (Hegel) क्रमविकासवादी (Evolutionist) शर्म्मण्यदेशपण्डितः परमाणूनां प्रत्येकं चेतनत्वमभ्युपगच्छति, इतरथाकर्षणानुपपत्तेः। अतः प्रतिभाति मे यत्सत्यमेवोक्तं रामायणगे—"सत्येनार्कः प्रतपति, सत्येनाप्यायते शशीति"। अतएवास्ति सूर्य्यमण्डले सूर्य्यो देवतेति।

एतावता देवतानामस्तित्वं प्रमाणाविरुद्धमिति सुष्ठु प्रतिपादितम्। तासां सद्भावे निश्चयात्मिका प्रतीतिस्तु तपस्विनां योगिनामूर्द्ध्वरेतसां च प्रत्यक्षेण [illegible]। अपि च [illegible]लोकादीनां व्याख्यासौकर्य्यार्थम्

इथारस्येव, स्वस्त्ययनादीनां फलवत्त्वस्यान्यथानुपपत्त्या तासामस्तित्वं स्वीकरणीयम् ।

अपरा देवता जीवा अनन्तभेदाः । ताश्च जीवत्वादेव रागद्वेषादिमत्यः, सोत्पत्तिकाः सान्ताश्च । जन्यादिकं तासां श्रूयते, मरणं च भावि । तासामपि पापपुण्यादिकमस्ति । ता अपि अस्मादिवत् संसारिण्यः । तास्वपि "अस्तीत्येके नायमस्तीति चैके" इत्यादिका वितर्काः सम्भवन्ति । जीवाश्च देवा न नित्यमेव देवाः । पूर्वं तेऽपि जीवान्तराण्यभूवन् । कर्म्मवशेन च कदापि पुनर्भवेयुर्वा । तेषामपि प्रेत्यभावोऽस्ति । देवताश्चिरतरं जीवन्त्यो बहूनामप्रत्ययमुत्पादयन्ति—कथं जीवाः सत्यो देवताः कल्पान्तरजीविन्यो भवेयुरिति । परन्तु अनुवीक्षणमात्रगोचरस्य पलमात्रजीविनः कीटाणोरस्माकं च जीवितकालयोर्भूयांसं भेदमालोकयतः कस्य तत्र संशयावकाशः । मानुषं जीवनं वर्णितकीटाणुजीवनात् त्रयोदशकोटिगुणाधिकम् । अतो न तेषां दीर्घतरं जीवनं तासां सद्भावमपाकरोति । मानवस्य कीटाणोश्च शक्त्योर्भेदमाकलयतः देवतानामतिमहत्यां शक्तावपि नाप्रत्ययो भवति । मानवानामिव देवतानामपि देहो विद्यत एव । अदेहा जीवा इति हि विप्रतिषिद्धमिदम् । सन्नपि तु तासां देहो न पार्थिवः स्थूलेन्द्रियग्राह्यः । कामविग्रहत्वमपि तासां श्रूयते । किञ्च तासां स्थितेऽपि कस्मिंश्चित् स्थिरे शरीरे, ताः कदाचिद् योगिन इव देहान्तरमपि धारयन्ति । ताश्च देवताः प्रायः शुद्धतरचित्ताः अस्माभिर्ज्ञातुमशक्यमपि पदार्थजातं जानन्ति । अस्मदप्रत्यक्षेष्वपि विषयेषु मानवानामपि शुद्धचेतसां दृश्यते ज्ञानसञ्चारः ! देवता अपि पापान्याचरन्ति । कृतेऽपि कदाचित्पापाचरणे इन्द्रादयोऽस्माकं भक्तिमर्हन्ति । यतः केवलं सर्वशुद्ध एव भक्त्या भवितव्यमिति नियमो नास्ति । "दृष्टं किमपि लोकेऽस्मिन् न निर्दोषं न निर्गुणम्" । तदिदं सर्वसंसारिसाधारणम् । यदि पापलेशसम्पर्कात् इन्द्रादीनामनुपास्यत्वम, तर्हि न कोऽपि संसारी उपासनयोग्यः; यतः सर्वथा शुद्धस्य संसार एव न भवति । अत एवेदं विचार्यं [illegible] कयाचिदुपासनीयत्वमस्ति

न वेति। अस्तीति ब्रूमः। उपास्यन्ते हि मनुष्येष्वपि माता पिता आचार्य्यादयश्च। तेऽपि हि परमदेवतारूपा जीवा एव। अपि च राज्ञ उपासनेन धनादिकं भवति, विद्रोहाचरणेन च कारागृहवासः। अतस्तस्योपासना प्रत्यक्षमेव फलमावहति। इन्द्रादयोपि राजादिवन्निग्रहानुग्रहसमर्थाः। यथा वयं पापिनोऽपि क्षुद्रा अपि क्षुद्रतरां पिपीलिकां निग्रहीतुमनुग्रहीतुं च क्षमाः, तथेन्द्रादयोऽप्यस्मान्। अतस्तेषामप्युपासनं कर्त्तव्यमेव। नित्यशुद्धबुद्धमुक्तस्वभावस्योपासनं त्वस्माभिर्नैव कर्तुं शक्यते।

शाक्तवैष्णवादयो बहव उपासकभेदा दृश्यन्ते। तत्र शक्तिः परा देवता, अपरा वेति विचार्य्यमाणे, तस्याः परात्वमेवायाति। सा हि परस्या देवताया ईश्वरस्य शक्तिभूता। शक्तिशक्तिमतोश्च वस्तुतो भेदो नास्ति। असमर्था वयं न सर्वेश्वरं सर्वथाऽवबोद्धुमुपासितुं वा शक्नुमः। अतस्तस्यानन्तान् भेदान् कल्पयित्वा तत्तद्भेदानुसारेणोपासना विधीयते। तथाचोक्तम्—"साधकानां हितार्थाय ब्रह्मणो रूपकल्पनेति"। अत्र च कल्पनापदेनासत्ख्यातिर्नैव बोध्यते। "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि" त्यत्र हि कल्पनापदं सृजेरर्थं गमयति। अत्रापि तथैव ब्रह्मा विष्णुः शिवश्चेत्येकस्येश्वरस्य उपाधिभेदात्त्रिधा नामविग्रहादिः ते च परा देवताः। सर्वेऽपि जीवाः स्फुलिङ्ग इवाग्नेरीश्वरस्यांशा इति सर्वेषामेवेश्वरबुध्योपासनात्फलं भवत्येव।

प्रसङ्गादिदमप्युच्यते। कैश्चित् शास्त्रानभिज्ञैर्वैदेशिकैर्भारतवर्षे देवताबहुत्वं समीक्ष्य भारतीया ईश्वरस्य बहुत्वं स्वीकुर्वन्तीति लिखितम्। ततश्च तेष्वाप्तबुद्धिमद्भिरस्माभिरपि उच्यते यद्वयं बह्वीश्वरवादिन इति। तत्रोच्यते, देवता देव इति च न 'God' इत्यर्थबोधकः, तस्य त्वर्थ ईश्वर इति परमेश्वर इति। स चैक एव। देवता देवो वा आङ्गलभाषाया Spirit इति Angel इति च कथ्यते। नापि देवोपासकाः पौत्तलिकाः। यतः प्रतिमासु देवानामधिष्ठानं भवति, तत्र चित्तं स्थिरीक्रियते। न तु प्रतिमा एव देवताः।

देवतातत्त्वे प्रबंधं रचयतो मे स्खलितानि क्षन्तुमर्हन्ति देवताः, ता हि तत्प्रीतये कृतस्य वस्तुनो गुणमेव गृह्णन्ति। उच्यते च "भक्तिमिच्छन्ति देवताः" इति।

—श्रीवनमालि मिश्रः

# प्रकृतावद्भुतानि ।

**दक्षिणमहाद्वीपः**—दक्षिणध्रुवप्रदेशेषु सुविस्तीर्णो महाद्वीपः कश्चिदस्ति, ईदृशी विस्तीर्णा भूमिर्न क्वाप्युपलभ्यते । किन्तु विषयस्यास्य प्रालेयपूर्णतया नराणामत्र प्रवेशो दुर्घटः । पूर्वमिमे प्रदेशा न तथा शीता आसन् यथा सांप्रतमिति केषांचिदुष्णप्रदेशोचितानां जन्तुशवानां भूमिस्तरेषूपलम्भान्निश्चीयते । संप्रति आङ्ग्ल-शर्मण्यादिदेशीया बाष्पनौका एषां देशानां विचयने व्यापृताः । केचिदंशा अस्य द्वीपस्य कैश्चिन्नौकानायकैरुपलब्धाः अपरेषामप्यंशानां पूर्णतयान्वेषणाय पाश्चात्या उद्योगभाजः ।

**रोमशहस्ती**—सर्वाङ्गीणरोमकञ्चुकावरणाः केचन हस्तिनश्चिरंगतेषु समयेषु भूमौ चरन्ति स्म । केचिन्महाप्रमाणा विशालविषाणाश्चीनदेशस्योत्तरतो निवसन्तिस्मेति ज्ञायते । तत्र गतशतके रोमशहस्तिशवानां मरुसैकतेषु प्रालेयवर्षे निमग्नानां प्रालेयेन चिराय रक्षितरोमचर्मादीनामुपलम्भात् । अपरेतु वामनाकृतयो रोमशहस्तिनो दक्षिणसागरस्य विषुवद्रेखासंनिहितेषु द्वीपेषूपलब्धाः । साम्प्रतं तु न कोपि रोमशोहस्ती कुत्रापि जीवन्नुपलभ्यते ।

**जलहस्तिनां बधः**—अतिस्थूलाः स्थूलचर्माणो जलकरिणः आफ्रिकाप्रदेशेषु नदीषु साम्प्रतमुपलभ्यन्ते । पूर्वं भारतेप्येषामुपलम्भो निश्चीयते "करियादसामभिमुखान् करिणः" इति भारविः । "उन्मज्जकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः" इति च नागानन्दे श्रीहर्षदेवः । अतिभयंकरमेषां मुखम् । रात्रौ चरन्तीनां नौकानां महद्भयमेतेभ्यः । इमे हि मुखेन सरभसं नौका उत्क्षिप्य जले निमज्जयन्ति ।

आरट्टदेशीया व्याधाः संघीभूय प्रबलरज्जुबद्धैः भल्लैर्जले प्रक्षिप्तैर्यूथादेकं करिणं विध्यन्ति। भल्लं सरज्जुमपरान्ते बद्धकाष्ठखण्डं च विमुञ्चन्ति। सद्यः जलकरी विद्धाङ्गो निमज्जति काष्ठं च रज्जुबद्धं जले प्लवते। ततोऽपरा सुमहती रज्जुस्तीरयोः स्थितैः पुरुषैर्धृतैकैकान्ता नद्यास्तीरात्तीरं प्रसार्यते युक्त्या च किंचिच्छ्लथामिमां रज्जुं पूर्वरज्जुसंबद्धे काष्ठे समासज्ज्य तत्काष्ठं तीरभूमावानीय बलेन काष्ठसम्बद्धपूर्वरज्जुद्वारा करिणमाकर्षन्ति, भल्लाकर्षणव्यथया रज्ज्वा सहागतं च तं तीरस्थानभिहन्तुकामं दूराद्भल्लैर्बहुभिर्व्याधाः प्रहरन्ति, रुधिरनाशाच्च स मुहूर्तेन गतासुर्वज्राहतो नग इव निपतति।

**हस्तिनाशः**—आफ्रिकाप्रदेशे भारते च हस्तिन उपलभ्यन्ते तत्र भारतीयहस्त्यपेक्षया आफ्रिकाहस्तिनो गुरुतरा बलवत्तराश्च। अत्र जना अवपाताख्येषु गर्तेषु प्रलोभनादिना निपात्य हस्तिनो वशीकुर्वन्ति व्यापादयन्ति वा। आफ्रिकायां तु शतशो वन्याः प्रायः योजनमितं वनमण्डलं हस्तियूथाक्रान्तमध्यं वीक्ष्य पावकेन प्रज्वालयन्ति। प्रज्वलिते च सहसा वने चटचटाशब्दभीता गजा धूमान्धा निस्सर्तुमिच्छन्ति निर्गमनमार्गमन्विष्यान्विष्य रक्षोपायमपश्यन्तः पावकमार्गेणैव दह्यमानगात्रा अपि निष्क्रामन्ति निष्क्रामन्तश्च वन्यानां भल्लैर्विनाश्यन्ते।

**महापक्षी**—यमकोटिप्रदेशेषु ( न्यूज़ीलैण्डद्वीपे ) पूर्वं कोपि महापक्षी गजादपि गुरुतरशरीर आसीत्। अस्यचास्थ्यादीनि साम्प्रतमपि गिरिगह्वरादिषु तन्निवासभूतेषूपलभ्यन्ते। अयं स्वबलेन अश्वादीनपि जन्तून्हन्तुं क्षम इति प्रतीयते अयं च पक्षहीन आसीत्। मोआइति तस्य देशीयं नाम।

**आकराङ्गाराः**—द्विविधा अङ्गाराः प्रसिद्धाः केचिद्दग्धकाष्ठसंभूताः अपरे खनिजाः पाषाणाङ्गारत्वेन प्रसिद्धाः। तत्र पाषाणाङ्गाराअपि पूर्वं काष्ठरूपा एवासन्। कालवशाद्वनेषु पृथिवीस्तरैर्निमज्जितेषु वृक्षशाखादीनां वर्षायुतानन्तरं कृष्णपाषाणरूपत्वं जातम्।

**वनमानुषस्य कुटीरः**—वनमानुषाः कपिजातीयाः केवलं ते मनु-

व्यवदुत्थाय पद्भ्यां गन्तुं शक्नुवन्ति आकारेण च किञ्चिन्मनुष्यसदृशाः

* "रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास" इति रघौ। अवपातो गजावतारस्थले ह्रदादितटे तृणच्छन्नो गर्तविशेषः।

तेषां च 'गोरिला' 'चिंपाजी' 'गिबन्' इत्यादयो बहवो भेदाः। प्रायस्ते शाखामृगाः वृक्षेषु निवसन्ति। चिंपाञ्जीनामका वनमानुषास्तु शबरादिवत्कुटीरं काष्ठादिभिर्निर्माय तत्र निवसन्ति। नातिचित्रमेतत् बीवरनामकाः पशवोहि दीर्घिकाः सरांसि च रचयन्ति। तत्र सेतुं विधाय सुन्दराणि उभयतोद्वाराणि शत्रुदुर्गमाणि गवाक्षवन्ति गृहाणि निर्माय च निवसन्ति।

**पिपीलिकानां गवाश्वं दासीदासं च**—कीटेषु पिपीलिकाः शलभेषु च मधुमक्षिका अतिबुद्धिमत्यः। आसां गृहाणि गृहशासनादिव्यवस्था चाश्चर्यकारिणी। तत्र मधुमक्षिकाणां विषयेऽन्यत्र किंचिद्वक्ष्यते पिपीलिकास्तु ततोप्यद्भुताचाराः। इमा हि सेनां सुमहतीं रचयित्वा सेनापतींश्च नियुज्य पर-दलमाक्रामन्ति विजित्यगृहीतांश्च जन्तून् दासवद्रक्षन्ति। कदाचिदश्वानामिव तेषां पृष्ठे भ्रमन्ति, कदाचिद्बन्दीकृत्य गृहएव स्थापयन्ति। ततोपि चित्रतरं यदेताभिरस्माभिरिव दुग्धार्थं गावः पाल्यन्ते। एत हि वृक्षयूका बन्दीकृत्य वल्मीकमध्यस्थं स्वगृहं नीत्वा तत्र पालयन्ति। समये समये च श्मश्रुभ्यां तद्दुग्धमाकृष्य पिबन्ति।

---

अन्योन्यं हृद्गतं प्रेम ज्ञापनीयं कथं मिथः
पक्षिणश्चुम्बनेनैतदादौ प्रादर्शयन् नृणाम्

# कवि काव्य परिचयः

## पाणिनिः

रामायणप्रणेता वाल्मीकिः, विष्णुपुराणप्रणेता पराशरः, भारतप्रणेता पाराशर्यः कृष्णद्वैपायनः, एतेभ्योऽर्वाचीनाः कालिदासाच्च प्राचीनाः बहवः कवयो बभूवुः, तेषां प्रबन्धाश्च काश्मीरकविदुषां क्षेमेन्द्रादीनां सुविदिता बभूवुः। किं बहुना वङ्गीयो नातिप्राचीनः साहित्यदर्पणकारः कविराजविश्वनाथोऽपि दृष्टवानमीषां कांश्चित्प्रबन्धानिति प्रतीयते। तथापि द्वित्रेषु गत-शतकेषु तादृशी दुरवस्था विद्याभ्यासस्य जाता, येन ग्रन्थांशान्नात्युपयुक्तान्वादबहुलानवलम्ब्य तत्परिष्कारात्मकेषु पत्रिकादिषु मुधा श्रमं विदधानैर्जनैस्तथोपेक्षिताः परार्घ्या अपि निबन्धाः, येन साम्प्रतं बहूनां कवीनां शास्त्रकृतां च नामापि लुप्तप्रायम्। न साम्प्रतं भासस्य स्वप्नवासवदत्तातिरिक्तानि नाटकान्युपलभ्यन्ते, न रामिलसौमिलयोः शूद्रककथा प्राप्यते। क्वाधुना पाणिनेः पातालविजयकाव्यम्, क वा वररुचेः कण्ठाभरणम्। किमभून्मेण्ठप्रणीतस्य हयग्रीववधस्य, किंवा जातं धर्मकीर्त्तेर्महाप्रबन्धानाम्। धन्यास्ते सूक्तसंग्रहकारा, यत्प्रभावादधुना नामाप्येषां महाकवीनां श्रूयते। मोहान्धकूपकुहरादाच्छिद्य वैदेशिकैरुद्धृतेभ्यः सूक्तिमुक्तावली-सदुक्तिकर्णामृत-शार्ङ्गधरपद्धति-सुभाषितावल्यादि-संग्रहग्रन्थेभ्यः पाणिनि-भास-मेण्ठादिमहाकवीनां विषये किञ्चिद्विदितमास्ते साम्प्रतम्। तत्र वैयाकरणत्वेन सुप्रसिद्धो दाक्षीपुत्रः पाणिनिः पातालविजयकाव्यं जाम्बवतीविजयापराख्यं प्रणिनायेति—

"स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम्" ॥ इति

राजेशेखरश्लोकादवगम्यते। तथा चान्यस्यापि कस्यचित्पद्यम्—

"सुबन्धौ भक्तिर्नः, क इह रघुकारे न रमते,
धृतिर्दाक्षीपुत्रे, हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः शूरः, प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते"॥

किं च सुवृत्ततिलके केषां कवीनां कानि छन्दांसि रम्यतमानीति प्रस्तावे भारवेर्वंशस्थं, राजशेखरस्य शार्दूलविक्रीडितं, भवभूतेः शिखरिणी, पाणिनेश्चोपजातिरिति क्षेमेन्द्रः। अत्र चोपजातिशब्देन सुप्रसिद्धाया इन्द्रवज्रोपेन्द्रवज्राचरणमिश्रणात्मिकायाउपाजातेर्ग्रहणम्। पाणिनेः पाटलिपुत्रे भगवतो वर्षस्य सन्निधावध्ययनं तपसा प्रसादितान्महेश्वरादक्षरसमाम्नायप्राप्तिश्च बृहत्कथायां कथापीठलम्बके दृश्यते। यत्तु न वैयाकरणेन पाणिनिना प्रणीतं जाम्बवतीविजयकाव्यं, किन्तु कवि- पाणिनिः प्रसिद्धपाणिनेर्भिन्न एव कश्चित्, नहि वैयाकरणमुख्यो रुद्रटटीकाकृता नेमिसाधुनाऽन्यैश्च प्रदर्शितानि "सन्ध्यावधूं गृह्येत्यादि" च्युतसंस्कृतीनि पदानि प्रयुञ्जीतेति केचिदाधुनिकाः। न तत्सयुक्तिकम्, न हि नवप्रणीतं स्वकीयमेव व्याकरणं पाणिनिरनुसर्तुं शशाक। रामायण-भारतादिपरिशीलनात् करामलकीभूतानि ऐन्द्रशाकटायनादिव्याकरणानुसारीणि पदानि सततमबोधपूर्वमपि तस्य हृदये स्फुरन्ति स्मेतितेषां तद्ग्रन्थे दर्शनं सुसङ्गतमेव। अस्य च विरलाः सूक्तयः संग्रहेषूपलभ्यन्ते। तासाञ्चातिरमणीयत्वात् कवेः शैलीं प्रदर्शयितुमत्र निवेशः क्रियते—

---

वक्तुं प्रयत्नः कार्यो न तत्तु स्वाभाविकं नृणाम्
किन्तु मौनं समास्थातुं काले यत्नो महान् भवेत्

## पाणिनेः श्लोकाः ।

१ अथासससादास्तमनिन्द्यतेजा जनस्य दूरोज्झितमृत्युभीतेः ।
उत्पत्तिमद्वस्तु विनाश्यवश्यं यथाहमित्येवमिवोपदेष्टुम् ॥

२ असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः ।
घर्मालसाङ्गीं मधुराणि कूजन्संवीजते पक्षपुटेन कान्ताम् ॥

३ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार ॥ *

४ गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः ।
अपश्यती † वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति ॥

५ सरोरुहाक्षीणि निमीलयन्त्या रवौ गते साधु कृतं नलिन्या ।
अक्ष्णां हि दृष्ट्वापि जगत्समस्तं फलं प्रियालोकनमेकमेव ॥

६ निरीक्ष्य ‡ विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किन्नु वान्तश्चन्द्रोयमित्यार्ततरं ररास ॥

७ शुद्धस्वभावान्यपि संहतानि निनाय भेदं कुमुदानि चन्द्रः ।
अवाप्य वृद्धिं मलिनान्तरात्मा जडो भवेत्कस्य गुणाय वक्रः ॥

८ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोपि रागाद्गलितं न लक्षितम् ॥

९ प्रकाश्य लोकान्भगवान्स्वतेजसा प्रभादरिद्रः सवितापि जायते ।
अहो चला श्रीर्बलमानदाप्यहो स्पृशन्ति सर्वं हि दशा*विपर्यये ॥

१० क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क संप्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीह जलदाः ॥

११ पाणौ शोणतले तनूदरि दरक्षामा कपोलस्थली
विन्यस्ताञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दली-
मुन्मीलन्नवमालतीपरिमलः किं तेन विस्मर्यते ॥

१२ उब्दुद्धेभ्यः सुदूरं घनजनिततमःपूरितेपु द्रुमेपु
प्रोद्ग्रीवं पश्य पादद्वयनमितभुवः श्रेणयः फेरवाणाम् ।
उल्कालोकैः स्फुरद्भिर्निजवदनदरीसर्पिभिर्वीक्षितेभ्य-
श्चोतत्सान्द्रं वसाम्भः क्वथितशववपुर्मण्डलेभ्यः पिबन्ति ॥

१३ कल्हारस्पर्शगर्भैः शिशिरपरिचयात्कान्तिमद्भिः कराग्रै-
श्चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः ।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिष्यन्दिनीभि-
र्दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशासखीभिः ।

१४ चञ्चत्पक्षाभिघातं ज्वलितहुतवहप्रौढधाम्नश्चितायाः
क्रीडाद्व्याकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण ।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्द्धदग्धं
पश्यान्तः प्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रवृद्धः ॥

१५ विलोक्य संगमे रागं पश्चिमाया विवस्वतः ।
कृतं कृष्णमुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥

* दर्पणे धृतोऽयं श्लोकः । † च्युतसंस्कृतिः, "शपश्यनोर्नित्यमित्युक्तेः" ।
‡ कुवलयानन्दे दृश्यतेऽयं शोकः ।
* दशाः दुर्गतयः स्पृशन्तीत्यर्थः ।

---

नानातीर्थ क्षेत्र यात्रालोक संचारकारिणाम्
असत्यं भाषितुं धैर्य मधिकारश्च लभ्यते ॥

पिहिते नु मुखे जातु प्रविशन्ति न मक्षिकाः

Regd. No. B. 7171

## मधुरवाणी नियमावली

ये पंच नवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदाकदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते। अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणक पोष्टटिकीट प्रेषणं कार्यम् ।

व्हि॰ पी॰ द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत प्रकाश्येरन्। असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

**Book-Post**

To,

289 The Registrar Gurukula University
Post: Gurukuala Kangri
Dist: Shaharanapura

If addressee is not found please return to sender.

**पंढरीनाथाचार्य गलगली**
संपादक मधुरवाणी
मधुरवाणीकार्यालय, गदग (कर्नाटक)

Printed at the New Gadag Printery Gadag, by P. S. Hombali and Published by Pandharinathacharya Galagali at Gadag.

जगद्गुरुश्रीमद्राघवेन्द्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

शके १८८० विलम्बि संवत्सर आश्विनाङ्कः १९५८ अक्टूबर

प्रधान संपादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालङ्कार

राजा एस. गुरुराजाचार्याः

★

संपादकाः

गलगलीत्युपाह्वाः पण्ढरीनाथाचार्याः

वार्षिक मूल्यं रु० ५  एकाङ्कस्य ०-८-०

## मङ्गलम्

पद्मापाणिजिघृक्षया हि जरतीछद्माकृतिं प्रोद्वहन्
सद्माकाशनृपस्य चैत्य सुदतीपद्माच्छपाणिं स्पृशन्
रोमाञ्चोद्गमकञ्चुकाञ्चिततनुः संचिन्त्य किंच क्षणात्
मायावी मुदमन्यथैव हि विवृण्वानः श्रियै श्रीपतिः

किं पौलिन्दपुरन्ध्रि मत्करमिदं दृष्टैवव तोषस्तव
न्वैतत्स्पर्शनमात्रतस्तव कुतो वाऽम्भोदरोमोद्गमः
भूयः किञ्च कराञ्चलं मृदु स्पृशस्येवं नुपद्मावती-
प्रश्नैर्या चकिता किरातकुहनास्थूणार्तिहाणाय नः।

कन्ये धन्यतमा रमाकृतिसमा त्वं श्रीनिवासंपतिं
तीव्रं विन्दसि तेन नन्दसि दिवो भोगान् मुदानिन्दसि
तद्भव्यं किल भाविभाग्यमखिलं ते हस्तरेखास्विह
दृष्टवा स्पष्टमगां च तुष्टिमिति तच्छंसन् मुदे श्रीहरिः।

## मासावतरणिका

विश्राम्यत्यधुनापि नाम्बुदकदम्बाडम्बरो न्वम्बरे
कष्टं नष्टमजस्रवृष्टिरधिका सृष्टेः सरीसर्ष्टि च
नो तारा न शशी रवि र्न विमला द्यौर्दुर्दिनं सन्ततं
वर्षर्तुः शरदं बलात्कलिखलः साधूनिवाक्रामति।

## गुरुस्तुतिः

यन्नामाक्षरमध्यभागविलसत्तीर्थाक्षरप्रोक्षिताः
वैराग्यामल भक्ति शान्ति सुतपोज्ञानादि प्रोच्चाटिताः
कामक्रोधमदादि दुर्गुणमहाभूताः पिशाचाः क्षणम्
यच्छायामपि न स्पृशन्ति तमहं श्रीसंयमीन्द्रं भजे।

# मधुरवाणी

२३ वर्षे । विलम्बि संवत्सर आश्विन मास सञ्चिका । अङ्कः ७

## वेदे हरिश्चन्द्रोपाख्यानम् ।

पुराणवर्णितं हरिश्चन्द्रचरितं सर्वप्रसिद्धम् । तदिदं वेदेषु कीदृशं वर्तत इति केषाञ्चित् कुतूहलनिवृत्तये यथाप्राप्तं संक्षेपेणोदाह्रियते । इदं हरिश्चन्द्रोपाख्यानम् ऐतरेयब्राह्मणे ३२ द्वात्रिंशेऽध्याये विद्यते । तत्रेदमित्थम्—

इक्ष्वाकुवंशोद्भवस्य वैधसस्य (वेधोनृपतेः पुत्रस्येति सायणः) राज्ञो हरिश्चन्द्रस्य किल शतं जाया बभूवुः । तासु तस्य नैकोऽपि पुत्र उत्पेदे । अथ कदाचिद् ऋषी पर्वतनारदौ तद्गृहं प्रापतुः । हरिश्चन्द्रो नारदं पप्रच्छ—हे नारद, दृश्यते—विवेकिनो देवमनुष्यादयः अविवेकिनः पश्वादयश्च सर्व एव पुत्रमिच्छन्ति, तत्कथय किं नाम फलं पुत्रेण लभ्यत इति । नारदः—

"ऋणमस्मिन् संनयत्यमृतत्वं *च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥"

इत्यादिभिः दशभिर्गाथाभिः सप्रपञ्चं पुत्रस्योपकारित्वमाख्याय तत्रा-

* अमृतत्व मुक्तिपदम्, "पुत्रार्पित-लौकिक-वैदिकभारस्य अविघ्नेन तत्वंज्ञानसम्पादनादिति" सायणः ।

भाय वरुणप्रार्थनरूपमुपायं राज्ञे उपदिदेश। सोऽपि तदनुसृत्य पुत्रो मे जायतां भगवन् वरुण तेनाहं ते यागं कुर्य्यामिति तं प्रार्थयामास, लेभे च तत्प्रसादेन रोहितनामानं पुत्रम्।

उत्पन्न एव पुत्रे राजानं समागत्य वरुणः "अजनि वै ते पुत्रो यजस्व मामनेने"त्युवाच। अशौचदिनेषु अनतीतेषु पुत्रो यागार्हो न स्यादिति हरिश्चन्द्रेण तानि दिनानि प्रतीक्षितुं प्रार्थितो वरुणस्तदानीं प्रत्यावृत्त्य अशौचदिनानन्तरं राजानं पुनरुपससर्प—"यजस्व मामनेनेति।" असति दन्तोद्गमे पशुर्मेध्यो न भवतीति हरिश्चन्द्रस्तदानीमपि यागाकरणे हेतुमदर्शयत्। उद्गता रोहितस्य दन्ताः, 'यजस्वेति' वदन्नुपागतो वरुणः। यागाकरणे राज्ञा पुनरपि हेतुर्दर्शितो यत् रोहितः क्षत्रियः, क्षत्रियश्च यावत् 'सांनाहुकः' (स्वजात्युचित धनुर्बाणादिसंनाहवान्) भवति, न तावन्मेध्यो भवति। तत् तावान् कालः सहनीयः। रोहितो धृतसंनाही बभूव। वरुणः पुनः प्रत्याजगाम। अनन्यगतिको हरिश्चन्द्रः पुत्रमामन्त्र्योवाच—"अयं वै मह्यं त्वामदात् हन्त त्वयाहमिमं यजा इति" (यागं करवाणीत्यर्थः)। "स (रोहितः) नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ, "संवत्सरमरण्ये चचार" च। इतः कुपितो वरुणः उदररोगरूपेण हरिश्चन्द्रं जग्राह। तदिदमाकर्ण्य पितरं दिदृक्षू रोहितः अरण्यादागच्छन् पथि ब्राह्मणरूपेण इन्द्रेण 'अरण्यवास एव ते युक्त इति विविधैर्वाक्यैर्निवेदितः, तद्वचसि बहुमानात्पुनरेकं वत्सरमरण्य एव न्यवसत्। वत्सरान्ते पितृदर्शनार्थमागच्छन् स पुनरपि इन्द्रेण तथैव बोधितः सन्नरण्यं प्रतिजगाम। एवमेव प्रतिवत्सरं पितृसमीपमाजिगमिषुरपि रोहितः इन्द्रेण निवारितः षड् वर्षाणि अरण्ये विचचार। अथ स पर्य्यटन्नरण्ये कदाचित् क्षुधातिविधुरम् अजीगर्त्तनामानं कमपि ऋषिं ददर्श। तस्य शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गूल इति त्रयः पुत्रा आसन्। क्षुत्पीडितोऽयमर्थेन नूनमेकं पुत्रं विक्रीणीयादिति वरुणादात्मनो मुक्तिमिच्छ् रोहितः तमृषिं शतं (गवाम्) प्रदाय शुनःपुच्छादिष्वेकं ययाचे। पितुरधिकप्रियत्वात् ज्येष्ठः शुनःपुच्छः, मातुरधिकप्रियत्वाच्च कनिष्ठः

शुनोलाङ्गूलो न विक्रयार्होऽभवत्, ततश्च मध्यमः शुनःशेप एव विक्रीतः। रोहितस्तमादाय हर्षोत्फुल्लः पितरमेत्योवाच, 'तात एतमेव वरुणाय दत्त्वाहम् आत्मानं तस्मान्मोचयिष्यामीति।' हरिश्चन्द्रस्तद् वरुणाय न्यवेदयत्। वरुणोऽपि "भूयान् वै ब्राह्मणः क्षत्रिय दिति" स्वीकृतवान्, राजसूययज्ञानुष्ठानं चादिष्टवान्। हरिश्चन्द्रस्तदनुसरन् तदन्तःपातिनि सोमयागे शुनःशेप एव पशुर्भविष्यतीति निश्चितवान्।

हरिश्चन्द्रेण राजसूय आरब्धः। तत्र वसिष्ठ-विश्वामित्रादयो महर्षय ऋत्विजो बभूवुः। पशुः शुनःशेपस्तावदुपकरणेन संस्कृतः। अथ तस्य यूपे बन्धनमावश्यकम्। तच्चातिकठोरमिति न कोऽपि प्रथमम् ऋत्विजां तत्रोद्युक्त आसीत्। अथ अजीगर्त्तः (शुनः शेपस्य पिता) 'यदि मे साम्प्रतमपरं शतं दीयेत, तर्हि अहमेव पशुभूतं शुनःशेपं यूपे बध्नीयामि' त्युवाच, लब्धतद्धनश्च यथोक्तं चकार। पशोर्बन्धनानन्तरं तस्य वधोऽपेक्षितः। पुनरपि पशुवधार्थं न कोऽपि तावत् क्रूरतमो जनो लब्धः। अथ अजीगर्त्त एव पूर्ववदपरं शतं (गवाम्) लब्ध्वा वधार्थमपि खड्गमादाय समुद्यतोऽभवत्। शुनःशेपस्तु तपस्वी अनन्यगतिकः स्वरक्षणार्थं प्रजापतीन्द्रवरुणादीन् स्तोतुमारेभे। अथ स्तुतप्रसन्नस्य वरुणस्य प्रसादात् स बन्धनपाशात् सहसा मुक्तो बभूव। हरिश्चन्द्रस्य च उदररोगः क्रमाद् विननाशेति।



प्रेमभग्नः पुमान् भूयात् ब्रह्मचार्यथवा यतिः
प्रेमभग्ना तु नारी स्यात् सद्यः परिणयोद्यता॥

पत्यौ स्त्री त्रीन् गुणानिच्छेद् ईक्षितुं सुन्दरो भवेत्
रक्षितुं धनिकःस स्यात् शिक्षितुं मां च शक्तिमान्"

# आदर्शः पतिः।

केशवस्य पत्नी इन्दुमती मरणशय्यायां शयाना आसीत्। भिषजो यथोचितं स्वस्य प्रयासं विधाय प्रतिनिवृत्ताः। द्वित्रघटिकातो नात्यधिकं तस्या आयुर्विद्यते इति रोदननिरताः स्वजनबन्धवो मुमूर्षुं परितोऽतिष्ठन्। सा तु तान् प्रति मन्दं मन्दं नयनं पातयन्ती पुनरपि प्रत्यावर्त्तयितुमारभत। केशवस्य जनकस्तस्या हृदयभावमुन्नीय तनयमाहूयाकथयत्-"केशव, वयं बहिर्गच्छामः, त्वमेवैकस्तावदेनां पर्य्यालोकयेति" सर्वे बहिरगच्छन्, केशवः सहधर्मिण्याः पार्श्वत उपाविशत्।

इन्दुमती पत्युर्वदनमण्डले निर्निमेषं नयनद्वयमस्थापयत्। केशवोऽवदत् "अपि त्वं मां किञ्चिद् वक्तुमिच्छसि'। इन्दुमती क्षीणकण्ठेन कथं कथमप्यकथयत्—"पुनरपि त्वया परिणयो विधेयः"। केशवस्य नयनयुगलाद् बाष्पधारा प्रवहति स्म। स प्रत्यवोचत "मैवं नाहं पुनः परिणयं कुर्य्याम्"। इन्दुमती पुनरप्यकथयत्—"नहि, क्लेशस्ते भवेत्, त्वया परिणयो विधेयः" केशवः सहधर्म्मिण्याः शुष्कयोरोष्ठाधरयोः पञ्चषान् शीतलसलिलबिन्दून् प्रक्षिप्यावदत्—"ननु अपरं किमपि त्वया प्रार्थ्यताम्, प्राणैरपि तदहं साधयेयम्, अयं तु निर्बन्धो न क्रियताम्" इन्दुमती भूयोऽपि शनैः शनैः शनैरेकैकाक्षरमवदत् "कथं त्वं न परिणयेः, यदि नाम परस्मिन्नपि लोके कोपे वा ईर्ष्यायां वाहं प्रभवेयम्, तर्हि कथयामि न मनागपि मम सन्तोषो भवेत्। स्वच्छन्देन त्वं परिणयेः"। केशवः पत्न्याः शिथिलदुर्बलं करं स्वकरतलेन धृत्वाकथयत्—"किमिति त्वमेनं निर्बन्धं करोषि, नाहं पुनः कामपि परिणेतुं शक्नुयाम्"। मुमूर्षोः शुष्काधरकोणयोः किञ्चित् स्मितलेखेवादृश्यत। स्तिमितो दीपः क्षणमुज्ज्वलितश्चिराय निर्वाणतामगमत्। इन्दुमत्याः सा खलु स्मितरेखा पत्युस्तादृशे वचसि अप्रत्ययो[illegible] वेति नावबुद्धमासीत्।

केशवो वर्त्तमानसमयस्य विंशतिवर्षतः पूर्वमेव बि० ए० इत्युपाधिमलभत। तदानीं हि 'ग्राजुयेट्' (Graduate) नाम्ना प्रसिद्धानां साम्प्रतिकानामिव दौर्भाग्यं नासीत्। इन्दुमत्याः श्राद्धविधिसम्पत्तेः पूर्वमेव पञ्चषाः परिणयसम्बन्धाः समुपस्थिताः। केशवस्तान् सर्वान् प्रीतिमधुरवचनेन प्रत्याख्यातवान्। पारलौकिककृत्यं यथानियमं सम्पन्नम्। दुहितृभारग्रस्ताः पितरः केशवस्य जनकसमीपे स्वस्वाभिप्रायान् प्राकाशयन्। उक्तं तेन "केशवस्य पुनर्विवाहे न मे काचिद्विमतिः किन्तु पुत्रो मे लब्धविद्यः, वयःप्राप्तश्च। अतस्तन्मतमेव ममापि मतमिति विज्ञेयं श्रीमद्भिः। तद्यदि भवद्भिस्तस्य सम्मतिरधिगन्तुं शक्यते, तर्हि सम्पन्नमेव सर्वम्"। ते खलु ग्रामवृद्धाः केशवस्य पितुस्तादृशं तनयाधीनत्वमालोक्य तं गर्हयन्तः केशवसमीपमागच्छन्। केशवः सबहुमानं सविनयं च तान् प्रत्याख्यातवान्। कुपितो वृद्धगणस्तदानीं केशवेन सह तर्कयितुमिच्छन्नपृच्छत्—किमिति पुनस्त्वं न परिणयेः, कस्तत्र हेतुः ?" केशवो हसन् प्रत्युक्तवान्—नास्ति तत्र कोऽपि हेतुः, किमस्माभिरनुष्ठीयमानानां सर्वेषामपि कर्मणां हेतुरस्ति ? तथाच केषाञ्चिदहेतुकानां कृत्यानामिदमप्येकम् इति मन्तव्यम्।" तदिदमाकर्ण्य ग्रामवृद्धास्ते प्रकामं क्रुद्धाः सञ्जाताः। केशवं तत्पितरं च तत्तद्वचनैर्निन्दितुमारभन्त। यदा खलु पितुरिच्छैव शास्त्रमासीत्, तदा केशवपितुः पुत्रं प्रति तावान् प्रश्रयः, केशवस्य च तावतां वृद्धानां कथनाननुसरणं तैर्दुर्विषहमेवाभवत्। अथ ते केशवस्य पितुः समीपमागत्य तर्जयन्तस्तमकथयन् "अहो आङ्गलशिक्षां प्रदाय सुष्ठु खलु कुलपावनं पुत्रमधिगतोऽसि ! पश्यसि,—देशोऽयं यद्विनाशं गतः। राममुख्योपाध्यायस्य तनयः चन्द्रभूषण आङ्गलशिक्षामधिगतोऽपि न तावत् कुलधर्म्मं व्यस्मरत्। नाधिकं भवतु, तथापि पितुरादेशेन षड् विवाहास्तेन कृताः। यथा तथा भवतु, केशव इव दाम्भिको बालो नास्माभिर्दृष्टपूर्वः विपत्नीत्वावस्थायामपि सत्स्वप्येतावत्सु प्रार्थयमानेषु वृद्धजनेषु सुष्ठु तेन परिणयसम्बधः प्रत्याख्यातः। तत् त्वं स्वतनयं [illegible]"। वृद्धानां तानि वचनान्या-

कर्ण्य केशवस्य जनको नितान्तं प्रमोदमापन्नः तान् प्रत्यवोचत् "अनिर्वचनीयः खलु कश्चिदानन्दो मे प्रदत्तः श्रीमद्भिः। ज्ञातं मयाद्य पुत्रस्य मे यथार्था शिक्षा सम्पन्ना। तदानीं हि पुत्रो मे मानवशरीरिण्याः मत्स्नुषारूपाया देव्याः समीपे यत् प्रत्यजानात् तत्सम्पालनाय यत् स प्रयत्नमादधानस्तिष्ठति, तन्मां निन्तान्तमेव प्रमोदयति। पुत्रो मे आजीवितं स्वप्रतिज्ञापालनमप्रतिहतं कर्त्तुं प्रभवेन्नवेति न ज्ञायते, परन्तु तत्पालनाय योऽयं तस्य प्रयासः तत एवाहं परं हृष्यामि। भवद्भिरेवायं मङ्गलवृत्तान्त आनीत इति परःसहस्राः साधुवादाः श्रीमद्भ्यः। वृद्धास्ते किमिदमिति विस्मयविस्फारितलोचनाः परस्परवदनमण्डलमालोकयन्तो यथोचितं सम्भाषमाणाः प्रयाताः।

* * * *

दशवर्षाण्यतीतानि। केशवो मृत्युशयनमधिशयानस्य जनकस्य समीप उपविष्टः। वृद्धस्तनयस्तस्य शिरसि करतलं संरक्ष्यावदत् "आयुष्मन् ममाशीरियं ते मङ्गलं विदधातु। वत्स, उपस्थितो मे मरणसमयः, तदिदानीं त्वां किञ्चित् कथयितुमिच्छामि। वत्स, धर्म्मशीलः ईश्वरपरायणश्च भवेः। अस्मद्देशेषु पितृभक्तेर्भूयांसो दृष्टान्ताः सन्ति। त्वं सुशीलो, मयि श्रद्धावांश्च। यद्यन्मया कर्त्तुमोप्सितमासीत्, न सम्पन्नं, तत्सर्वं त्वं जानासि, जानेऽहं, तदखिलं त्वं साधयितुं प्रयतिष्यस इति न तत्र किञ्चिद् विवक्षामि। किञ्चिद् वक्तव्यमस्ति स्मरसि त्वं स्वर्गगामिन्याः देव्या मे स्नुषायाः समीपे किमपि प्रतिज्ञातवान्, वत्स, आमरणं तत् त्वया पालनीयम्। प्रशस्यस्ते स सुविशुद्धः प्रेमा। स खलु मदादेशेन दृढतरो भवत्विति प्रार्थये। उपरते पत्यौ पत्न्या कथमवस्थातव्यमिति सुप्रसिद्धमस्मद्देशेषु, पत्न्यां तु उपरतायां पतिः कथमवतिष्ठेतेति आदर्श इति त्वां सर्वे आलोकयन्तु तत् किमन्यद् ब्रवीमि, वत्स, विश्वतोमुखं ते मङ्गलं भूयात्"।

* * * *

स्थविरः केशवो ब्रह्मचर्यमाचरन् मरणसमयं प्रतीक्षते।

# दर्दु रविलापः ।

सूक्तं किल कस्यचित्—"भाग्यं फलति सर्वत्र न विद्या न च पौरुषमिति"। कथमन्यथा—"दर्दु रा यत्र वक्तारस्तत्र मौनं हि शोभनम्" इत्यादीनां परःशतानाम् अस्मदपकर्षसूचकानां वचनानामुत्पत्तिर्भवेत् , कथं वा कार्य्यतोऽपि पामराणामपि निर्गुणेषु कोकिलेष्वेवानुरागादरः, अस्मासु तु सकललोकोपकारिष्वपि रोषकषायितनयननिक्षेपः।

भद्रं तावद् भोः सकललोकतत्त्वनिष्णाताः, विचारयन्तु कथयन्तु च पृष्टाः निरपेक्षं भवन्तः, को नामायं प्रसाधितो भवतामभिमतोऽर्थः कोकिलहतकैः, को वा हन्त अस्माभिरेव अनुष्ठितः श्रीमतामपकारातिशयः, को नु खल्वस्माकम् अपराधः, येन हि साम्प्रतं जलधरसमये जर्ज्जरकण्ठेष्वपि भग्नस्वरेष्वपि तेष्वेव भवतां बहुमानादरः, न पुनस्तारतारम् अविच्छेदं गायत्स्वप्यस्मासु। अलमेतया कथया। विचार्य्यैव तावद् दृश्यताम्, किं नु कृतं भवतां कोकिलेन? न तावन्नयनसन्तर्पणम्—कस्य खलु तादृशे कालायसकर्कशकृष्णकलेवरे नयनानुरागः सम्भवतु। न चेतोविनोदनम्, उत्कलिकामेव स उत्पादयतीति भवन्त एव ब्रुवन्ति। न श्रवणानन्दथुः आकृतिदोषेणैव तस्यार्थस्य ग्रस्तत्वात्। "यत्राकृतिस्तत्र गुणा वसन्तीति" महाजनोक्तिः, यस्य आकृतिरेव नास्ति कथं तत्र गुणस्य लेशोऽपि निवसतु। न च किंचिद् ऐहिकं सुखं स सम्पादयति, निपुणं चिन्तयताऽप्यनुपलब्धेः। नापि आमुष्मिकं प्रमाणाभावात्, सर्वस्यैव संसारिणः सुखोदधिसन्तरणप्रसक्तेश्च। न वा पितृलोकानां मनागपि हितं साधयति, साधकाभावात्। अतो मूढतैव जनानां यत् ते कोकिलं तथा मानयन्ति। अतिमौढ्यं च वक्तव्यं कवीनाम्। यदेते अलौकिकत्वेन तथा वर्णयन्तः कोकिलम् (न पुनः सकृदप्यस्मान्) आत्मनामपि कुपथप्रवृत्तेः कार-

णीभूताः। न जानीमः को वा तत्र कोकिलस्वरेषु समास्वादितस्तैः रसः। तन्नूनं यथा पित्तदोषदूषितलोचनः पाण्डुरमपि शङ्खं पीतं पश्यति, इमेऽपि कविम्मन्याः कोकिलस्वरं तद्वदेव पीयूषधारां जानन्ति। सर्वथा धिगेतान् अतथावादिनः। येन हि जनाः तद्दर्शितमेव पन्थानमनुसृत्य "कर्कशस्वरा" इति अस्थान एव आशङ्कमानाः उपकारिणोप्यस्मान् प्रतिपदं विमानयन्ति। मूढाः खल्वेते न जानन्ति यत् तेषामेव कृते कण्ठस्फोटमपि अनपेक्षमाणाः रात्रिन्दिवमुच्चैरुच्चैस्तमां जलधरमाक्रन्दामः। जलादेव हि सम्पत्तिः शस्यस्य, यद् हि प्रधान साधनं जीवनस्य। तदेतस्य जीवनभूतस्य जलस्य प्रार्थनायां निरन्तरं नियुक्ता हन्त वयमेव तेषां विषदृष्टौ निपतिता इति यत्सत्यम नैतादृशः अकृतज्ञाः जातुचिद् दृष्टचरा द्रक्ष्यन्ते वा। दृश्यताम् इयं खलु युष्माकं प्रतिवेशिनी कृषीवलकुटुम्बिनी तदर्थमेव क्षणं हृदयानुरागेण जलधरं याचमानान् नः कथमहो भ्रूकुटीभीषणेन नयननिक्षेपेण सुदुःसहेन दुर्वादनिचयेन च तर्जयति। कः खलु इदानीमस्माकं गुणं विजानातु। न हि साम्प्रतं स रामो राजा, न वा तद्राज्यम्। यदीदानीं स खलु महात्मा वसिष्ठो जीवितोऽभविष्यत्, तदा बालोऽप्यज्ञास्यत्,—अस्ति कश्चिद् अस्माकं गुणो न वेति। किं किं कथयसि—"कृतं कृतं तवैतेन वाक्प्रपञ्चेन, किमुच्यते—पीयूषवर्षी खलु भवतां कण्ठस्वरः, तत्पार्श्वमपि नार्हन्ति वराकाः कलकण्ठाः, क्षणमपि तावद्विश्रम्यतां, बद्धोऽयमञ्जलिः कृतोऽयमनुनयः, धृतश्चायं निर्बन्ध इति"। मूढ, मनुष्यकीट, कविकुलापसद, कथमेवं निरपराधानप्यस्मानुपहससतस्ते 'सहस्रधा न विदीर्णमनया जिह्वया'। वद रे मूर्ख वद वद कीदृङ् नाम गुणवत्त्वं ते पिकानां, यत्तेषामालम्भनं वेदेषु विधीयते। वयं पुनः सुवाचो वा न वेति वेदः खलु कथयिष्यति। श्रूयतां किं स ब्रवीति—

"यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः

सर्गं तदेषां समृधेव पर्वा
यत् सुवाचो वदथनाध्यप्सु'' ॥ *

ऋग्वेद, ७म, १०३ सू, ५ऋ.

पश्य रे मूर्ख पश्य अस्मत्तोऽपि किमपि प्रार्थ्यमस्ति न वेति। कियदुच्यते महर्षेर्वसिष्ठस्यैव वचनेष्वेकं दृश्यताम्—

† ''गोमायुरदादजमायुरदात
पृश्निरदाद् हरितो नो वसूनि।
गवां मण्डूका ददत शतानि
सहस्रसावे प्रतिरन्त आयुः'' ॥ ऋग्वेद ७म, १०३ सू, १०ऋ.

महर्षिः वसिष्ठः किल यान् एवम् अस्तावीत्, त एवामी गुणवन्तो वयं साम्प्रतं प्राकृतैरपि जनैः तिरष्क्रियामहे। अथवा—''भाग्यं फलति सर्वत्रे'' त्यन्तरेण किमन्यद् ब्रूमस्तद् भवन्त एव कथयन्तु।

श्री चन्द्रचूडशर्म्मा।

---

* हे मण्डूका यदा शिष्या इव शिक्षकस्य युष्माकं मध्ये एकोऽन्यस्य वाचमनुकरोति, यदा च शोभनवाचो यूयं वृष्येदकोपरि प्लवमानाः शब्दं कुरुथ, तदा युष्माकं शरीरमविकलं भवतीत्यर्थः।

† गोवत् शब्दकारिणः, छागवत् शब्दकारिणः हरितवर्णाः पृश्निवर्णाश्च मण्डूकाः अस्मभ्यं धनानि प्रयच्छन्तु। मण्डूका वर्षासु अस्मभ्यम् अपरिमिता गाः प्रयच्छन्तु, प्रवर्द्धयन्तु च अस्मा जीवनम् इत्यर्थः।

———

प्रामाण्यं षोडशकलं क्षिप्तं देवेन भूतले
तत्र पंचदशांशं स्त्री गृण्हात्येकांशमन्यकः

माता पिता च यद्‌हस्ते दातुं पैकां न विश्वसेत्
तादृशे पुरुषाय स्त्री स्वं जीवं कथमर्पयेत

# "क्षेत्रस्वामिनः कृषीवलाः सर्वकारश्च"

ले० पं० पट्टाभिरामशास्त्री, शास्त्ररत्नाकरो विद्यासागरश्च
देववाणी परिषदध्यक्षः कलकत्ता

लक्ष्म्या भगिनी ज्येष्ठा। अनयोः परस्परं सौन्दर्ये विवादस्समजनि—कस्यास्सौन्दर्यमुत्कृष्टमिति। अकाण्डे तत्र नारदस्समाजगाम। तमुभे भगिन्यावपृच्छताम् आवयोर्मध्ये का सुन्दरीति भवता निर्णयः कार्य इति। नारदस्तु पतितो धर्मसंकटे। किञ्चिदिवालोच्योभे तेऽवदत्—किञ्चिद्दूरं गत्वा प्रतिनिवर्ततामिति। उभे अपि तथैव कृतवत्यौ। नारदः प्राह—मात ज्येष्ठे! गमनावसरे त्वदीयः पृष्ठभागस्सुन्दरः, मातर्लक्ष्मि! आगमनावसरे त्वदीयः पुरोभागस्सुन्दर इति।

तथैवास्माकं खाद्यमन्त्रिणः श्रीजैनस्योक्तिः सर्वात्मना कथामिमामनुकरोति। कदाचिन्मन्त्री कथयति—समानरूपेण क्षेत्राणां विभाजनं न सम्पादितम् क्षेत्रविषयकस्संस्कारो न कृतः, अतएव धान्यानामुत्पत्तिर्न वर्धते। कदाचिच्च कथयति—क्षेत्राणां समविभाजनरूपः क्षेत्रसंस्काररूपश्च प्रस्तावो राज्यसभासदस्यस्स्वीकृतः, अतएवाधिक्येन धान्यानामुत्पत्ति निरुद्धेति।

सत्यमेवातिसंकटे निपतितं भारतं वर्षम्। क्षेत्रस्वामिनोऽभिप्रयन्ति—धनव्ययेन दोहदादिकं क्षेत्रेषु सम्यक्प्रदाय धान्योत्पत्ति वर्द्धने यदि वयं यतेमहि नूनस्माभिस्तच्चतुर्थांशोऽपि न लब्धुं शक्यते। शतेंऽशानां षष्टेः कृषीवलेभ्यः प्रदानम्, अवशिष्टेषु चत्वारिंशदंशेषु सर्वकाराय संख्यातीतानां कराणां प्रदानम्। एवं सति क्षेत्रस्वामिनामस्माकं किमवशिष्येत? किमर्थमस्माभिर्धान्यानाभिवृद्धौ यतितव्यम्? धनागारे (बेंक) रूप्यकाणि निक्षिप्य वृद्धिजीविकां कुर्मो यदि ततोऽत्यधिकं धनमवाप्तुं शक्यते। अथवा जनपदान् परित्यज्य नगरेषु

गृहान् निर्माय भाटकरूपेण प्राज्यं धनं लब्धुं शक्यत इति। कृषीवला मन्यन्ते—परकीयेषु क्षेत्रेष्वस्माभिः किमिति परिश्रमः कर्तव्यः। यथा तथा वा क्रियमाणस्य परिश्रमस्य फलम् षष्टयंशा लभ्यन्त एव। अथवा पङ्क, आतपे, वृष्टौ च शरीरं क्लेशयित्वा ग्रामेषु किमिति परिश्रमः कर्तव्य, नगरेषु यन्त्रागारेषु परिश्रमे क्रियमाणे दैनन्दिनं रूप्यकत्रय चतुष्टयं वा लब्धुं शक्येत इति। एवं सति धान्यानामुत्पत्तिः कथं वर्धताम् ?

तदिदं सर्वकारेण क्रियमाणस्य वृथा चेष्टितस्यैव फलम्। कृषीवलानां क्षेत्रस्वामिनाञ्च यदैकमत्यं पूर्वमासीत् तत्सर्वात्मना सर्वकारस्यास्थाने कोलाहलोऽयं विघटयतीति प्रत्यक्षमिदं भारतीयानाम्। खाद्यमन्त्री बिडालं दुग्धश्चैकपदे रक्षितुमिच्छति। प्रधानमन्त्री नेहरूमहोदयश्च यदा यदा देशान्तरेभ्यो धान्यानां क्रयणं पश्यति, तदा तदा योजनासमिते निर्णयमावर्तयति। योजनासमितिरपि नवीनं किमपि कर्तव्यमिति प्रत्यहं किमपि किमपि करोति। क्षेत्रसंस्कार विषये योजनासमिते निर्णयस्सर्वथाऽनुपयुक्तोऽसामयिकश्चेति प्रायस्सर्वोऽपि भारतीयोऽनुभवति।

यस्मिन्देशे प्रान्ते वा न कोऽपि कौपीनं धारयति तत्र यदि कश्चित्त द्धारयेत् तर्हि स उपहसनीयो भवतीति चिन्तयन् खाद्यमन्त्री यस्मिन् प्रान्ते क्षेत्रसंस्कारः कार्यरूपेण परिणतस्तत्र नितान्तं धान्योत्पत्तेरवनतिं पश्यन्नपि सर्वकारस्यैव पाठमनुवदति। अन्यथा कौपीनधारी नोपहसनीयः खलु भवेत्।

देशवासिनो जनाः स्वातन्त्र्यमवाप्यापि प्रकृतिसिद्धानि पञ्च भूतान्युपभोक्तुं विना मूल्येन न शक्नुवन्तीति विदितचरमिदम्। तत्रापि सर्वकारः निमीलने उन्मीलने, क्षुते जृम्भायाम् जीवने मरणे, निद्रायां जागरणे च विविधान् करान् निर्माय जनेभ्यो गृह्णाति। युक्तं करग्रहणं सर्वकारस्य, किन्त्वेतादृशमसह्यं न जनानां परितोषाय भवति। देशान्तरं निदर्शयति सर्वकारः—देशान्तर इतोऽप्यधिकं करग्रहणं भवतीति। देशान्तरनिवासिनस्तावत्करं दातुं समर्थाः, तत्र तावानायो

वर्तते। अस्मद्देशवासिनस्तु द्रव्यांशे दरिद्रनारायणाः । कार्यालयेषु कार्यकर्तृणां सकाशादुचितं करग्रहणम्, यतोहि सर्वकारः, स्वातंत्र्येण कार्यसञ्चालका वा तावद्वेतनं तेभ्यो ददति। क्षेत्रेषु शीतमुष्णञ्च सहमानाः मनोरथातीतेन क्लेशेन स्वेदजलानि स्रावयन्तः, अशनाया-पिपासे चाविगणयन्तो योगिन इव ये तपस्विनः कृषीवलाः कर्षणा-दिना धान्यविवृद्धये परिश्राम्यन्ति, ये च तेषां योगक्षेमं वोढुं प्रतिक्षणं परिचिन्तयन्ति क्षेत्रस्वामिनः तेषां सकाशादत्यधिकं करग्रहणं धान्यो-त्पत्तिविवृद्धिं कथं परिकल्पयेत् इति मनसि चिंतयतामस्माकं विषयोऽयं नाधिरोहति। उपेयचिन्तनात्पूर्वमुपायपरिचिन्तनं मनीषिणां कार्यम् विविधा योजनाः पूर्वं निर्माय निश्चित्य वा ताः कार्यरूपेण परिणम-यितुं द्रव्यागमोपायः क इति चिंतनं न युक्तियुक्तमिव। यावता हस्त गतेन द्रव्येण लक्षितस्योपेयस्य सिद्धिर्भवेत् तावद्द्रव्यमेवादाय योजनाः कल्पनीयाः।

नास्मिन्विषये कस्यचन विप्रतिपत्तिः—यद्देशे साम्प्रतं धान्याना-मुत्पत्तिर्वर्धनीयेति। तदैवोत्पत्तिरियं परिवर्धेत, यदा हि क्षेत्रस्वामिभ्यः कृषीवलेभ्यश्च करग्रहणं शिथिलितं स्यात्। देशं निरुपद्रवं सुभिक्षंञ्च कर्तुं यदि मनसा कामयते सर्वकारस्तर्हि करादस्मात्क्षेत्रस्वामिनः कृषीवलाश्चोन्मोचयितव्या क्षेत्रसंस्कारप्रस्तावश्च स्थगनीयस्सर्वकारेण।

———

योग्यानां च कृते स्वर्गे सर्गादौ निर्मितेष्वपि
आसनेषु बहून्येव रिक्तान्यद्यापि सन्त्यहो॥
निष्किञ्चनः समाकांक्षेत् किञ्चिदेव हि नाधिकम्
किञ्चिल्लब्धं च येनासौ विश्वं भक्षितुमिच्छति।

शिक्षयेद् जननी वक्तुं जगत मौनं हि शिक्षयेत्

# देवतातत्त्वम् ।

देवतानामस्तित्त्वे किं मानम्, किं तासां स्वरूपम्, मानवानां ताभिः सह को नाम सम्बन्ध इत्यादिकं तर्केण निरूपयितुं प्रयतिष्ये ।

अत्र च देवताशब्देन प्राधान्यतो देवा देवयोनयश्च गन्धर्वादयो गृह्यन्ते, ये खलूपास्यन्त आर्य्यगृहस्थैः । उपास्यत्वेन निर्देशिता माता-पित्रादयो मनुष्याः, गवादयो जन्तवः, वटाश्वत्थादयो वृक्षाश्चापि देवताः । तासामस्तित्वादौ नास्ति कस्यापि विप्रतिपत्तिरिति न तासां निरूपणमत्र प्रस्तूयते । काली-दुर्गादयो नारायण-सूर्य्य-गणपत्यादयश्च देवताः । तत्र काश्चन प्रत्यहमेवोपास्यन्ते । अपरास्तु न तथा । परन्त्वत्र सर्वा एव निरूपणीयाः ।

१ । देवतास्तावद्द्विधा भिद्यन्ते, परापरभेदात् । परादेवता एकैव । सा खल्वीश्वर इति शिव इति कृष्ण इति राम इति दुर्गेति च बहुधा कथ्यते । सा हि सर्वस्य स्रष्ट्री, पात्री, संहर्त्री च । सा नित्यैश्वर्य्यादि-सम्पन्ना । तस्या अस्तित्वे प्रायः सर्व एवाविप्रतिपन्नाः ।

अपरदेवतानां जन्मवतीनां पुराणादिप्रतिपाद्यानामस्तित्वं सर्वैर्नाङ्गीक्रियते । अतस्तासामस्तित्वमेवादौ प्रमाणोपन्यासेन स्थाप्यते ।

तन्त्रपुराणाद्युक्तविधिनाऽनुष्ठीयमाने देवतापूजनरूपे स्वस्त्ययनादौ तत्फलं बहुशो भवत्येव । नैतत्काकतालीयन्यायसिद्धमिति वक्तव्यम् । यतो यथाविधिकृतकर्म्मणां फलं प्रायःसर्वत्रैवोपलभ्यते । काकतालीयन्यायसिद्धत्वे तु कदाप्युपलभ्येत, कदापि नोपलभ्येत । अस्य चोभयतः समानत्वेऽपि अस्ति कोऽपि विशेषः । दृश्यते हि भूयसां कर्म्मणां फलवत्त्वम्, अल्पीयसामेव फलव्यभिचारः । येषां फलव्यभिचारस्तेषां कुतोऽपि वैगुण्यात्तथात्वम् । अतः सत्यो देवताः, तासामाराधनं दृष्टफलाय कल्पत इति । प्रत्यक्षान्तं प्रमाणम्, प्रत्यक्ष-मूलं च । अत्र प्रत्यक्षेण फलेन तस्य कारणमदृष्टं देवताप्रसादरूप-

मनुमीयते। अन्यथा स्वस्त्ययनादेः फलदायित्वमुपपादयितुं न शक्यते। अत एव सन्त्येव देवताः। एतेनानुमानेन सम्यङ्निश्चयो न भवितुमर्हति, यतो न किमप्यनुमानं तथा साधु विद्यते, यथा व्यभिचाराशङ्काऽपि न स्यात्। एतत्त्वस्मन्मते सर्वानुमानसाधारणम्, निर्णयः कदापि नानुमानेन भवतीति। परदृष्टस्य श्रुतिबोधितस्य वा अनुमानमुपोद्बलकं भवतीति। देवताश्च तपस्विभिरूर्ध्वरेतोभिर्योगिभिश्च प्रत्यक्षेण दृश्यन्ते। तेषां प्रत्यक्षं श्रुतिश्च निर्णयायालम्। तर्कस्तु तत्सहकारिमात्रम्।

२। मानवान्ताः कीटादिका जीवाः सर्वैरपि स्वीक्रियन्ते। तेषां ज्ञानतः, शरीरादिसंस्थानादितश्च भूयान् भेद उपलभ्यते। तत्र मानवेषु ज्ञानादिकं परां काष्ठामाप्तम्। परन्तु तेषामपि ज्ञानं साविधिकमेव। यत्र च ज्ञानादेश्चरमा विश्रान्तिः, स ईश्वरः। ईश्वरः परो मानवश्चापरो ज्ञानी। तयोरन्तरेऽपि तारतम्येन परापरतयावस्थिता ज्ञानिनो भवितुमर्हन्ति। ते हि देवाः। मनुष्या एव जीवश्रेष्ठा इति न वयं प्रतीमः। तेभ्योऽपि श्रेयांसो जीवा देवा इति ब्रूमः।

३। कठिनस्तरलो वायवीय इथारीयश्चेति हि जडपदार्थस्य चत्वारो भेदाः ( Solid, Liquid, Gaseous and Ethereal ) अभ्युपेयन्त आधुनिकैर्वैज्ञानिकैः। मानवान्ताश्च जीवाः प्रायः कठिनवस्तु-घटितदेहाः। केचिच्चाणुवीक्षणगोचरा जीवाः न कठिनविग्रहाः, नापि तरलशरीराः। अनुमीयते यत्सन्ति जीवास्तरल देहाः, वायवीयदेहाः, इथारीयदेहाश्च। ते च जीवा नास्मदादिवज्जन्तवः ( Animals )। अतो विनाप्यम्लजनकं वायुम्, अत्युष्णेऽतिशीते च देशे तेषामवस्थानमविरुद्धम्। यतो जन्तूनामेव अम्लजनकादिकं विना जीवनं न सम्भवति न तु सर्वेषां जीवानाम्। अपि च योगिनः केचित् हरिदासादयो विनापि वायुं सुबहुकालमजीवन्निति वैदेशिकानामपि केषाञ्चित् प्रत्यक्षं जातम्। प्रमाणभूते च शास्त्रे चतुर्विधा अपि देहाः प्रसिद्धा एव। जलीयदेहा वायवीयदेहा इथारीयदेहाश्च काश्चन देवताः। अत्र इथारीयस्थाने च आग्नेया ग्राह्याः।

४। पृथिवी जीवपूर्णा। सा हि ग्रहाणामन्यतमः। पृथिव्यां च यावन्ति वस्तूनि यादृक्संस्थानानि चोपलभ्यन्ते, तानि प्रायोऽन्येष्वपि मङ्गलादिषु वर्त्तन्ते। अतस्तत्रापि जीवैभिर्भवितव्यम्। ते च जीवाः प्रायशो जन्तवो भवितुमर्हन्ति। अत्युष्णेषु अतिशीतेषु च ग्रहादिषु जन्तूनां सद्भावासम्भवेऽपि जीवावस्थानं न विरुद्धम्। श्रूयते च तेषु जीवावस्थानम्। अतस्तत्रापि जीवा वर्त्तन्त एव। तेषु केचन देवाः।

५। सौरं जगज्जीववत्। तारानक्षत्रादिश्च जीवावस्थानयोग्यो देशः। यदि तत्र जीवा न भवेयुस्तर्हीदमेव सिध्यत्—यदनन्तस्य ब्रह्माण्डस्य अतिक्षुद्रादपि क्षुद्रे देशभागे सौरजगत्येव चेतनावस्थानम्, अनन्तश्च देशो मरुस्थलीव जीवहीनः। नैतत्सम्भवति। अतस्तत्रापि जीवाः सन्ति। तेषु च केचन देवाः। श्रूयते च ध्रुवादिमण्डले जीवावस्थानम्।

६। सूर्य्यमण्डलं पृथिव्यादिकमाकर्षति। आकर्षणं च चेतनस्य दूरस्थस्यापि भवितुमर्हति। अचेतनस्य कथं तत्स्यात्। अतोऽस्ति सूर्य्यादीनामधिष्ठाता चेतनः। कार्य्यं चेतनाननुष्ठितं न भवति सूर्य्यादयश्च सूर्य्यमण्डलाधिष्ठातारः श्रूयन्ते। ते च देवाः। माध्याकर्षणेन सर्वव्याख्याने भवत्यपि तद्व्याख्यानमपेक्ष्यते। कथमेकः परमाणुरचेतनोऽपरं परमाणुमचेतनं दूरतोऽप्याकर्षेदित्यस्य प्रश्नस्य समीचीनमुत्तरमप्राप्य निउटनः (Newton) नितरां खिन्नमना आसीदिति तद्ग्रन्थादवगम्यते। हागेलाख्योऽपि (Hegel) क्रमविकासवादी (Evolutionist) शर्म्मण्यदेशपण्डितः परमाणूनां प्रत्येकं चेतनत्वमभ्युपगच्छति, इतरथाकर्षणानुपपत्तेः। अतः प्रतिभाति मे यत्सत्यमेवोक्तं रामायणे—"सत्येनार्कः प्रतपति, सत्येनाप्यायते शशीति"। अतएवास्ति सूर्य्यमण्डले सूर्य्यो देवतेति।

एतावता देवतानामस्तित्वं प्रमाणाविरुद्धमिति सुष्ठु प्रतिपादितम्। तासां सद्भावे निश्चयात्मिका प्रतीतिस्तु तपस्विनां योगिनामूर्द्ध्वरेतसां च प्रत्यक्षेण [illegible]। अपि [illegible] सौकर्यार्थम्

वृथारस्येव, स्वस्त्ययनादीनां फलवत्त्वस्यान्यथानुपपत्त्या तासामस्तित्वं स्वीकरणीयम् ।

अपरा देवता जीवा अनन्तभेदाः । ताश्च जीवत्वादेव रागद्वेषादिमत्यः, सोत्पत्तिकाः सान्ताश्च । जन्यादिकं तासां श्रूयते, मरणं च भावि । तासामपि पापपुण्यादिकमस्ति । ता अपि अस्मादिवत् संसारिण्यः । तास्वपि "अस्तीत्येके नायमस्तीति चैके" इत्यादिका वितर्काः सम्भवन्ति । जीवाश्च देवा न नित्यमेव देवाः । पूर्वं तेऽपि जीवान्तराण्यभूवन् । कर्म्मवशेन च कदापि पुनर्भवेयुर्वा । तेषामपि प्रेत्यभावोऽस्ति । देवताश्चिरतरं जीवन्त्यो बहूनामप्रत्ययमुत्पादयन्ति—कथं जीवाः सत्यो देवताः कल्पान्तरजीविन्यो भवेयुरिति । परन्तु अनुवीक्षणमात्रगोचरस्य पलमात्रजीविनः कीटाणोरस्माकं च जीवितकालयोर्भूयांसं भेदमालोकयतः कस्य तत्र संशयावकाशः । मानुषं जीवनं वर्णितकीटाणुजीवनात् त्रयोदशकोटिगुणाधिकम् । अतो न तेषां दीर्घतरं जीवनं तासां सद्भावमपाकरोति । मानवस्य कीटाणोश्च शक्त्योर्भेदमाकलयतः देवतानामतिमहत्यां शक्तावपि नाप्रत्ययो भवति । मानवानामिव देवतानामपि देहो विद्यत एव । अदेहा जीवा इति हि विप्रतिषिद्धमिदम् । सन्नपि तु तासां देहो न पार्थिवः स्थूलेन्द्रियग्राह्यः । कामविग्रहत्वमपि तासां श्रूयते । किञ्च तासां स्थितेऽपि कस्मिंश्चित् स्थिरे शरीरे, ताः कदाचिद् योगिन इव देहान्तरमपि धारयन्ति । ताश्च देवताः प्रायः शुद्धतरचित्ताः अस्माभिर्ज्ञातुमशक्यमपि पदार्थजातं जानन्ति । अस्मदप्रत्यक्षेष्वपि विषयेषु मानवानामपि शुद्धचेतसां दृश्यते ज्ञानसञ्चारः ! देवता अपि पापान्याचरन्ति । कृतेऽपि कदाचित्पापाचरणे इन्द्रादयोऽस्माकं भक्तिमर्हन्ति । यतः केवलं सर्वशुद्ध एव भक्त्या भवितव्यमिति नियमो नास्ति । "दृष्टं किमपि लोकेऽस्मिन् न निर्दोषं न निर्गुणम्" । तदिदं सर्वसंसारिसाधारणम् । यदि पापलेशसम्पर्कात् इन्द्रादीनामनुपास्यत्वम्, तर्हि न कोऽपि संसारी उपासनयोग्यः, यतः सर्वथा शुद्धस्य संसार एव न भवति । अत एवेदं विचार्यं संसारिणां केषाञ्चिदुपासनीयत्वमस्ति

न वेति। अस्तीति ब्रूमः। उपास्यन्ते हि मनुष्येष्वपि माता पिता आचार्य्यादयश्च। तेऽपि हि परमदेवतारूपा जीवा एव। अपि च राज्ञ उपासनेन धनादिकं भवति, विद्रोहाचरणेन च कारागृहवासः। अतस्तस्योपासना प्रत्यक्षमेव फलमावहति। इन्द्रादयोपि राजादिवन्निग्रहानुग्रहसमर्थाः। यथा वयं पापिनोऽपि क्षुद्रा अपि क्षुद्रतरां पिपीलिकां निग्रहीतुमनुग्रहीतुं च क्षमाः, तथेन्द्रादयोऽप्यस्मान्। अतस्तेषामप्युपासनं कर्तव्यमेव। नित्यशुद्धबुद्धमुक्तस्वभावस्योपासनं त्वस्माभिर्नैव कर्तुं शक्यते।

शाक्तवैष्णवादयो बहव उपासकभेदा दृश्यन्ते। तत्र शक्तिः परा देवता, अपरा वेति विचार्य्यमाणे, तस्याः परात्वमेवायाति। सा हि परस्या देवताया ईश्वरस्य शक्तिभूता। शक्तिशक्तिमतोश्च वस्तुतो भेदो नास्ति। असमर्था वयं न सर्वेश्वरं सर्वथाऽवबोद्धमुपासितुं वा शक्नुमः। अतस्तस्यानन्तान् भेदान् कल्पयित्वा तत्तद्भेदानुसारेणोपासना विधीयते। तथाचोक्तम्—"साधकानां हितार्थाय ब्रह्मणो रूपकल्पनेति"। अत्र च कल्पनापदेनासत्ख्यातिर्नैव बोध्यते। "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि" त्यत्र हि कल्पनापदं सृजेरर्थं गमयति। अत्रापि तथैव ब्रह्मा विष्णुः शिवश्चेत्येकस्येश्वरस्य उपाधिभेदात्त्रिधा नामविग्रहादिः ते च परा देवताः। सर्वेऽपि जीवाः स्फुलिङ्ग इवाग्नेरीश्वरस्यांशा इति सर्वेषामेवेश्वरबुध्योपासनात्फलं भवत्येव।

प्रसङ्गादिदमप्युच्यते। कैश्चित् शास्त्रानभिज्ञैर्वैदेशिकैर्भारतवर्षे देवताबहुत्वं समीक्ष्य भारतीया ईश्वरस्य बहुत्वं स्वीकुर्वन्तीति लिखितम्। ततश्च तेष्वाप्तबुद्धिमद्भिरस्माभिरपि उच्यते यद्वयं बह्वीश्वरवादिन इति। तत्रोच्यते, देवता देव इति च न 'God' इत्यथबोधकः, तस्य त्वर्थो ईश्वर इति परमेश्वर इति। स चैक एव। देवता देवो वा आङ्गलभाषाया Spirit इति Angel इति च कथ्यते। नापि देवोपासकाः पौत्तलिकाः। यतः प्रतिमासु देवानामधिष्ठानं भवति, तत्र चित्तं स्थिरीक्रियते। न तु प्रतिमा एव देवताः।

देवतातत्त्वे प्रबंधं रचयतो मे स्खलितानि क्षन्तुमर्हन्ति देवताः, ता हि तत्प्रीतये कृतस्य वस्तुनो गुणमेव गृह्णन्ति। उच्यते च "भक्तिमिच्छन्ति देवता" इति।

—श्रीवनमालि मिश्रः

# प्रकृतावद्भुतानि ।

दक्षिणमहाद्वीपः—दक्षिणध्रुवप्रदेशेषु सुविस्तीर्णो महाद्वीपः कश्चिदस्ति, ईदृशी विस्तीर्णा भूमिर्न क्वाप्युपलभ्यते। किन्तु विषयस्यास्य प्रालेयपूर्णतया नराणामत्र प्रवेशो दुर्घटः। पूर्वमिमे प्रदेशा न तथा शीता आसन् यथा सांप्रतमिति केषांचिदुष्णप्रदेशोचितानां जन्तुशवानां भूभिस्तरेषूपलम्भान्निश्चीयते। संप्रति आङ्ल-शर्मण्यादिदेशीया बाष्पनौका एषां देशानां विचयने व्यापृताः। केचिदंशा अस्य द्वीपस्य कैश्चिन्नौकानायकैरुपलब्धाः अपरेषामप्यंशानां पूर्णतयान्वेषणाय पाश्चात्या उद्योगभाजः।

रोमशहस्ती—सर्वाङ्गीणरोमकञ्चुकावरणाः केचन हस्तिनश्चिरंगतेषु समयेषु भूमौ चरन्ति स्म। केचिन्महाप्रमाणा विशालविषाणाश्चीनदेशस्योत्तरतो निवसन्तिस्मेति ज्ञायते। तत्र गतशतके रोमशहस्तिशवानां मरुसैकतेषु प्रालेयवर्षे निमग्नानां प्रालेयेन चिराय रक्षित-रोमचर्मादीनामुपलम्भात्। अपरेतु वामनाकृतयो रोमशहस्तिनो दक्षिणसागरस्य विषुवद्रेखासंनिहितेषु द्वीपेषूपलब्धाः। साम्प्रतं तु न कोपि रोमशोहस्ती कुत्रापि जीवन्नुपलभ्यते।

जलहस्तिनां बधः—अतिस्थूलाः स्थूलचर्माणो जलकरिणः आफ्रिकाप्रदेशेषु नदीषु साम्प्रतमुपलभ्यन्ते। पूर्वं भारतेप्येषामुपलम्भो निश्चीयते "करियादसामभिमुखान् करिणः" इति भारविः। "उन्मज्जकुञ्जरेन्द्रभसास्फालानुबन्धोद्धतः" इति च नागानन्दे श्रीहर्षदेवः। अतिभयंकरमेषां मुखम्। रात्रौ चरन्तीनां नौकानां महद्भयमेतेभ्यः। इमे हि मुखेन सरभसं नौका [illegible] जले निमज्जयन्ति।

आरट्टदेशीया व्याधाः संघीभूय प्रबलरज्जुबद्धैः भल्लैर्जले प्रक्षिप्तैर्यूथादेकं करिणं विध्यन्ति। भल्लं सरज्जुमपरान्ते बद्धकाष्ठखण्डं च विमुञ्चन्ति। सद्यः जलकरी विद्धाङ्गो निमज्जति काष्ठं च रज्जुबद्धं जले प्लवते। ततोऽपरा सुमहती रज्जुस्तीरयोः स्थितैः पुरुषैर्धृतैकैकान्ता नद्यास्तीरात्तीरं प्रसार्यते युक्त्या च किंचिच्छ्लथामिमां रज्जुं पूर्वरज्जुसंबद्धे काष्ठे समासज्ज्य तत्काष्ठं तीरभूमावानीय बलेन काष्ठसम्बद्धपूर्वरज्जुद्वारा करिणमाकर्षन्ति, भल्लाकर्षणव्यथया रज्ज्वा सहागतं च तं तीरस्थानभिहन्तुकामं दूराद्भल्लैर्बहुभिर्व्याधाः प्रहरन्ति, रुधिरनाशाच्च स मुहूर्तेन गतासुर्वज्राहतो नग इव निपतति।

**हस्तिनाशः**—आफ्रिकाप्रदेशे भारते च हस्तिन उपलभ्यन्ते तत्र भारतीयहस्त्यपेक्षया आफ्रिकाहस्तिनो गुरुतरा बलवत्तराश्च। अत्र जना अवपाताख्येषु गर्तेषु प्रलोभनादिना निपात्य हस्तिनो वशीकुर्वन्ति व्यापादयन्ति वा। आफ्रिकायां तु शतशो वन्याः प्रायः योजनमितं वनमण्डलं हस्तियूथाक्रान्तमध्यं वीक्ष्य पावकेन प्रज्वालयन्ति। प्रज्वलिते च सहसा वने चटचटाशब्दभीता गजा धूमान्धा निस्सर्तुमिच्छन्ति निर्गमनमार्गमन्विष्यान्विष्य रक्षोपायमपश्यन्तः पावकमार्गेणैव दह्यमानगात्रा-अपि निष्क्रामन्ति निष्क्रामन्तश्च वन्यानां भल्लैर्विनाश्यन्ते।

**महापक्षी**—यमकोटिप्रदेशेषु (न्यूज़ीलैण्डद्वीपे) पूर्वं कोपि महापक्षी गजादपि गुरुतरशरीर आसीत्। अस्यचास्थ्यादीनि साम्प्रतमपि गिरिगह्वरादिषु तन्निवासभूतेषूपलभ्यन्ते। अयं स्वबलेन अश्वादीनपि जन्तून्हन्तुं क्षम इति प्रतीयते अयं च पक्षहीन आसीत्। मोआइति तस्य देशीयं नाम।

**आकराङ्गाराः**—द्विविधा अङ्गाराः प्रसिद्धाः केचिद्दग्धकाष्ठसंभूताः अपरे खनिजाः पाषाणाङ्गारत्वेन प्रसिद्धाः। तत्र पाषाणाङ्गाराअपि पूर्वं काष्ठरूपा एवासन्। कालवशाद्वनेषु पृथिवीस्तरैर्निमज्जितेषु वृक्षशाखादीनां वर्षायुतानन्तरं कृष्णपाषाणरूपत्वं जातम्।

**वनमानुषस्य कुटीरः**—वनमानुषाः कपिजातीयाः केवलं ते मनु-

ष्यवदुत्थाय पद्भ्यां गन्तुं शक्नुवन्ति आकारेण च किञ्चिन्मनुष्यसदृशाः

* "रोधांसि निघ्नन्नवपातमग्नः करीव वन्यः परुषं ररास" इति रघौ। अवपातो गजावतारस्थले हृदादितटे तृणच्छन्नो गर्तविशेषः।

तेषां च 'गोरिला' 'चिंपाजी' 'गिबन्' इत्यादयो बहवो भेदाः। प्रायस्ते शाखामृगाः वृक्षेषु निवसन्ति। चिंपाज़ीनामका वनमानुषास्तु शबरादिवत्कुटीरं काष्ठादिभिर्निर्माय तत्र निवसन्ति। नातिचित्रमेतत् बीवरनामकाः पशवोहि दीर्घिकाः सरांसि च रचयन्ति। तत्र सेतुं विधाय सुन्दराणि उभयतोद्वाराणि शत्रुदुर्गमाणि गवाक्षवन्ति गृहाणि निर्माय च निवसन्ति।

**पिपीलिकानां गवाश्वं दासीदासं च**—कीटेषु पिपीलिकाः शलभेषु च मधुमक्षिका अतिबुद्धिमत्यः। आसां गृहाणि गृहशासनादिव्यवस्था चाश्चर्यकारिणी। तत्र मधुमक्षिकाणां विषयेऽन्यत्र किंचिद्वक्ष्यते पिपीलिकास्तु ततोप्यद्भुताचाराः। इमा हि सेनां सुमहतीं रचयित्वा सेनापतींश्च नियुज्य पर-दलमाक्रामन्ति विजित्यगृहीतांश्च जन्तून् दासवद्रक्षन्ति। कदाचिदश्वानामिव तेषां पृष्ठे भ्रमन्ति, कदाचिद्वन्दीकृत्य गृहएव स्थापयन्ति। ततोपि चित्रतरं यदेताभिरस्माभिरिव दुग्धार्थं गावः पालयन्ते। एत हि वृक्षयूका बन्दीकृत्य वल्मीकमध्यस्थं स्वगृहं नीत्वा तत्र पालयन्ति। समये समये च श्मश्रुभ्यां तद्दुग्धमाकृष्य पिबन्ति।

---

अन्योन्यं हृद्गतं प्रेम ज्ञापनीयं कथं मिथः
पक्षिणश्चुम्बनेनैतदादौ प्रादर्शयन् नृणाम्

# कवि काव्य परिचयः

## पाणिनिः

रामायणप्रणेता वाल्मीकिः, विष्णुपुराणप्रणेता पराशरः, भारतप्रणेता पाराशर्यः कृष्णद्वैपायनः, एतेभ्योऽर्वाचीनाः कालिदासाच्च प्राचीनाः बहवः कवयो बभूवुः, तेषां प्रबन्धाश्च काश्मीरकविदुषां क्षेमेन्द्रादीनां सुविदिता बभूवुः। किं बहुना वङ्गीयो नातिप्राचीनः साहित्यदर्पणकारः कविराजविश्वनाथोऽपि दृष्टवानमीषां कांश्चित्प्रबन्धानिति प्रतीयते। तथापि द्वित्रेषु गत-शतकेषु तादृशी दुरवस्था विद्याभ्यासस्य जाता, येन ग्रन्थांशान्नात्युपयुक्तान्वादबहुलानवलम्ब्य तत्परिष्कारात्मकेषु पत्रिकादिषु मुधा श्रमं विदधानैर्जनैस्तथोपेक्षिताः परार्द्ध्या अपि निबन्धाः, येन साम्प्रतं बहूनां कवीनां शास्त्रकृतां च नामापि लुप्तप्रायम्। न साम्प्रतं भासस्य स्वप्नवासवाद्यतिरिक्तानि नाटकान्युपलभ्यन्ते, न रामिलसौमिलयोः शूद्रककथा प्राप्यते। क्वाधुना पाणिनेः पातालविजयकाव्यम्, क्व वा वररुचेः कण्ठाभरणम्। किमभून्मेण्ठप्रणीतस्य हयग्रीववधस्य, किंवा जातं धर्मकीर्त्तेर्महाप्रबन्धानाम्। धन्यास्ते सूक्तसंग्रहकारा, यत्प्रभावादधुना नामाप्येषां महाकवीनां श्रूयते। मोहान्धकूपकुहरादाच्छिद्य वैदेशिकैरुद्धृतेभ्यः सूक्तिमुक्तावली-सदुक्तिकर्णामृत-शार्ङ्गधरपद्धति-सुभाषितावल्यादि-संग्रहग्रन्थेभ्यः पाणिनि-भास-मेण्ठादिमहाकवीनां विषये किञ्चिद्विदितमास्ते साम्प्रतम्। तत्र वैयाकरणत्वेन सुप्रसिद्धो दाक्षीपुत्रः पाणिनिः पातालविजयकाव्यं जाम्बवतीविजयापराख्यं प्रणिनायेति—

"स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम्" ॥ इति

राजेशेखरश्लोकादवगम्यते। तथा चान्यस्यापि कस्यचित्पद्यम्—

"सुबन्धौ भक्तिर्नः, क इह रघुकारे न रमते,
धृतिर्दाक्षीपुत्रे, हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः शूरः, प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते"॥

किं च सुवृत्ततिलके केषां कवीनां कानि छन्दांसि रम्यतमानीति प्रस्तावे भारवेर्वंशस्थं, राजशेखरस्य शार्दूलविक्रीडितं, भवभूतेः शिखरिणी, पाणिनेश्चोपजातिरिति क्षेमेन्द्रः। अत्र चोपजातिशब्देन सुप्रसिद्धाया इन्द्रवज्रोपेन्द्रवज्राचरणमिश्रणात्मिकाया उपजातेर्ग्रहणम्। पाणिनेः पाटलिपुत्रे भगवतो वर्षस्य सन्निधावध्ययनं तपसा प्रसादितान्महेश्वरादक्षरसमाम्नायप्राप्तिश्च बृहत्कथायां कथापीठलम्बके दृश्यते। यत्तु न वैयाकरणेन पाणिनिना प्रणीतं जाम्बवतीविजयकाव्यं, किन्तु कवि- पाणिनिः प्रसिद्धपाणिनेर्भिन्न एव कश्चित्, नहि वैयाकरणमुख्यो रुद्रटटीकाकृता नेमिसाधुनाऽन्यैश्च प्रदर्शितानि "सन्ध्यावधूं गृह्येत्यादि" च्युतसंस्कृतीनि पदानि प्रयुञ्जीतेति केचिदाधुनिकाः। न तत्सयुक्तिकम्, न हि नवप्रणीतं स्वकीयमेव व्याकरणं पाणिनिरनुसर्तुं शशाक। रामायण-भारतादिपरिशीलनात् करामलकीभूतानि ऐन्द्रशाकटायनादिव्याकरणानुसारीणि पदानि सततमबोधपूर्वमपि तस्य हृदये स्फुरन्ति स्मेतितेषां तद्ग्रन्थे दर्शनं सुसङ्गतमेव। अस्य च विरलाः सूक्तयः संग्रहेषूपलभ्यन्ते। तासाञ्चातिरमणीयत्वात् कवेः शैलीं प्रदर्शयितुमत्र निवेशः क्रियते—

———

वक्तुं प्रयत्नः कार्यो न तत्तु स्वाभाविकं नृणाम्
किन्तु मौनं समास्थातुं काले यत्नो महान् भवेत्

## पाणिनेः श्लोकाः ।

अथासमादास्तमनिन्द्यतेजा जनस्य दूरोज्झितमृत्युभीतेः ।
उत्पत्तिमद्वस्तु विनाश्यवश्यं यथाहमित्येवमिवोपदेष्टुम् ॥
२ असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः ।
घर्मालसाङ्गीं मधुराणि कूजन्संवीजते पक्षपुटेन कान्ताम् ॥
३ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्धानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार ॥ *
४ गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः ।
अपश्यती † वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति ॥
५ सरोरुहाक्षीणि निमीलयन्त्या रवौ गते साधु कृतं नलिन्या ।
अक्ष्णां हि दृष्ट्वापि जगत्समस्तं फलं प्रियालोकनमेकमेव ॥
६ निरीक्ष्य ‡ विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किन्नु वान्तश्चन्द्रोयमित्यार्ततरं रराम ॥
७ शुद्धस्वभावान्यपि संहतानि निनाय भेदं कुमुदानि चन्द्रः ।
अवाप्य वृद्धिं मलिनान्तरात्मा जडो भवेत्कस्य गुणाय वक्रः ॥
८ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोपि रागाद्गलितं न लक्षितम् ॥
९ प्रकाश्य लोकान्भगवान्स्वतेजसा प्रभादरिद्रः सवितापि जायते ।
अहो चला श्रीर्बलमानदाप्यहो स्पृशन्ति सर्वं हि दशा*विपर्यये ॥
१० क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीह जलदाः ॥

११ पाणौ शोणतले तनूदरि दरक्षामा कपोलस्थली
विन्यस्ताञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दली-
मुन्मीलन्नवमालतीपरिमलः किं तेन विस्मर्यते ॥

१२ उद्बुद्धेभ्यः सुदूरं घनजनिततमःपूरितेषु द्रुमेषु
प्रोद्ग्रीवं पश्य पादद्वयनमितभुवः श्रेणयः फेरवाणाम् ।
उल्कालोकैः स्फुरद्भिर्निजवदनदरीसर्पिभिर्वीक्षितेभ्य-
श्चोतत्सान्द्रं वसाम्भः क्वथितशववपुर्मण्डलेभ्यः पिबन्ति ॥

१३ कल्हारस्पर्शगर्भैः शिशिरपरिचयात्कान्तिमद्भिः कराग्रै-
श्चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः ।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिष्यन्दिनीभि-
र्दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशासखीभिः ।

१४ चञ्चत्पक्षाभिघातं ज्वलितहुतवहप्रौढधाम्नश्चितायाः
क्रीडाढ्याकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण ।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्द्धदग्धं
पश्यान्तः प्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रवृद्धः ॥

१५ विलोक्य संगमे राग पश्चिमाया विवस्वतः ।
कृतं कृष्णमुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥

* दर्पणे धृतोऽयं श्लोकः । † च्युतसंस्कृतिः, "शपश्यनोर्नित्यमित्युक्तेः" ।

‡ कुवलयानन्दे दृश्यतेऽयं शोकः ।

* दशाः दुर्गतयः स्पृशन्तीत्यर्थः ।

---

नानातीर्थ क्षेत्र यात्रालोक संचारकारिणाम्
असत्यं भाषितुं धैर्य मधिकारश्च लभ्यते ॥

पिहिते तु मुखे जातु प्रविशन्ति न मक्षिकाः

Regd. No. B. 7171

## मधुरवाणी नियमावली

ये पंच नवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदाकदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रहीयते। अवलोकनार्थं संचिका अपेक्षमाणैः अष्टोणक पोष्टटिकीट प्रेषणं कार्यम ।

व्हि॰ पी॰ द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत प्रकाश्येरन्। अशुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः। सरलतमानां लेखानां प्रथमप्रोशस्त्यं प्रदीयते ।

**Book-Post**

To,

289 The Registrar Gurukula University
Post: Gurukuala Kangri
Dist: Shaharanapura

If addressee is not found
please return to sender.

पंढरीनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणीकार्यालय, गदग (कर्नाटक)

Printed at the New Gadag Printery Gadag, by P...
and Published by Pandharinathacharya Galagali &...

